सुबोधिनीव्याख्यासहित

# सिद्धान्तमुक्तावली

उपमानखण्डान्तपूर्वभागः ।




सुबोधिनीव्याख्याकारः

न्यायवेदान्तविशा[illegible] बुलसु अप्पन्नशास्त्री ।

ॐ




भुवनेश्वर्यै नमः

सुबोधिनीव्याख्या सहित

श्री विश्वनाथपञ्चाननभट्टाचार्यविरचित

# न्यायसिद्धान्तमुक्तावली

पूर्वभाग उपमानखण्डान्तः ।

---

सुबोधिनी व्याख्याकर्ता

न्यायवेदान्त विद्यापारीणः बुलुसुअप्पन्नशास्त्री

---

१९३६

---



मूल्यम् रू १-४-०

Printed at the Sarada Mudranalayam. Bhatnavilli.
Publishers:- (1) B- Venkata sastry,
(2) B- Mitra satyanarayana.

एतद्ग्रन्थप्राप्यस्थानम्ः—

सनातनमतप्रचारिणीकार्यालयं,
भदनविल्लि,
अमलापुरं तालूका, तूर्पुगोदावरि जिल्ला ॥

श्रीशारदाम्बायै नमः ।

# भू मि का

अयि संस्कृतवाङ्मयाभिमानिनो महाशयाः!

विदितमेवैतद्व्याकरणस्य यथा पदपदार्थप्रकाशनेन निखिलशास्त्रोपकारकत्वं तथा तर्कशास्त्रस्यापि वैशद्येन निखिलप्रपञ्चास्थितपदार्थतत्त्वनिर्णयद्वारा सर्वशास्त्रोपकारकत्वं निःश्रेयसहेतुत्वं चेति ।

इद ञ्च शास्त्रं गौतम कणादाभ्यां प्रणीतं सूत्ररूपेण दीप्यमानं गौतमीयं, काणाद मिति च प्रख्याति मभजत ।

तत्र च पदार्थान् षोडशधा परिगणयतो गौतमीया ल्लाघवं पुरस्कृत्य सप्तधा परिगणयत्काणादमेवाल्पादरास्पदतया गृह्यते विद्वद्भिः । अत एवोच्यते :—

"काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्"

"प्रमाणप्रमेय=पदार्थतत्त्वज्ञाना न्निःश्रेयसाधिगमः" चेत्यभियुक्तैः॥

अस्यच शास्त्रस्य पदार्था एव विषयाः' तद्ज्ञानं प्रयोजनं तेनच ज्ञानेनातिविस्तृतस्यापि पदार्थजातस्यानुगमेन प्रतिपादनशक्तिः, अतिसूक्ष्मस्यापि पदार्थस्य अत्यन्तविस्तारीकरणेन स्फुटतया उपपादनशक्तिः, परमतनिराकरणे कुशलता, तया चार्वाकादि नास्तिकमतानिराकरणेन वैदिकमतस्थापनशक्तिः, पदार्थतत्त्वज्ञानतः आत्मानात्मविवेकेन मिथ्याज्ञाननिवृत्त्या दुःखध्वंसरूपपरमपुरुषार्थमोक्षसिद्धिः, सर्वविषयविमर्शनशक्तिरित्येव मादीनि बहूनि प्रयोजनान्युपलभ्यन्ते । सम्बन्धश्चास्य विषयेण प्रतिपाद्यप्रतिपादकभावः । तज्जिज्ञासुश्चाधिकारी भवति व्याकरणादिवेदवास्याध्ययनमप्यवश्यकर्तव्य मेव द्विजन्मनाम् ।

"तपो दमो दया दानं सत्यं धर्म श्श्रुतं घृणा ।
विद्या विज्ञान मास्तिक्य मेतत् ब्राह्मणलक्षणम्"

इत्यादि स्मृत्या विद्याविज्ञान स्यावश्यत्वस्मरणात् ।

"अङ्गानि वेदा श्चत्वारो मीमांसान्यायविस्तरः ।
पुराणं धर्मशास्त्रञ्च विद्याह्येता श्चतुर्दश"

इति स्मृतौ च न्यायविस्तरपदेन तर्कशास्त्रं परिगृह्यते ।

पुराणन्यायमीमांसा धर्मशास्त्रांगमिश्रिताः ।
वेदाःस्थानानि विद्यानां धर्मस्य च चतुर्दश"

इति स्मृति रप्युक्तार्थं बोधयति ।

एतच्च सूत्ररूप मतिगूढं दुरवगाहमित्यालोच्य मधुरानाथः, जगदीशः, भवानन्दः, गदाधर इत्येते महात्मानः प्रत्यक्षखण्डे अनुमानखण्डे, शब्दखण्डे च बहून् ग्रन्थान् प्राणैषुः ।

एव मपि तेषु ग्रन्थेषु निखिलजनानां प्रवेशं दुष्करं मन्वानै रन्नंभट्टादिभिः तर्कसंग्रहादि प्रकरणा न्यक्रियन्त ।

तत्रापि श्रीविश्वनाथपञ्चाननभट्टाचार्यप्रणीता कारिकावली प्रामुख्य मभजत ।

तस्या श्चाव्याख्यातायाः दुरवगाहत्वं स्वयमेवालोच्य शिष्यजनदयाव्शंवदेन विश्वनाथपञ्चाननभट्टाचार्येण मुक्तावलीति व्याख्या निरमायि ।

अस्या अपि दुरवगाहत्व मालोच्य दिनकरादिभिः दिनकरी रामरुद्रीयादि विस्तृतटीकाः प्रणीताः तासा मप्याधुनिकछात्रजन (साधारणेन) दुर्बोधत्व मालोच्य शिरोमण्यादि परीक्षार्थं यतमानानां मुक्तावल्यध्येतॄणां तत्र तत्र महान्तं क्लेश मनुभवतां सुबोध मिच्छद्भिः ग्रन्थरचनाजन्यं बह्वायासं सहमानैः, पीठिकापुरीसंस्थानविद्वत्परिषदि तर्कवेदान्तोभयशास्त्रयो रुत्तम कक्ष्यया मुत्तीर्णैः सुमेधाभिः श्रीमद्भिः बुलुसूपनामकै रप्पन्न (पेरेश्वर) शास्त्रिभिः विरचितेयं सुबोधिन्यभिख्या व्याख्या ।



यस्यां व्यबध्यत सर्वजनैः सुग्रहा सरला शैली, यस्यां च पाठकतारीति मनुकुर्वाणा लक्ष्येषु प्रतिपदं लक्षणवाक्यानां योजना कारी ।

व्यमुच्यन्तच दुरवगाहग्रन्थ ग्रन्थयः, व्यत्रियन्ते च दुर्ग्रहा मतभेदाः ।

अत एवह्यस्य नेतरग्रन्थगतार्थता । किं बहुना ! एत द्व्याख्यायाः परिशीलनं कुर्वता मुपाध्यायानां मंदा नपि शिष्यान् दुरवगाहा नपि विषया ननायासे नैव ग्राहयितुं शक्ति रुद्भवेत् । अतिमन्दा अपि शिष्या एत द्व्याख्या मधीयानाः दुर्ग्रहा नपि विषया ननायासेनैव गृह्णीयु रिति च विश्वसिमि । तस्मादाशास्महेयं ग्रन्थः पठनपाठनादिना प्रचार मुपगच्छत्विति शम् ॥

जयन्ति भगीरथशास्त्री ।

[व्याकरणाचार्यः]

भट्नविल्लि

अमलापुरं ताल्लुका

दिः- १५-१-१९३६ ॥

--=.०.=--

श्रीः

# पंडिताभिप्रायः

श्रीम त्परमहंसपरिव्राजकाचार्यवर्य श्रीम च्छङ्करभगव त्पादप्रतिष्ठित श्री काञ्चीकामकोटिपीठाधिप जगद्गुरु श्रीम च्चन्द्रशेखरेन्द्र सरस्वती श्रीपादैः

अस्मदत्यन्तप्रियशिष्यस्य बुलुसु अप्पन्नशास्त्रिणः सर्वाभि ष्टसिद्ध्यै क्रियते नारायणस्मृतिः।

भवद्विरचितां सुबोधिन्याख्यां मुक्तावलीव्याख्यां भवन्मुखा च्छ्रुत्वा सुबोधविषयजातस्य अध्येतृगा मत्यन्तोपयोगिनो ऽस्य ग्र न्थस्य प्रणेत्रा भवता बहूपकृतं लोकस्येति नितरां सन्तुष्यामः।

एवं सद्व्यवसायवान् भवान् तत्र तत्राद्वैतादि शास्त्रप्रचारणं कुर्वन् श्री चन्द्रमौळीशकृपया श्रेयां स्यवाप्नुया दित्याशास्महे॥

मुखाम् – हैदराबाद
भावनामसं – अधिकवैशाख } नारायणस्मृतिः॥
शु – ९ – बुधवासरे

—:०:—



श्रीः।

श्री पीठिकापुरसंस्थानविद्वत्परिषन्न्यायशास्त्रपरी क्षकानां द्वैतिकरींद्रकुम्भदलनप्रोद्दृप्तपंचाननानां ब्र॥ वे॥ मू॥ श्रीपाद लक्ष्मीनृसिंहशास्त्रिणा मभिप्रायः॥

निश्चप्रच मिदं विपश्चिदपश्चिमानां न्यायशास्त्रालंका रभूत श्श्रीविश्वनाथपंचाननभट्टाचार्यविरचितः सिद्धांतमु क्तावलीनामकः प्रबंधविशेषः शिरोमणिकक्ष्यासु सर्वासु नि विष्ट इति दिनकरप्रभृतिभि र्व्याख्यात इति च।

तादृशव्याख्यां दुरूहां मत्वा ऽध्येतॄणा मनायासबो धार्थं श्रीमद्भिः बुलुसूपनामकाप्पन्नशास्त्रिभिः न्यायवेदांत कुशलैः सुबोधिनीनामकव्याख्याविशेष स्ताव न्निर्मितः। स चा यं ग्रंथविशेष आमूलाग्रं मया दृष्टो ऽनुमोदित श्च।

ध्रुव मने नाधीतेन ग्रंथविशेषेण सर्वेऽपि शिरोमणिक क्ष्यापरीक्षार्थिनः, इतरे ऽध्येतार श्च कृतकृत्या भविष्यंती ति मन्ये॥ इति॥

श्रीपाद लक्ष्मीनृसिंहशास्त्री।

प्र – पीठिकापुरम्॥
दि – १० – ९ – ३४

—:०:—

श्रीः।

श्रीपीठिकापुरसंस्थानविद्वत्परिषदद्वैतवेदान्त शास्त्रपरीक्षकानां वेदान्तविद्यानिध्यादि बिरुदविराजमानानां ब्र॥ वे॥ देन्दुकूरि नृसिंहशास्त्रिणा मभिप्रायः॥

विदित मेव खलु सिद्धान्तमुक्तावलीनामक स्तर्कशास्त्रालंकारभूतो महामहोपाध्याय विश्वनाथपंचानन भट्टाचार्य विरचितो ग्रन्थविशेषो ऽस्तीति सर्वेषा मपि विदुषां॥

स चा यं ग्रन्थविशेष इदानीन्तन शिरोमणिनामकपरीक्षाकक्ष्यासु सर्वा स्वप्यवश्याध्येतव्यत्वेन निविष्ट इति च। व्याख्यात श्चा यं दिनकरप्रभृतिभिः। तदत्यन्तदुर्बोधता मालक्ष्य तस्या स्य ग्रन्थविशेष स्येदानींतन छात्रणा मध्येतॄणां सुखेन लक्ष्यलक्षणसमन्वयप्रबोधार्थं सुबोधिनीनामको व्याख्याविशेषः श्रीमद्भिः बुलुसूपनामकाप्पन्नशास्त्रिभिः न्यायवेदांतविद्भिः निरमायि॥

दृष्ट श्चायं ग्रंथविशेषो ऽस्माभि रामूलाग्रं। अनेन व्याख्याविशेषे णान्यथा सिद्धा श्चेतरे सुखार्थप्रबोधका ग्रंथविशेषा। अधीते नानेन ग्रंथविशेषे णानधीता अपि प्रकरणविशेषाः अधीतप्राया भवंत्येवेति मन्यामहे॥

देंदुकूरि नृसिंहशास्त्री।

दि॥ १०...९...३४॥

ब्र॥ पीठिकापुरम्।

---



श्रीः

ब्र॥ व॥ श्रीशोऽव्यात्॥

तार्किकदन्तिपंचास्यानां धूळिपाळसूर्यनारायणशास्त्रिणा मभिप्रायः।

विदितमेव खलु सर्वेषां न्यायविदुषां श्रीविश्वनाथपंचाननभट्टाचार्यविरचितः सिद्धान्तमुक्तावलीनामकः न्यायशास्त्रीयप्रकरणविशेषो ऽध्येतॄणा मत्यन्तोपकारीति, अस्योपरि विरचितानां दिनकरीयादि टीकाविशेषाणां दुरवगाहत्वा त्तत्सहायेन शिष्यैः सुखमयं नावबुध्यत इति च।

एत त्सर्वं मालोच्य श्रीमद्भिः न्यायवेदांतविद्यापारीणैः बुलुसूपनामकाप्पन्नशास्त्रिभिः सुबोधिनीनामकः कश्चन टीकाविशेषः शिष्योपकाराय निरमायि॥

सचाय मामूलाग्रं मया विचारितः नून मस्याध्ययनेन न्यायशास्त्रव्युत्पित्सवः सर्वेऽपि विशेषेण कृतार्था भविष्यंतीति मन्ये॥

इति।

धूळिपाळसूर्यनारायणशास्त्री

कोव्वूरुग्रामनिवासी।

दि - १९-४-१९३६

श्रीः

ब्र ॥ वे ॥ सर्वतन्त्रस्वतन्त्राणां गोर्ति विश्वनाथदीक्षितानामभिप्रायः ॥

विदितचरमेवैत दभिरूपशेखराणां विश्वनाथपञ्चाननभट्टाचार्यविरचित न्यायसिद्धान्तनामकग्रन्थरत्नं सर्वोत्कृष्टतया वरीवर्तीति ।

तस्या श्च मुक्तावल्याः अध्येतॄणा मतिदुरवगाहता माकलय्या स्वदन्तेवासिना न्यायवेदांतकुशलेन बुलुसूपनामकाप्पन्नशास्त्रिणा सर्वत्र लक्ष्यलक्षणसमन्वयपुरस्सरं विबुधमनोहारिणी सुबोधिन्याख्या व्याख्या अन्वर्थसंज्ञिका व्यरचि ॥

सेयं व्याख्या पठनपाठनादिभि रुच्चैः पद मारोह त्विव्याशास्महे ॥

इति
गोर्ति विश्वनाथदीक्षितः ।
भद्रनाविल्लि ॥

---



श्रीः

पेरूरुग्रामवास्तव्यास्थानविदुषां न्यायमीमांसालङ्कारशास्त्रपण्डितानां ब्र–वे– मरुवाडोपनामकशम्भन्नशास्त्रिणां विमर्शनपत्रम् ॥

भो भोः! विज्ञातपूर्व मेवैत दात्रभवतां सर्वेषामेव विदुषां यत्परमकारुणिकः शिष्यजनवशंवदः सर्वतन्त्रस्वतन्त्रः श्रीविश्वनाथपञ्चाननभट्टाचार्यो न्यायशास्त्रपदार्थतत्वजिज्ञासूना मत्यन्तोपकाराय न्यायसिद्धांतमुक्तावलीं प्रणिनायेति ॥

आधुनिकानां शिरोमण्यादिपरीक्षार्थं यतमानाना मन्तेवासिनां तद्व्याख्यानाध्ययनक्लेशासहिष्णुतया तेषामत्यन्तसुखबोधाय सुमनोजनमनोरञ्जनाय च न्यायवेदांतशास्त्रपारंगतैः बुलुसूपनामकाप्पन्नशास्त्रिभिः सुबोधिन्याख्या काचन विवृतिः विरचिता। सा चामूलचूड मस्माभि र्विमृश्य विलोकिता। अन्तेवासिनां सुबोधिनीं सुबोधिनीत्यन्वर्थनामधेयवतीं मन्यामहे। तस्मा दतिसमीचीनोयं ग्रंथ इति सुधियो विदां कुर्वंतु ।

इति विज्ञापयति विविधबुधजनविधेयो न्यायमीमांसालङ्कारशास्त्रपण्डितो मरुवाडोपनामकशम्भन्नशास्त्री पेरूरुग्रामवास्तव्यास्थानसंस्थितः ॥

---

## विज्ञापना

विद्वन्महाशयाः !

अयि! विदितचरमेवैतत्तत्रभवतां शिरोमण्यादिपरीक्षाग्रन्था मधिजिगांसमानानां अद्यत्वे पाठ्यग्रन्थेषु सिद्धांतमुक्तावलीनामको ग्रन्थः प्राधान्य मधिगच्छतीति । मन्ये च बहुधा तत्र सारवत्ता मा कलय्यैव नवीनैः विद्वद्वरेण्यैः गीर्वाणविद्याशाखाधिकारिभिः निवेशितो ऽयं ग्रन्थः परीक्षाकक्ष्यासु इति ।

अस्य च ग्रन्थस्य बहुषु स्थलेषु दुरवगाहविषयव्याप्तत्वेन तत्पठने महांतं क्लेश मनुभवतां इदानींतनछात्राणां क्लेशं प्रत्यक्षीकुर्वद्भिः महबूबुकालेजीसास्कृतोपाध्यायैः साहित्यशिरोमणिबिरुदांकितै रुभयभाषाकविभिः ब्र॥ वे॥ सान्निधानं सूर्यनारायणशास्त्रिभि रस्मान्मित्रवर्यैः प्रेरित एतद्ग्रन्थव्याख्याकरणे, यथेदानींतनछात्राणां निगूढनिखिलपदार्थज्ञानं तथा यथामति व्यरचयमिमां सुबोधिन्याख्या व्याख्याम् ।

गुणदोषौ बुधोगृह्णन्निन्दुक्ष्वेळा विवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कंठे नियच्छति"

इति न्याय मनुसृत्यात्रत्यपुनरुक्तिदुरुक्त्यधिकोक्तिन्यूनोक्तिरूपदोषान् कण्ठे संस्थभ्य गुणा नेव बुधा गृह्णीयु रिति विश्वसिमि ।

परन्तु तान् दोषान् लेखनपत्रमुखेन मह्यं यदि प्रकटयेयुः द्वितीयमुद्रणे तान् संशोध्य प्रकटयिष्यामि ।

अस्मद्देशे मुद्रायन्त्रणालयेषु नागराक्षरसम्मेळनकर्तारो दुर्लभा इति अस्मद्देशमुद्रापिते ऽस्मिन्ग्रन्थे मुद्रणदोषा विद्यन्ते ते तु शुद्धिपत्रे प्रायशः प्रदर्शिता अतिरिक्तान् दोषान् सहंत्वित्यभ्यर्थना ॥ इति सुबोधिनीव्याख्याकारः

## विषयसूचिका ।

*इति प्रत्यक्षपरिच्छेदविषयसूचिका*

अथ अनुमानपरिच्छेदविषयसूचिका ।


उपमानपरिच्छेदविषयसूचिका ।


प्रथमभागविषयसूचिका समाप्ता ।

श्रीः

कृतज्ञता

भो भोः !

मदीयोद्यमाभिनन्दिनो महाशयाः ॥

मद्विरचितायाः मुक्तावलीव्याख्यायाः सुबोधिन्याख्याया मुद्रापणे श्रीमद्भिः भवद्भिः वितीर्णेन द्रविणसहायेन कृतकृत्योऽहं कृतज्ञः श्रीमतां वितरणशालिनां धर्मादिपुरुषार्थचतुष्टयं श्रीभगवान्वासुदेवः वितरत्विति भगवंतं मनसा अभ्यर्थये ॥

एवं सद्व्यवसायवतां भवतां कीर्तिकान्ता दिगन्तविश्रान्ता भवतु ॥

इति

सुबोधिनीव्याख्याकारः



सुबोधिनीव्याख्याकारः

न्यायवेदान्तविद्यापारीणः,

वुलुसु अप्पन्न शास्त्री ।

ॐ

श्रीमहागणाधिपतये नमः

# न्यायसिद्धान्त मुक्तावली

श्रीसुबोधिनीव्याख्या सहिता

अथ मुक्तावली

चूडामणीकृतविधु र्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

सुबोधिनीव्याख्या

यावान्ध्रभूमितिलकावखिलागमाढ्य
वैदुष्यवैभवजिताखिलदिग्विभागौ ।
लक्ष्मीनृसिंह विबुधोत्तम सङ्गमेशौ
वन्दे ऽतिभक्तिविनतः परमौ गुरू तौ ॥ १ ॥

साङ्गे वेदचये गभीरकणभुक्छास्त्रे ऽपि मीमांसयो
र्विज्ञा नद्भुतपाण्डितीलसितांदक्छिष्यप्रशिष्यावलीन् ।
श्रीविश्वेश्वरशास्त्रि विश्वपति विद्व त्सूर्यनारायणान् ।
वन्दे तत्पदसेवनाप्तधिषणः पेरेश्वरो हं सुधीः ॥ २ ॥

श्रुत्यन्तपाथोनिधिमन्थनोत्थम्
ज्ञानामृतं येन वितीर्य मृत्योः ।
संरक्षिता आन्ध्रजनाश्च भूरि
तं सर्वशास्त्रज्ञनृसिंह मीडे ॥ ३ ॥

सुश्रोत्रियकुलोत्पन्नौ सत्कर्माणौ यशस्विनौ ।
वन्दे ऽहं पितरौ श्रीमच्छेषाम्बा वेङ्कटेश्वरौ ॥ ४ ॥

मुक्तावलीं दिनकरादिबुधप्रकाण्डैः
पाण्डित्यभासनपरै र्विवृतां विलोक्य ।

विद्यार्थिबालसुगमां विवृतिं करोमि
लक्ष्ये च लक्षणसमन्वयसुप्रकाशाम् ॥ ५ ॥

येनेदं सकलं चराचरजगत्सृष्टं च गोपायितं
यस्मिन्नेव विलीयते मृदि यथा कार्यं स्वया लीलया ।
तस्मै नाम सुबोधिनीं कृतिमिमां पेरेश्वरोऽहं सुधीः
सत्यानन्दचिदात्मने परमया भक्त्या पर्येऽहम्पराम् ॥ ६ ॥

तत्र तावद्विश्वनाथपञ्चाननभट्टाचार्यो भाषापरिच्छेदव्याख्यानं चिकीर्षुर्विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति — चूडामणीकृतेति । अचूडामणिःचूडामणिः सम्पद्यमानः कृतः चूडामणीकृतः ; च्विप्रत्ययार्थो धर्मविशिष्टत्वं । वैशिष्ट्यञ्च स्वाश्रयत्व पूर्वकालावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्वोभयसंबन्धेन । प्रकृते धर्मः चूडामणित्वं स्वपदेन तद्ग्रहणे स्वाश्रयत्वं विधौ वर्तते ; एवं द्वितीयस्वपदेन चूडामणित्वग्रहणे विधु र्यदा शङ्करेण शिरसा न धृतः तत्कालावच्छिन्नचूडामणित्वनिष्ठप्रतियोगिताकाभाववत्वं च विधौ वर्तत इति तादृशोभयसम्बन्धेन चूडामणित्वरूपधर्मविशिष्टो विधुः तादृशो विधु र्येन सस्तादृशः । एवमेव वलयीकृतवासुकिरित्यत्रापि द्रष्टव्यम्

नन्वत्र लीलाताण्डवपण्डित इति विशेषणस्य कर्तृकर्मक्रियावाचकपदबहिष्कृततया तादृशविशेषणान्वयार्थं विशेष्यस्य पुनरुपादाने समाप्तपुनरात्ताख्यदोषापत्ति रितिचेन्न । लीलाताण्डवपाण्डित इत्यस्यैव विशेष्यवाचकत्वात् । अथलीलाताण्डवपाण्डित इत्यस्य लीलया यत्ताण्डवं तत्र पण्डित इती लीलाप्रयोज्यनृत्याभिज्ञ इत्यर्थकतया तादृशोऽर्थात् शङ्कर एवेति तस्य विशेष्यरूपत्वकल्पनापेक्षया साक्षात् शङ्कराभिधायकस्यैव शिव शब्दस्यैव विशेष्यवाचकत्व मभ्युपगन्तव्यं तथाच लीलाताण्डवपण्डित इति विशेषणान्वयार्थं पुनर्विशेष्यवाचकपदोपादाने „ समा-



प्तपुनरादानात्समाप्तपुनरात्तकम् ” इति न्यायेन समाप्तपुनरात्ताख्यदोषस्य तादवस्थ्यमिति चेन्न । उत्थिताकांक्षया तदन्वयात् । तथा हि विशेषणान्वयप्रयोजकाकांक्षा द्विविधा उत्थाप्याकांक्षा उत्थिताकांक्षा चेति । यत्र कर्तृकर्मक्रियावाचकबहिष्कृतपदप्रतिपाद्यविशेषणान्वयार्थमुत्थाप्याकांक्षया विशेष्योपादानं तत्रैव समाप्तपुनरात्ताख्यदोषः । यत्रोत्थिताकांक्षया तादृशविशेषणान्वयार्थं विशेष्योपादानं न तत्र समाप्तपुनरात्ताख्यदोषापत्तिः । तथा च प्रकृते चूडामणीकृतविधुः वलयीकृतवासुकिरिति प्रतिपादने सति किमिति विधोः चूडामणीकृतत्वं वासुकेर्वलयीकृतत्वमित्याकांक्षया लीलाताण्डवपण्डित इतिप्रतिपादितम् ; तथा च उत्थिताकांक्षया लीलाताण्डवपण्डित इति प्रतिपादनान्न समाप्तपुनरात्ताख्यदोषापत्तिः निरुक्तविशेषणोपादाने यतः शङ्करो लीलाताण्डवपण्डितः अतः विधोः चूडामणीकृतत्वं वासुकेर्वलयीकृतत्वमिति निरुक्ताकांक्षा निवर्तते ॥ १ ॥

[मुक्तावली]

निजनिर्मितकारिकावली मतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीव दयावशंवदः ॥ २ ॥

(सुबोधिनी)

शिष्याणामन्यमनस्कत्वे तत्र तेषां बोधो न सम्भवतीति शिष्याणामनन्यमनस्कत्वसम्पादनार्थं प्रतिजानीते । — **निजनिर्मितकारिकावली**मिति । तथा च निजनिर्मितकारिकावलीं विशदीकरवाणीति प्रतिज्ञया शिष्याणां विषयान्तरसञ्चाररहितमनस्कत्वरूपानन्यमनस्कत्वं सम्भवति । कारिकावल्याःनिजनिर्मितत्वविशेषणेन कारिकावलीमुक्तावलीकर्तृत्वयोस्सामानाधिकरण्यमुपपादितम् । तेन परग्रन्धव्याख्याकरणेपरहृदयस्याप्रत्यक्षत्वेन परग्रन्धो नसम्यग्वर्णित इति शङ्का निरस्ता । कौतुकादिति का-

रिकावलीविशदीकरणे हेतुः । अनेन कारिकावलीव्याख्यायाः मुक्तावल्याः संतोषपूर्वककृतिविषयत्वोपपादनेन वक्तव्याशेषोपपादनमत्रेति सूचितम् । एतद्व्याख्याकरणप्रवृत्तिकारणमाह- **राजीवदयावशंवद इति** । अनेन साच्छिष्येषु गुरूणां दयावशंवदत्वं तेन वक्तव्यांशान्सम्यगुपपाद्य यथा छात्राणां बोधो भवति तथैव गुरव उपपादयन्तीति द्योतितम् । तथाच राजीवनामकसच्छिष्यशिशूषाप्रयुक्तदयया विरचितेयं मुक्तावलीनामकव्याख्या वक्तव्याशेषविषयप्रतीपादिकेति द्योतितम् । अनेन शिष्यैर्गुरौ दया अवश्यं सम्पादनीया तथैव गुरोस्सम्यग्वक्तव्याशेषांशप्रातिपादकत्वादिति द्योतितं । सा च दया शिष्याशिशूषाधीना तदुक्तं भगवद्गीतासु „ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया " इत्यादिना

किं स्वेनैव नूतनकल्पना क्रियते तर्हि आधुनिकस्वेच्छापरिकल्पितत्वेनाप्रामाण्यशङ्का स्यादिति तन्निरासायाह—**अतिसंक्षिप्ताचिरन्तनोक्तिभिरिति** । तथा च चिरन्तनाः याः कणादादीनामुक्तयः तत्प्रतिपाद्यप्रतिपादकोक्तिभिरेव विशदीकरणान्न स्वेच्छापरिकल्पितत्वदोषो ऽतो नाप्रामाण्यशङ्केति द्योतितम् । ननु तर्हि प्राचीनलीलावत्यादिग्रन्थैरेव कारिकावल्यर्थो बोद्धुं शक्यते किमिति व्याख्याकरणमिति शङ्कानिरासार्थमाह । —**अतिसंक्षिप्तेति** । तथाच लीलावत्यादिग्रन्थानामतिविस्तृतत्त्वेन तत्र बालानां प्रवृत्तिर्नसंभवतीति अतिसंक्षिप्तवाक्यैरेवैषा व्याख्या विरच्यतइति बालानां प्रवृत्तिहेतुर्भविष्यतीत्याशयः ॥ २ ॥

[मुक्तावली]

**सद्द्रव्या गुणगुंभिता सुकृतिनां सत्कर्मणां ज्ञापिका**
**सत्सामान्यविशेषनित्यमिलिता भावप्रकर्षोज्वला ।**
**विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली**
**विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥**



( सुबोधिनी )

शिष्यप्रवृत्त्युपयोगिविषयप्रयोजनसम्बन्धाधिकारिरूपानुबन्धचतुष्टयस्या प्रतिपादनेन ग्रन्थस्याकथनानुमितातबोधकतावत्पुरुषोच्चरितत्वरूपन्यूनत्वं स्यादिति तत्परिहारायाह —**सद्द्रव्येति** । अनेन द्रव्यादिपदार्था एव विषयाः ; „ प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डहेत्वाभासछलजातिनिग्रहस्थानानां तत्वज्ञानान्निश्रेयसाधिगमः " इति न्यायसूत्रेण पदार्थतत्वज्ञानस्य मोक्षप्रयोजकतया ऽभिहितत्वेन मोक्षप्रयोजकपदार्थज्ञानंप्रयोजनं ; प्रतिपाद्यप्रतिपादकभावस्सम्बन्धः ; जिज्ञासुरधिकारीति ; अनुबन्धचतुष्टयं सूचितम् ॥ एतेनास्य ग्रन्थस्यातिसंक्षिप्तत्वादज्ञातव्यानिखिलपदार्थज्ञानमत्र न संभवतीति बालानां कथंव्युत्पत्तिरिति शङ्का निरस्ता ' द्रव्यादिनिखिलपदार्थप्रतिपादिका मुक्तावलीति प्रतिपादनात् ॥

गी ॥ यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ; तत्कुरुष्व मदर्पणम् ॥

इति वासुदेवोक्तेः मुक्तावलीसदृशं मुक्तावलीनामकग्रन्थं भगवति वासुदेवे ऽर्पयति —**विष्णोरिति** । „ यावन्नाम लोकेसुकृतिनश्श्रूयते तावत्स्वर्गे लोके महीयते " इत्युक्तेः स्वनाम ग्रन्थे प्रकटीकरोति —**विश्वनाधकृतिनेति** । स्वस्य कृतित्वप्रतिपादनेन यः कश्चन लोके स्वविरचितग्रन्धमहामित्र वासुदेवार्पणं करिष्यति स एव कृती नान्य इति द्योतितम् कथं स्वग्रन्धस्य मुक्तावलीसादृश्यं ; सद्द्रव्येत्यादीविशेषणानामुभयत्र सम्भवाद्बोध्यम् ॥ ३ ॥

[ मुक्तावली ]

**का ॥ नूतनजलधररुचये**
**गोपवधूटीदुकूलचोराय**

तस्मै कृष्णाय नम

स्संसारमहीरुहस्य बीजाय ॥ १ ॥

मु ॥ विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति ।

—नूतनेति । ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति का- रणं विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादि- ति चेन्न । अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र फलजिज्ञासायां संभवति दृष्टफलकत्वे ऽदृष्टफलकल्पनाया अन्याय्यत्वादुपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते ॥

( सुबोधिनी )

ननु ग्रन्थारम्भसमये मङ्गलाचरणं व्यर्थमित्यत आह । विघ्नविघातायेति । विघ्नध्वंसफलकं कृतिविषयीभूतं मङ्गलमित्यर्थः । तथा च मङ्गलस्य विघ्नध्वंसफलकत्वान्न वैयर्थ्यमिति भावः ॥

ननु तर्हि मङ्गलं क्रियतां तस्य ग्रन्थतो निबन्धनं व्यर्थमित्यत आह ।

—शिष्यशिक्षाया इति । मङ्गलस्य ग्रन्थतो निबन्धनं शिष्यशिक्षाफलकमतो न वैयर्थ्यमिति भावः । तथाहि शिक्षानामानुमित्यात्मकज्ञानं ; अनुमानप्रकारश्च ग्रन्थाः ' मङ्गलोत्तरकालावच्छिन्नारंभविषयाः ' कृतमङ्गलगुरुकर्तृकत्वात् ; मंगलोत्तरकालावच्छिन्नारम्भविषयत्वव्याप्यकृतमंगलगुरुकर्तृकत्ववन्तोग्रन्था इति परामर्शात् ; ग्रन्थाः ' मंगलोत्तरकालावच्छिन्नारम्भविषया इत्यनुमित्यात्मकं ज्ञानंजायते अतो मंगलस्य ग्रन्थतो निबन्धनमिति

—नूतनेतीति । मङ्गलस्य विघ्नध्वंसफलकत्वं वा ग्रन्थपरिसमाप्तिफलकत्वं वा न सम्भवतीत्याशङ्कते । —नन्विति । मङ्गलस्य विघ्नध्वंसम्प्रति वा समाप्ति प्रति वा कारणत्वाभावे व्यतिरेकव्यभिचार मुपपादयति —विनापीति । कारणाभावे ऽपि कार्योत्पत्तिर्व्यतिरेकव्यभिचारः प्र-



कृते नास्तिकादीनां ग्रन्थेषु मंगलाभावे ऽपि विघ्नध्वंसपूर्वकसमाप्तिरूप कार्योत्पत्तेर्व्यतिरेकव्यभिचारः ; व्यतिरेकव्यभिचारसत्वे कार्याधिकरणवृत्त्यभावप्रतियोगित्वज्ञानस्यैव मंगले सत्वेन कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगिस्वरूपकार्यव्यापकत्वग्रहो न सम्भवतीति निरुक्तव्यतिरेकव्यभिचारज्ञानं कारणताग्रहप्रतिबन्धकमित्याशयः । कचित्पुस्तके मंगलं दृश्यते समाप्तिरपि दृश्यते ; कचिन्मंगलसत्वे ऽपि समाप्तिर्न दृश्यत इति मंगलस्य समाप्तिं प्रति कारणत्वमस्ति वा न वेति व्यभिचारसन्देह एव जायते नतु व्यभिचारनिश्चयः तथाच व्यभिचारसंशयस्य कारणत्वप्रत्यक्षप्रतिबन्धकत्वे ऽपि मंगलस्य समाप्तिं प्रति साधनत्वानुमानेसाध्यसिध्यभावरूपपक्षतासम्पादकतया व्यतिरेकव्यभिचारसंशय उपयुज्यत इति अनुमानेन मंगलस्य समाप्तिप्रति कारणत्वं व्यवस्थापयिष्यन्प्रथमतः मंगलस्य सफलत्वं व्यवस्थापयति । अविगीतेति । मंगलं सफलं ' अविगीतत्वे सति शिष्टाचारविषयत्वात् ; सफलत्वव्याप्याविगीतत्वविशिष्टशिष्टाचारविषयत्ववन्मंगलमित्याकारकपरामर्शात् ' मंगलं सफलमित्यनुमितिर्जायत इत्यर्थः । अत्र हेतुकुक्षावविगीतत्वे सतीति विशेषणानुपादाने सफलत्वाभाववति श्येनयागादौ शिष्टाचारविषयत्वस्य सत्वेन हेतुर्व्यभिचारी स्यादतोऽविगीतत्वे सतीति विशेषणं । ननु श्येनयागादि[illegible] शत्रुसंहाररूपफलवत्वान्न व्यभिचार इति वाच्यं । सर्वेषामपि मंगला[illegible] प्रवृत्तिसम्पादनाय बलवदनिष्टाननुबन्धीष्टसाधनत्वरूपसफलत्व[illegible]कृते साधनीयतया;श्येनयागादीनांशत्रुसंहाररूपबलवदनिष्ट[illegible]ष्टसाधनत्वरूपसफलत्वे ऽपि निरुक्तसाध्याभाववत्वेन [illegible] सत्वे नव्यभिचारवारणाया विगीतत्वे सतीतिविशेषणस्य आवश्यकत्वात् । तात्पर्यं च श्येनयागादीनां बलवदनिष्टानुबन्धित्वविशिष्टत्वेन बलवदनिष्टाननुबन्धित्वविशिष्टत्वरूपाविगीतत्वाभावेनन

व्यभिचारः । नन्वविगीतत्वे सति विषयत्वमेव हेतुरस्त्विति चेन्न । सफलत्वाभाववति सुखेऽविगीतत्वे सति ज्ञानविषयत्वस्य सत्वेन हेतोर्व्यभिचारित्वापत्तेः । न हि फलरूपस्य सुखस्य फलान्तरवत्वं शिष्टत्वं सम्भवति । अतोऽऽचारविषयत्वम् । तथा च आचारस्य कृतिरूपत्वेन कृतिविषयत्वं पर्यवसितम् ; सुखे न कृतिविषयत्वमिति न व्यभिचारः ।

ननु सुखोद्देश्यकक्कृतेः प्रसिद्धत्वेन तद्विषयत्वस्य सुखे विधमान त्वात्पुनर्व्यभिचार इति चेन्न । विधेयतया कृतिविषयत्वस्य विवक्षितत्वात् सुखे सुखोद्देश्यकयागादिविषयककृतिविषयत्वस्य सत्वेऽपि विधेयतया कृतिविषयत्वाभावान्न व्यभिचारइति भावः । सफलत्वाभाववति चैत्यवन्दनादौ विधेयतया आचारविषयत्वस्य सत्वात् व्यभिचार इति आचारे शिष्टसबन्धित्वविशेषणं शिष्टाश्च फलसाधनतांशे भ्रान्तिरहिताः । तथा च चैत्यवन्दनादिषु फलसाधनतांशे भ्रान्तिरहितपुरुषसम्बन्ध्याचारविषयत्वाभावान्न व्यभिचारः ॥

एतादृशानुमानेन मङ्गलस्य सफलत्वे सिध्धे किं तत्फलमिति विशेषजिज्ञासायां संभवति दृष्टफलेऽदृष्टफलकल्पनाया अन्याय्यत्वात् समाप्तिरूपदृष्टफलवत्वं मङ्गलस्य कल्प्यत इत्याह । तत्रेति । ननु तर्हि अश्रुतफलकविश्वजिद्यागादीनामिव मंगलस्य फलविशेषस्याश्रुततया स्वर्गादिरेव फलं कल्प्यतामित्यत आह । उपस्थितत्वाच्चेति । ग्रन्थारम्भसमये मंगले क्रियमाणे समाप्तिरूपफलस्योपस्थितत्वात् समाप्तीतरफलाभाववत्वे सति फलरूपसामान्यवत्वानुमानेन च मंगलस्य समाप्तिफलवत्वंसिध्धमित्याशयः ॥

[ मुक्तावली ]

**इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयंतत्कल्प्यते, यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो**



विघ्नप्राचुर्यं वा बोध्यम् । प्रचुरस्यैव बलवत्तरविघ्ननिवारणे कारणत्वम्, विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः ॥

( सुबोधिनी )

व्यतिरेकव्यभिचारज्ञानस्य कार्यव्यापकताग्रहप्रतिबन्धकतया व्यतिरेकव्यभिचारज्ञानसत्वे कथं मङ्गले समाप्तिसाधनताग्रह इत्यत आह ।—इत्थंचेति । तथा च जन्मान्तरीय मंगलस्य स्वजन्यविघ्नध्वंसवत्तासंबन्धेन नास्तिकात्मन्यपि सत्वेन समाप्तेरपि तत्र सत्वान्न व्यतिरेकव्यभिचार इति भावः । कादम्बर्यादौ मंगलसत्वेऽपि समाप्त्यदर्शनात् कार्यसमनियतत्वघटितकारणताग्रहप्रतिबन्धक ज्ञानविषयत्वा व्यभिचार इत्यत आह यत्रचेति । तथा च कादंबर्यादिग्रन्थकर्तुर्बाणस्य प्रचुरविघ्नवत्त्वेन स्वकृतमंगलस्य तदीयप्रचुरविघ्ननिरसनायोग्यतया स्वजन्यविघ्नध्वंसवत्तासंबन्धेन बाणकवौ मंगलाभावेनसमाप्त्यभावेऽपि नान्वयव्यभिचार इतिभावः ननु चरमवर्णध्वंसात्मकसमाप्तेः वर्णाभिव्यञ्जकरेखाध्वंसात्मकत्वे ग्रन्थनिष्ठैव समाप्तिः ; शब्दध्वंसात्मकत्वेध्वंसस्य स्वप्रतियोगिसमवायिकारणवृत्तित्वेन शब्दात्मकचरमवर्णध्वंसस्याकाशनिष्ठत्वेन मंगलस्य स्वजन्यविघ्नध्वंसवत्तासंबन्धेनात्मनिष्ठतया कथं मङ्गलसमाप्त्योः सामानाधिकरण्यमिति चेन्न । स्वप्रतियोगिचरमवर्णानुकूलकृतेः कार्यतावच्छेदकसंबन्धत्वात् । तथाच स्वपदेन समाप्तिस्वीकारे स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्वं आत्मनि वर्तत इति तेन संबन्धेन समाप्तेः आत्मनि सत्वेन तत्र स्वजन्यविघ्नध्वंसवत्तासंबन्धेन मङ्गलस्य सत्वान्न मङ्गलसमाप्त्योरसामानाधिकरण्यम् । कियन्मंगलस्य विघ्ननिरासकत्वमित्यत आह —प्रचुरस्येति । विघ्नान्यूनसंख्याकस्य बलवत्तरस्य वा मङ्गलस्य विघ्ननाशकत्वमित्यर्थः । विघ्नध्वंसस्त्विति । तथा च समाप्तिं प्रति विघ्नध्वंसद्वारामङ्गलं कारणमित्यर्थः इदन्तु प्राचीनमतमित्याह आहुःप्रा

च इति॥

[ मुक्तावली ]

नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात् ॥

( सुबोधिनी )

—नव्यास्त्विति । प्राचीनमते विघ्नध्वंसद्वारा मङ्गलस्य समाप्तिं प्रति कारणत्वमभ्युपगतं तत्र विघ्नध्वंसनिष्ठद्वारत्वञ्च मङ्गलजन्यत्वे सति मङ्गलजन्यसमाप्तिजनकत्वं तथा च मङ्गलजन्यत्वाद्विघ्नध्वंसस्य मङ्गलकार्यत्वं ' नतु समाप्तिर्मङ्गलकार्या ; विघ्नसंसर्गाभावरूपसहकारिकारणसमवहितबुध्विप्रतिभारूपज्ञानविशेषस्फूर्तिरूपकारणकलापादेव समाप्तिरसंभवतीति भावः ॥

[ मुक्तावली ]

न चैवं स्वतस्सिद्धविघ्नविरहवता कृतस्य मङ्गलस्यनिष्फलत्वापत्तिरिति वाच्यम् । इष्टापत्तेः ; विघ्नशङ्कया तदाचरणात् । तथैव शिष्टाचारात् । न च तस्य निष्फलत्वे तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यम् । सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् । अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वे ऽपि न तद्बोधकवेदाप्रामाण्यम् ॥

( सुबोधिनी )

शङ्कते — नचेति । वाच्यमिति परेणान्वयः । विघ्नाभाववता केनचित्पुरुषेण कृतस्य मङ्गलस्यनिष्फलत्वं तादृशमङ्गलनिवर्त्यविघ्नस्यैवाभावादिति भावः । निरुक्ताशङ्कां इष्टापत्त्या परिहरति —इष्टापत्तेरिति । तादृशमङ्गलस्य व्यर्थत्वे तदाचरणं किमर्थमित्यत आह — विघ्नशङ्कयेति । विघ्नस्यादृष्टत्वेन आत्मनि तस्यसत्वासत्वशङ्कया तदाचरणात् = तथा च क्वचिद्विघ्ननिश्चयेन क्वचिद्विघ्नसंशयेन च मङ्गलाचरणमि



ति संशयनिश्चयसाधारणविघ्नज्ञानमेव मङ्गलाचरणप्रवर्तकमित्याशयः संशयनिश्चयसाधारणविघ्नज्ञानस्य मङ्गलाचरणप्रवर्तकत्वे प्रमाणं दर्शयति..... **तथैवेति** । ..... **शिष्टाचारादिति** । शिष्टकृतेरित्यर्थः । ननु विघ्नाभाववत्पुरुषानुष्ठितमङ्गलस्य विघ्ननाशं प्रत्यकारणत्वेन विघ्ननाशं प्रति मङ्गलत्वावच्छिन्नस्य कारणताबोधक „ विघ्नध्वंसकामो मङ्गलमाचरेदिति " श्रुतेरप्रामाण्यं स्यादिति शङ्कते ..... **न चेति** । वाच्यमिति परेणान्वयः । तस्य निर्विघ्नपुरुषानुष्ठितमङ्गलस्य । निष्फलत्वे ; विघ्ननाशाजनकत्वे इतिभावः । तद्बोधकवेदाप्रामाण्यापत्तिः मङ्गलस्य विघ्ननाशं प्रति कारणताबोधकस्य „ विघ्नध्वंसकामो मङ्गलमाचरेदिति " वेदस्य विघ्नध्वंसकारणत्वाभाववन्मङ्गलस्य बाधितार्थकारणताबोधकत्वेनाप्रामाण्यापत्तिरित्यर्थः । ध्वंसं प्रति प्रतियोगिनोऽपि कारणत्वेन निरुक्तवेदस्य इतरयावत्कारणसत्वे मङ्गलस्य विघ्ननाशंप्रति कारणत्वबोधकतया विघ्नविरहवत्पुरुषानुष्ठितमङ्गलस्थले विघ्ननाशं प्रति कारणीभूतविघ्नाभावान्नान्वयव्यभिचार इति समाधत्ते । ..... **सति विघ्न इति** । **अत एवेति** । ध्वंसं प्रति प्रतियोगिनः कारणत्वादेवेत्यर्थः । तथा च „ तरति तरति ब्रह्महत्यां यो ऽश्वमेधेन यजते " । इति ब्रह्महत्यापाप निवर्तकत्वेनप्रायश्चित्ततया अश्वमेधयागबोधकश्रुतेःब्रह्महत्यापापभ्रमेणानुष्ठिताश्वमेधयागस्यब्रह्महत्यारूपप्रतियोग्यभावेन फलाजनकत्वेऽपि न तद्बोधकवेदस्याप्रामाण्यमित्यर्थः ॥

[ मुक्तावली ]

मङ्गलं च विघ्नध्वंसविशेषकारणम् विघ्नध्वंसाविशेषे च विनायकस्तवपाठादि क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसधनं प्रतिबन्धकसंसर्गाभाव एव कार्यजनकत्वात् इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः स्वतः सिद्धविघ्ना

**त्यन्ताभावो वा स्वीति न व्यभिचार इत्याहुः ।**

( सुबोधिनी )

विन्घ ध्वंसत्वावच्छिन्नम्प्रति न मङ्गलस्यकारणत्वं क्वचित्प्रायश्चित्तादिना
ऽपि विन्घानां निवृत्तिसम्भवादित्यत आह —**मङ्गलमिति** । मङ्गल-
स्य न विन्घध्वंसत्वावच्छिन्नं प्रति कारणत्वं अपितुविघन्ध्वंसविशेषत्वाव
च्छिन्नं प्रतिं कारणत्वं तथाच प्रायश्चित्तजन्यविघ्नध्वंसं प्रति मङ्गलस्या-
कारणत्वेऽपि नव्यतिरेकव्यभिचार इति भावः । एवं विनायकस्तवस्या-
ऽस्याविघ्नध्वंसविशेषत्वावच्छिन्नंप्रति प्रायश्चित्तस्य विघ्नध्वंसविशेषत्वाव-
च्छिन्नं प्रति च कारणत्वमित्याशयः । ननु मङ्गलस्य विघ्नध्वंस एव
फलमिति वदतां मते समाप्तिसाधनविघ्न ध्वंसं प्रतिमङ्गलस्य कारण
तया समाप्तिकामस्य समाप्तिहेतुभूतविघ्नध्वंसहेतुतया मङ्गले प्रवृत्ति
र्वाच्या सा च न संभवति विघ्नात्यन्ताभाववत्पुरुषकर्तृकग्रन्थसमाप्तिं प्र-
ति विन्घध्वंसस्या हेतुत्वादित्यत आह —**क्वचिदिति** समाप्तिं प्रति न
विघ्नध्वंसः कारणं अपि तु विघ्नसंसर्गाभाव एव तथा च विघ्नात्यंता-
भाववत्पुरुषकर्तृकग्रन्थसमाप्तिस्थले विघ्नात्यन्ताभावरूपसंसर्गाभावस्य
सत्वान्न व्यतिरेकव्यभिचार इत्याशयः । विघ्नसंसर्गाभावस्य समाप्तिप्र-
तिहेतुत्वे उपयोगान्तरमपि दर्शयति । इत्थं चेति

[ मुक्तावली ]

**संसारमहीरुहस्य बीजायेति । संसार एव महीरुहो वृक्षस्तस्य बी
जाय निमित्तकारणायेत्यर्थः । एतेन ईश्वरे प्रमाणं दर्शितं भव-
ति । तथा हि । यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यंकुरादिक
मपि ॥ न च तत्कर्तृत्वमस्मदादीनां संभवतीत्यतः तत्कर्तृत्वेनेश्व
रासिद्धिः ॥**

( सुबोधिनी )



— **मूले नूतनेत्यादि** । धरतीति धरः पचाद्यच् । जलस्य धरः ज
लधरः नूतनश्चासौ जलधरश्च नूतनजलधरः नूतनजलधरस्य रुचि
रिव रुचिः यस्य सः तस्मै । जलधरे नूतनत्वविशेषणेन यथा नूतन
जलधरः सत्वरंवृष्टिप्रदः एवमेव श्रीकृष्णोपिस्वभक्ताभीष्टप्रदः इति
द्योतितम् । नूतनमेघरुचय इत्यनुक्त्वा जलधरत्वेन मेघोपादानेन
भक्ताभीष्टप्रदानप्रयोजकानुकंपादिमत्वं भगवतो द्योतितम् ॥
—**मुक्तावल्यां । संसारमहीरुहस्य बीजायेतीति** । संसार एवेति
कर्मधारयोपन्यासः षष्ठीतत्पुरुषभ्रमनिरासाय । अद्वैतिनां मते ईश्वर
स्योपादानत्वमङ्गीकृतं तन्न संगच्छते लोके घटादिकारणस्य चेतन-
स्य कुलालादिर्निमित्तत्वं नत्वुपादानत्वं तथैव ईश्वरस्य निमित्तत्वम्
इति बीजशब्दस्य निमित्तकारणपरत्वमाह । —**बीजायेति** । रूपा
दिहीनद्रव्यत्वेन चक्षुराद्यगोचरतया परकीयमनसः अन्यात्मप्रत्यक्ष-
जनकत्वायोग्यत्वेन ईश्वरस्य सत्वे मानाभावात् ईश्वरोद्देशेन नमस्कार-
रूपमङ्गलाचरणमसंगतमित्यत आह एतेनेति । संसारमहीरुहस्य बीजा
येति कथनेन ईश्वर सद्भावे ऽनुमानरूपप्रमाणं दर्शितमित्यर्थः । ता
दृशानुमानमेव सदृष्टान्तमुपपादयति ....**तथा हिति** ॥ क्षित्यंकुरादिकं-
कृतिजन्यं कार्यत्वाद्घटवदिति ननु किमत्र पक्षतावच्छेदकं क्षित्यंकुरादि
साधारणं न तावत्क्षितित्वं तस्य पक्षतावच्छेदकत्वे बाधसिध्यन्यत-
स्य जागरूकत्वात् । तथा हि क्षितित्वावच्छेदेनात्र कृतिजन्यत्वंसाध्यते
क्षितित्वसामानाधिकरण्येनवा । आद्ये पक्षतावच्छेदकाक्रान्तपरमाणुषु
कृतिजन्यत्वाभावाद्बाधः । द्वितीये पृथिवीत्वरूपपक्षतावच्छेदकाश्रेय घ
टेकुलालनिष्ठकृतिजन्यत्वस्य सिद्धत्वेन सिद्धसाधनरूपदोषः । ना-
पि जन्यपृथिवीत्वं पक्षतावच्छेदकं। जन्यत्वस्यैव सम्यक्त्वे पृथिवीत्वस्य
वैयर्ध्यप्रसंगादतः जन्यत्वस्य पक्षतावच्छेदकत्वं बोध्यम् ।

ननु जन्यत्वस्य पक्षतावच्छेदकत्वे पक्षतावच्छेदकहेत्वोरैक्येन पक्षान्तर्भावेणैव व्याप्तिग्रहस्य वाच्यतया व्याप्तिग्रहस्य साध्यसिद्धिरूपत्वेन सिद्धसाधनरूपदोषप्रसंगइति चेन्न । स्वरूपसंबन्धविशेषरूपस्य जन्यत्वस्य पक्षतावच्छेदकत्वेन प्रागभावप्रतियोगित्वरूपजन्यत्वस्य हेतुत्वेन तयोर्भेदात् । तथा च यथा पर्वतः महानसीयवह्नीतरवह्न्यभाववानिति ज्ञानसहकृतात् पर्वतोवह्निव्याप्यधूमवानितिज्ञानात् पर्वतोमहानसीयवह्निमानित्यनुमिति रनुभवसंद्धा तथैव कृते : नित्यत्वे एकत्वे लाघवमिति लाघवज्ञानसहकृतात् कृतिजन्यत्वव्याप्यकार्यत्ववत्क्षित्यंकुरादिकमितिपरामर्शात् क्षित्यंकुरादिकं नित्यैककृतिजन्यमित्यनुमितिर्जायत इति पर्यवसितं । एतादृशानुमानेन नित्यैककृतेः सिद्धत्वे एतादृशकृतिः द्रव्याश्रिता गुणत्वादित्यनुमानेन तादृशकृतेः द्रव्याश्रितत्वं सिध्यति । तथा च तादृशद्रव्यस्य पृथिव्यादिभिन्नत्वेन ईश्वरसिद्धिः । तथा हि नित्यैककृतिः न पृथिव्यदिषट्कवृत्तिः चेतनगुणत्वात् ज्ञानादिवत् । नापि मनोवृत्तिः चेतन गुणत्वात् अतो ईश्वरसिद्धिररितिभावः तादृशकृत्याश्रयत्वमस्मदादीनामेवास्त्वित्यत आह ....न चेति । तथा च । निरुक्तकृतिः नापि जीववृत्तिः नित्यकृतित्वादित्याद्यनुमानेन द्रव्यान्तरबाधे सति निरुक्तनित्यकृत्याश्रयतया यद्द्रव्यान्तरं सिध्यति तदेव ईश्वररूपतिमि एतादृशरीत्या अनुमानप्रमाणेन ईश्वरः सिध्यति तथा च तं प्रतिनमस्काररूपंमङ्गलाचरणम् युज्यत एवेति भावः ॥

[ मुक्तावली ]

**न च शरीराजन्यत्वेन कर्तृजन्यत्वसाधकेन सत्प्रतिपक्षित इति वाच्यम् । अप्रयोजकत्वात् । मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभावएवानुकूलः तर्कः । " द्यावाभूमी जनयन्देव एकः ,, "विश्वस्य**



**कर्ता भुवनस्य गोप्ता ,, इत्यादय आगमा अप्यनुसन्धेयाः ॥ १ ॥**

( सुबोधिनी )

क्षित्यंकुरादिषु कृतिजन्यत्वसाधक कार्यत्वरूपहेतुः सत्प्रतिपाक्षित इत्याशंकते... **नचेति** । वाच्याति परेणान्वयः क्षित्यंकुरादिकं कृत्यजन्यं शरीराजन्यत्वात् इत्यनुमानेन कार्यत्वरूपहेतुः सत्प्रतिपक्षित इति भावः । सत्प्रतिपक्षदोषं परिहरति । **अप्रयोजकत्वादिति** । शरीराजन्यत्वरूपहेतुरस्तुकृत्यजन्यत्वं मास्तु इति व्यभिचारशंकायाम् अनुकूलतर्काभावादित्यर्थः । स्वमते ऽ नुकूलतर्कं दर्शयति । **मम त्विति** । एवमीश्वरसद्भावे ऽ नुमानप्रमाणं प्रदर्श्य आगममपि प्रमाणयति*द्यावाभूमीति इत्यादय इत्यादिना ,,एकोदेवस्सर्वभूतान्तरात्मा" इत्यादयोप्यनुसन्धेयाः

[मुक्तावली]

**का ॥ द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।**
**समवायस्तथाभावः पदार्थास्सप्तकीर्तिताः ॥ २ ॥**

पदार्थान्विभजते .... **द्रव्यमिति** । अत्र सप्तमस्याभावत्वकथनादेवषण्णां भावत्वं प्राप्तं तेन पृथगुपन्यासो न कृतः । एते च पदार्थाः वैशेषिके प्रसिध्धाः नैय्यायिकानामप्यविरुध्धाः ' प्रतिपादितं चैवमेव भाष्ये । अतएवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वमाशङ्कितम् ॥

(सुबोधिनी)

....**द्रव्यमितीति**। पदार्थानां भावाभावत्वेन प्रथमतो विभागकरणं युक्तं तदकरणेन मूलस्य न्यूनत्वं स्यादित्यत आह ...**अत्रेति**। तथा च भावाभावत्वेन विभागोऽर्थात्सिद्ध एवेति तथा अप्रतिपादनेऽपि ग्रन्थस्य न्यूनतेति भावः । एते पदार्थाः कस्मिन्मते प्रसिद्धा इत्यत आह ....एत इति

एते पदार्थाः वैशेषिकमते प्रसिद्धा इत्यर्थः । नन्वक्षपादैः षोडश पदार्थाननुक्त्वा तद्विरुद्धतया सप्तपदार्थानां कथनमसंगतमित्यत आह ....नैय्यायिकानामिति । अक्षपादैः षोडशानां पदार्थानां सिष्यबुद्धिवैशद्यार्थमुक्तत्वेऽपि तेषां सप्तसु पदर्थेष्वेवान्तर्भावान्न विरोध इतिभावः । तत्रभाष्यकारसंमतिरप्यस्तीत्याह ....प्रतिपादितमिति । „द्रव्यगुणकर्म सामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः षोडशानामप्यत्रैवान्तर्भावादिति ''भाष्ये प्रतिपादित मित्यर्थः । भाष्यस्याऽऽर्षत्वमाशंक्य चिन्तामणिकारसंमतिमप्याह ....अतएवेति । यतः । सप्तैव पदार्थाः अत एव सप्तपदार्थातिरिक्ततया शक्तिसादृश्ययोः सत्वात्कथंसप्तैव पदार्था इति चिन्तामणिकाराणां शंका संगच्छत इत्यर्थः ॥

[ मुक्तावली ]

ननु कथमेत एव पदार्थाः शक्तिसादृश्यदीनामप्य तिरिक्त पदार्थ त्वात् । तथा हि मण्यादिसमवहितेन वह्निना दाहो न जन्यते त च्छून्येन तु जन्यते तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्य ते उत्तेजकेन मण्याद्यपसारणेन जन्यत इति कल्प्यते ॥

( सुबोधिनी )

शक्तिसादृश्यादीनां सप्तपदार्थातिरिक्तानां सत्वात् कथं सप्तैव पदार्था इति शङ्कते....नन्विति ।शक्तेरतिरिक्तपदार्थत्वमेवोपपादयति ....तथा हीति । स्फष्टोर्थः ॥ननु शक्तिपदार्थस्य सत्वेऽपिक्लृप्तपदार्थेष्वेवान्तर्भावान्नातिरिक्तत्वमितिचेन्न । द्रव्यादिविलक्षणत्वात् । तथाहि , शक्तिः द्रव्यभिन्ना गुणवृत्तित्वात् । अतएव न गुणात्मिका । गुणवृतित्वादेव न कर्मात्मिका । नापि सामान्यादिस्वरूप अनित्यत्वादतः शक्तेरतिरिक्तपदार्थत्वम् ॥ [ मुक्तावली ]

एवं सादृश्यमप्यतिरिक्तः पदार्थः 'तद्धि नषट्सु भावेष्वन्तर्भवति



सामान्ये ऽपि सत्वात् यथा गोत्वं नित्यं तथा ऽश्वत्वमपि नित्यमिति सादृश्यप्रतीतेः । नाप्यभावे , सत्वेन प्रतीयमानत्वादिति चेन्न ॥

( सुबोधिनी )

एवं शक्तेरतिरिक्तत्वं व्यवस्थाप्य सादृश्यस्याप्यतिरिक्तपदार्थत्वं व्यवस्थापयति । .... एवमिति । सादृश्यमतिरिक्तःपदार्थः षड्भावानन्तर्भूतत्वे सति अभावानन्तर्भूतत्वात् ; इत्यनुमानेन सादृश्यस्यापि सप्तपदार्थातिरिक्तत्वं सिध्यतीति भावः । तत्र हेतुघटकषड्भावानन्तर्भूतत्वं सादृश्ये न संभवतीत्यत आह । .... तद्धीति । सादृश्यं न षड्भावपदार्थेष्वन्तर्भवति सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादित्यनुमानेन सादृश्यस्य षड्भावानन्तर्भूतत्वं सिध्यतीत्यर्थः । नन्वत्र सामान्येतरवृत्तित्वे सतीति विशेषणं व्यर्थमिति चेन्न । षड्भावानन्तर्भूतत्वाभाववति सामान्यत्वे सामान्यवृत्तित्वस्य सत्वेन व्यभिचारात् । ननु तर्हि सामान्येतरवृत्तित्वमेवास्तां किं सामान्यवृत्तित्वविशेषणेनेति चेन्न । साध्याभाववति द्रव्यत्वे सामान्येतरवृत्तित्वस्य सत्वेन व्यभिचारादिति विशेषणविशेष्योभयनिवेशः । तादृशसामान्यवृत्तित्वमुपपादयति । .... यथेति । एवमभावानन्तर्भूतत्वमपि दर्शयति । .... नाप्यभाव इति । सादृश्यं नाभावे ऽन्तर्भवति , सत्वेन प्रतीयमानत्वादित्यनुमानेनाभावानन्तर्भूतत्वं सादृश्यस्य सिध्यतीति भावः ॥

[ मुक्तावली ]

मण्याद्यभावविशिष्टवह्न्यदेः दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते अनेनैवसामञ्जस्ये ऽनन्तशक्ततत्प्रागभावध्वंसकल्पनानौचित्यात् । न चोत्तेजके सति प्रतिबन्धकसद्भावे ऽपि कथं दाह इतिवाच्यम् । उत्तेजकाभावविशिष्टमण्यभावस्य कारण

स्वात् ॥ ( सुबोधिनी )

मणिसमवहितवह्न्यादेर्दाहजनकत्वापत्तिवारणायातिरिक्तांशक्तिमभ्युप
गच्छतां प्रभाकराणांमतं निरस्यति । मण्याद्यभावविशिष्टेति तथा च
दाहं प्रति न केवलं वह्नेः कारणत्वमपि तु दाहं प्रति मणेः प्रतिब
न्धकत्वं मण्याद्यभावविशिष्टवह्नेः कारणत्वमभ्युपगन्तव्यं एवं सति
मणिसमवहितवह्नेः न दाहजनकत्वापत्तिरतस्तदनुरोधेन न शक्तिर्ना
म पदार्थान्तरमभ्युपगन्तव्यमिति भावः । ननु दाहं प्रति मण्याद्य-
भावविशिष्टवह्नेः कारणत्वं वा वह्निविशिष्टमण्याद्यभावस्य कारणत्वं वे
ति विचिकित्सायां विनिगमकाभावादुभयस्यापि कारणत्वमभ्युपग-
न्तव्यं ; तथाच गुरुधर्मावच्छिन्नकार्यकारणभावद्वयकल्पनास्यादित्यत
आह —स्वातन्त्र्येणेति । तथाच दाहम्प्रति मण्यभावत्वेन वह्नित्वे
न च कार्यकारणभावद्वयमेव कल्प्यते नातो गुरुधर्मावच्छिन्नकार्यका
रणभावद्वयकल्पनमिति भावः । ननु दाहम्प्रति मण्याद्यभावत्वेन व
ह्नित्वेन कार्यकारणभावद्वयकल्पनापेक्षया अतिरिक्तशक्तिकल्पनमेव यु
क्तमित्यत आह । .... अनन्तेति । क्लृप्तमण्यभावस्य कारणत्वक-
ल्पनयैव सामञ्जस्ये ऽतिरिक्तशक्तिकल्पनायामेव गौरवं सुस्थमित्याश-
यः । गौरवमेव दर्शयति । — अनन्तशक्तीति । अतिरिक्तशक्तिस्वी
कारे मण्यादिसमवधाने तादृशशक्तिनाशः तदपसारणे तादृशशक्त्युद्भ
वः तादृशशक्त्युत्पत्तिं प्रति तादृशशक्तिप्रागभावाभ्युपगम इति अन-
न्तशक्ति तत्प्रागभावतद्ध्वंसकल्पनायामेव गौरवमिति भावः ॥ इदम-
प्यत्रानुसंधेयम् शक्तिनाशंप्रति मणेः कारणत्वं शक्त्युत्पत्तिं प्रति
मण्यभावस्य कारणत्वकल्पनमप्यतिरिक्तशक्तिवादिनां मते सुस्थितमि ॥
उक्ते —नन्विति । वाच्यमितिपरेणान्वयः । दाहं प्रति मणेः प्रतिब-
न्धकत्वं मण्यभावस्य कारणत्वमिति यदुक्तं तदसमंजसं मणिसत्वेऽपि द्र



व्यविशेषरूपोत्तेजकसत्वेमण्यभावरूपकारणाभावेऽपि दाहरूपकार्यो
त्पत्तेर्व्यतिरेकव्यभिचारादित्याशयः । समाधत्ते ....उत्तेजकाभावविशि
ष्टेति । दाहं प्रति उत्तेजकाभावविशिष्टमणेः प्रतिबंधकत्वं तदभाव-
स्य कारणत्वं तथा उत्तेजकसत्वे मणेर्विद्यमानत्वेऽपि विशेषणाभ-
वप्रयुक्तोत्तेजकाभावविशिष्टमण्यभावः संभवतीति न व्यतिरेकव्यभिचार
इतिभावः ॥ [ मुक्तावली ]

सादृश्यमपि न पदार्थान्तरं किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्म-
वत्वं यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्वं मुखे च-
न्द्रसादृश्यमिति ॥ २ ॥

(सुबोधिनी)

सादृश्यस्यातिरिक्तपदार्थत्वं निराकरोति । ....सादृश्यमपीति ॥ सादृ
श्यं च तद्भिन्नत्वेसति तद्गतभूयोधर्मवत्वं तत्पदार्थउपमानं सादृश्यं-
उपमाननिरूपितं उपमेयनिष्ठं च चंद्रसदृशं मुखमित्यत्र चन्द्रगता-
ह्लादकत्वस्य मुखे विद्यमानत्वाल्लक्षणसंगतिः । नन्वत्र तद्भिन्नत्वं परि
त्यज्य तद्गतभूयो धर्मवत्त्वमेव सादृश्यमस्त्विति चेन्न । चंद्रगताह्लाद-
कत्वस्य चन्द्रे सत्वेन चन्द्रेऽतिव्याप्तेः अतस्तन्निवेशः तथा च चं-
द्रे चन्द्राभिन्नत्वस्यासत्वेन नतत्रातिव्याप्तिः॥ वस्तुतस्तु अनुयोगितास
म्बन्धेन तद्गतभूयोधर्मवत्त्वविवक्षणे तद्भिन्नत्वनिवेशो व्यर्थः सादृश्य
स्य चन्द्रप्रतियोगिकतया मुखानुयोगिकतया (चन्द्र) प्रतियोगिता सं
बन्धेन चन्द्रे सत्वेऽपि अनुयोगित्वसंबन्धेन मुख एव सत्वेन चन्द्रे-
ऽप्रसक्तेश्चन्द्रेऽतिव्याप्तेरिति भावः । लक्ष्ये लक्षणसमन्वयं करोति यथेति।

का ॥ क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।
द्रव्याण्यथगुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥

मु । द्रव्याणि विभजते । क्षितिः पृथिवी । आपो जलानि । ते-

जो वह्निः । व्योम आकाशः । कालः समयः । दिगाशा । देही. आत्मा । मनः । एतानि । नव द्रव्याणीत्यर्थः ॥

( सुबोधिनी )

उद्देशानुसारेण प्रथमतः द्रव्याणि विभजतइत्याह — द्रव्याणिविभज. त इति उद्देशो नाम नाम्ना पदार्थसङ्कीर्तनम्। —क्षितिरिति॥ स्फ. ष्टोऽर्थः॥

[ मुक्तावली ]

ननु द्रव्यत्वजातौ किं मानं न हि तत्र प्रत्यक्षं प्रमाणं घृतज. तुप्रभृतिषु द्रव्यत्वाग्रहादिति चेन्न । कार्यसमवायिकारणतावच्छेद. कतया संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया द्र- व्यत्वसिध्धेरिति

( सुबोधिनी)

द्रव्याण्यथेत्यत्र द्रव्यपदस्य द्रव्यत्वविशिष्टार्थकतया द्रव्यत्वस्यजाति. त्वे प्रमाणं पृच्छति — नन्विति । किंशब्दः प्रश्नार्थकः तथा च द्र. व्यत्व जातौ प्रमाणं जिज्ञासाविषयीभूतमित्यर्थः । ननु द्रव्यं द्रव्यमिति प्रत्यक्षसंभवेन प्रत्यक्षमेव प्रमाणं संभवतीत्यत आह । न हीति तत्र हेतुमाह —घृतजतुप्रभृतिष्विति । पामराणं शास्त्रव्युत्पात्ति विहीना. नां घृतादिषु द्रव्यत्वप्रत्यक्षासंभावाद्द्रव्यत्वजातौ न प्रत्यक्षं प्रमाणमि तिभावः ।द्रव्यत्वजातौप्रमाणप्रदर्शनेनसमाधत्ते —कार्येति । कार्यत्वाव. च्छिन्नसमवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्न कारणता किंचिद्धर्मावच्छिन्ना कारणतत्वात् यथा दंडनिष्ठघटकारणता वत् तादृशधर्मस्य जातित्वे एकत्वेलाघवमिति लाघवज्ञानसहकृताकिंचि द्धर्मावच्छिन्नताव्यप्यकारणतात्ववैताकार्यसमवीयकरणेतीतपरामर्शात्का र्यसमवायिकारणताजात्यवच्छिन्ने त्यनुमितिजायते तथा च कार्यमात्रं प्रतिद्रव्यस्यैवसमवायिकारणतया सा च द्रव्यत्वावच्छिन्ना ’ तादृशद्र- व्यत्वरूपजात्यवच्छिन्नेत्यनुमितिः संभवति एवं च द्रव्यत्वजातावनुमानप्र माणंसंभवतीति भावः । कार्यत्वावच्छिन्नसमवायसंबन्धावच्छिन्नकार्यता निरूपिततादात्म्यसंबन्धावच्छिन्नकारणतावच्छेदकतया द्रव्यत्वजाति सिध्धिरित्युक्तं तत्र कार्यत्वावच्छिन्नकार्यतेत्यत्र कार्यत्वस्य कार्यताव. च्छेदकत्वेऽऽत्माश्रय इत्यत आह — संयोगस्येति । संयोगस्य नि. त्यद्रव्येषु जायमानत्वेन संयोगसमवायकारणतावच्छेदकतया द्रव्यत्वजा तिसिध्धिरिति भावः । अनुमानप्रयोगस्तु पूर्ववद्बोध्यः कैश्चित् नित्य. संयोगस्याप्यभ्युपेतत्वात्तत्समवायिकारणतावच्छेदकतया न द्रव्यत्वजा तिसिध्धिरित्यतआह - विभागस्येति अत्राप्यनुमानप्रकारस्तु पूर्ववद्बोध्यः



[ मुक्तावली ]

ननु दशमं द्रव्यं कुतो नोक्तं , तद्धिप्रत्यक्षेण गृह्यते तस्य च रूपवत्त्वात्कर्मवत्त्वाच्च द्रव्यत्वम् । तद्धि गन्धशून्यत्वान्न पृथिवी, नीलरूपवत्त्वाच्च न जलादिकं । तत्प्रत्यक्षे आलोकानिरपेक्षं चक्षुः. कारणमिति चेन्न ॥

( सुबोधिनी )

मीमांसकमतमाशङ्कते । —नन्विति ॥ तमसःसद्भावे प्रत्यक्षं प्रमाण. यति । —तद्धीति ॥ तमसःसत्वेऽपि तस्य द्रव्यत्वे किं मानमित्यत. आह । —तस्य चेति ॥ अनुमानप्रकारश्चेत्थं । तमो द्रव्यं रूपवत्वा. त् घटवत् ; द्रव्यत्वव्याप्यरूपवत्तम इति परामर्शात्तमोद्रव्यमित्यनु। मितिर्जायते इतिभावः । ननु तमसो रूपवत्वे रूपद्रव्यचाक्षुषत्वाव. च्छिन्नं प्रत्यलोकसहकृतचक्षुरिन्द्रियस्य कारणत्वेन आलोकानिरपेक्ष. चक्षुरिन्द्रियेणैव तमसो गृह्यमाणतया तमसि रूपवत्तप्रतीतिर्भ्रमरू. पैव तथा च रूपवत्वहेतुर्न तमसः द्रव्यत्वसाधक इत्यत आह —कर्मवत्त्वाच्चेति ॥ तमो द्रव्यं कर्मवत्त्वात्’ द्रव्यत्वव्याप्यकर्मवत्तम

इति परामर्शात्तमो द्रव्यमित्यनुमितिर्जायत इत्याशयः। यथा घटादी
द्रव्यत्वेऽपि क्लृप्तद्रव्येष्वन्तर्भावान्न दशमद्रव्यत्वमेवमेव तमसो
द्रव्यत्वेऽपि क्लृप्तद्रव्येष्वन्तर्भावान्न दशमद्रव्यत्वमिति शङ्कां निरसाय
तमसः क्लृप्तद्रव्येष्वनन्तर्भावमनुमानेन साधयति —तद्धीति ॥
तमो न पृथिवी गन्धत्वावच्छिन्नप्रतियोगिकाभाववत्त्वात्; पृथिवीत्वव्या-
प्यगन्धत्वावच्छिन्नप्रतियोगिताकाभाववत्तम इति परामर्शात्तमः पृथि-
वीभिन्नमित्यनुमितिर्जायत इत्याशयः ॥ एतादृशानुमानेन तमसि पृथिवी
भेदस्य सिद्धत्वेऽपि जलादिष्वंतर्भावान्न दशमद्रव्यत्वमित्यत आ
ह। ....नीलरूपवत्त्वाच्चेति ॥ तथा च तमो जलाद्यष्टद्रव्यभिन्नं नील
रूपवत्त्वात्; जलाद्यष्टद्रव्यभेदव्याप्यनीलरूपवत्तम इति परामर्शात्तमो
जलाद्यष्टद्रव्यभिन्नमित्यनुमितिर्जायत इत्याशयः। तया च तमसः
क्लृप्तद्रव्येष्वनन्तर्भूतत्वे सति द्रव्यत्वात् दशमद्रव्यत्वंसिद्धं अत्रानु-
मानप्रकारश्च तमो दशमद्रव्यं क्लृप्त द्रव्येष्वनन्तर्भूतत्वे सति द्रव्य
त्वात्; दशमद्रव्यत्वव्याप्यक्लृप्तद्रव्येष्वनन्तर्भूतत्वविशिष्टद्रव्यत्ववत्तम
इति परामर्शात्तमो दशमद्रव्यमित्यनुमितिर्जायत इत्याशयः। ननु त
मसो रूपिद्रव्यत्वे आलोकसहकृतचक्षुरिन्द्रियेणैव ग्राह्यतामित्यत आ
ह।....तत्प्रत्यक्ष इति ॥ तमोभिन्नरूपिद्रव्यप्रत्यक्ष एवालोकसहकृतच-
क्षुरिन्द्रियस्यकारणतया तमःप्रत्यक्षस्य कार्यतावच्छेदकानाक्रान्ततया
तत्प्रत्यक्षं प्रातिनहिआलोकसहकृतचक्षुरिन्द्रियस्य कारणत्वमपि तु आ-
लोकाभावसहकृतचक्षुरिन्द्रियस्यैवेतिभावः ॥

[ मुक्तावली ]

आवश्यकतेजोभावेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वा-
त्। रूपवत्तप्रतीतिस्तु भ्रमरूपा कर्मवत्ताप्रतीतिरप्य लोकापसरणौ-
पाधिकी भ्रान्तिरेव। तमसोऽतिरिक्त द्रव्यत्वेऽनन्तावयवादिक-



ल्पनागौरवं च स्यात्। सुवर्णस्य यथा तेजस्यन्तर्भावस्तथाग्रे व-
क्ष्यते ॥ ३ ॥ ( सुबोधिनी )

तमसः क्लृप्तद्रव्येष्वनन्तर्भूतत्वेऽपि अभावरूपपदार्थान्तरेऽ-
न्तर्भावः संभवतीति तमसो न दशमद्रव्यत्वमिति समाधत्ते। आव-
श्यकेति। सर्वानुभूतोष्णस्पर्शाश्रयतया तेजसो द्रव्यत्वमभ्युपगन्तव्यं
तथा च तादृशतेजोभावरूपत्वेनैव तमस उपपत्तिसंभवे तमसो द्र-
व्यान्तरत्वकल्पनमप्रामाणिकमिति भावः। ननु तमसस्तेजोभावरूप-
त्वकल्पनमसङ्गतं तेजः परमाणूनां त्रसरेणूनां च सत्त्वादिति चेन्न।
प्रौढप्रकाशकतेजः सामान्याभावस्य तमः स्वरूपत्वकल्पनात्। गाढां
धतमसि तेजस्त्रसरेणूनां सत्वेऽपि तत्र प्रौढत्वाभावान्नानुपपत्तिः
ननु तमसोऽभावरूपत्वे कथं रूपवत्ताप्रतीतिरित्यत आह ... रू-
पवत्ताप्रतीतिस्त्विति। तथा च भ्रमस्य विषयसाधकत्वाभावान्न तम-
सि रूपवत्त्वमतो रूपवत्वं न तमसो द्रव्यत्वसाधकमिति भावः। तम
सि रूपवत्व प्रतीतेर्भ्रमरूपत्वेऽपि प्रमात्मक कर्मवत्वप्रतीत्या तस्य द्र-
व्यत्वमास्तामित्यत आह।.... कर्मवत्वप्रतीतिरपीति। तथा च त-
स्या अपि भ्रान्तिरूपत्वेन न तमसो द्रव्यत्वसिध्धिरिति भावः ॥
निरुक्तप्रतीतिद्वयस्य भ्रमत्वकल्पनापेक्षया तमसो दशमद्रव्यत्वकल्पन
मेवोचितमित्यत आह — तमस इति। तमसोऽतिरिक्तद्रव्यत्वस्वी-
कारे तमस उत्पत्तिविनाशशालित्वमप्यङ्गीकर्तव्यं तथा चोत्पत्तिविना
शशालिद्रव्याणां सावयवत्वमपि कल्पनीयं सावयवत्वकल्पनेऽनन्ताव
यवाः कल्पनीया इति तदपेक्षया निरुक्तप्रतीत्योर्भ्रमरूपत्वं प्रकल्प्य-
तेजोभावरूपत्वकल्पनमेव लघिति भावः। तमसस्तेजोभावरूपत्वे,
ऽपिसुवर्णस्य दशमद्रव्यत्वमवश्यमभ्युपगन्तव्यमित्यत आह .... सुवर्ण
स्येति। अग्रे तेजोनिरूपणप्रस्ताव इत्यर्थः ॥

[ मुक्तावली ]

का ॥ स्पर्शः संख्या परिमितिः पृथक्त्वंच ततः परम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
का ॥ बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

मु ॥ गुणान्विभजते । अथ गुणा इति । एते गुणाश्चतुर्विंशति संख्याकाः कणादेन कण्ठतश्चशब्देन दर्शिताः । तत्र गुणत्वजातिः सिद्धिरग्रे वक्ष्यते ॥ ४ ॥ ५ ॥

सुबोधिनी

....मूले अथ गुणा इति । अथ शब्दः द्रव्यविभागानन्तर्यार्थकः । मुक्तावल्यां गुणान्विभजतइत्याह....गुणान्विभजत इति। गुणानां चतुर्विंशतिसंख्याकत्वे सूत्रकारसमतिं दर्शयति....एत इति । ननु रूपरसगंधस्पर्शासंख्या परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वेबुद्धयः सुखदुःखेइच्छा द्वेषो प्रयत्नाश्च गुणाः "इतिकणादसूत्रे सप्तदशसंख्यका एवगुणाः कणादेन कंठतः प्रतिपादिताः न तु चतुर्विंशतिसंख्याका इत्यत आह ....कण्ठतश्चशब्देनेति । एतत्सूत्रस्थचशब्देन गुरुत्वद्रवत्वस्नेहसख्याधर्माधर्मशब्दास्समुच्चिताः । तथाच न कणादसूत्रविरोधः । ननु गुणत्वजातौ किं मानामित्यत आह ....तत्रेति । अग्रे इत्यर्थः ॥ ४ ॥ ५ ॥

[ मुक्तावली ]

का ॥ उत्क्षेपणं ततोऽपक्षेपणमाकुंचनं तथा ।
प्रसारणञ्च गमनं कर्माण्येतानि पंच च ॥ ६ ॥
का ॥ भ्रमणं रेचनं स्यन्दऊर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥

मु ॥ कर्माणि विभजते । उत्क्षेपणमिति । कर्मत्वजातिस्तु प्रत्यक्षसिद्धा



एवमुत्क्षेपणत्वादिकमपि ॥ ननु भ्रमणादिकमपि पृथक्कर्माधिकतया कुतो नोक्तमत आह । भ्रमणमिति ॥ ६ ॥ ७ ॥

(सुबोधिनी)

क्रमप्राप्तानि कर्माणि विभजत इत्याह कर्माणिविभजत इति । कर्मत्वजातौ किं मानमित्यत आह ....कर्मत्वजातिस्त्विति । कर्मत्वजातौ प्रत्यक्षमेव प्रमाणमित्याशयः । अतिदेशन्यायेनाह—एवमिति यथा कर्मत्वजातिः प्रत्यक्षसिद्धा तद्व्याप्योत्क्षेपणत्वादिजातिरपि प्रत्यक्षसिद्धेत्याशयः । शङ्कते । .... नन्विति । भ्रमणमिति । भ्रमणादीनां गमनेऽन्तर्भावान्न पृथगुपन्यासः कृत इत्यर्थः । ननु सर्वेषामपि कर्मणां गमन एवान्तर्भावोऽस्तु तेषां भिन्नत्वेनो पन्यासो व्यर्थ इति चेन्न । स्वतन्त्रेच्छेन मुनिना तथा करणात् ॥ ६ ॥ ७ ॥

[ मुक्तावली ]

का ॥ सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥

मु ॥ सामान्यं निरूपयति । सामान्यमिति । तल्लक्षणन्तु नित्यत्वे सत्यनेकसमवेतत्वम् । अनेकसमवेतत्वं संयोगादीनामप्यस्तीत्यत उक्तं नित्यत्वे सतीति नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्तीत्यतउक्तमनेकेति नित्यत्वे सत्यनेकवृत्तित्वमत्यन्ताभावस्याप्यस्ति अतो वृत्तित्वसामान्यं विहाय समवेतत्वमुक्तम् एकव्यक्तिमात्रवृत्तिस्तु न जातिः ॥ तथा चोक्तं " व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ॥ रूपहानिरसम्बन्धो जातिबाधकसंग्रहः " ॥

(सुबोधिनी)

क्रमप्राप्तं सामान्यं निरूपयतीत्याह । ....सामान्यं निरूपयतीति ॥ ....सामान्यमितीति ॥ ननु सामान्यस्यावान्तरधर्मपुरःसरेण विभागप्र

विशेषजिज्ञासायाः कारणत्वेन तां प्रति सामान्यलक्षणज्ञानस्य
हेतुतया सामान्यस्य सामान्यलक्षणकथनान्तरमेव विशेषविभागो यु-
क्तः अतः प्रथमं सामान्यलक्षणमपेक्षितं तदकथनेन मूलस्य न्यून-
त्वं स्यादित्यतः तादृशन्यूनतापरिहारायाह । ....तल्लक्षणन्त्विति ॥
सामान्यलक्षणंत्वित्यर्थः । —नित्यत्वे सतीति ॥ स्फुटार्थः ॥...तथा
बाधकमिति ॥ व्यक्तेरभेदः तद्व्यक्तिमात्रवृत्तिधर्मस्य जातित्वे बाधक
मित्यर्थः । यथा गगनस्याभिन्नत्वात्तद्व्यक्तिमात्रवृत्तिगगनत्वं न जातिः ॥
तुल्यत्वमिति । समनियतत्वमित्यर्थः । यादृशधर्मस्य यादृशधर्मसमने-
यत्यं तद्धर्मयोर्द्वयोर्न जातित्वमपि तु तयोरेकस्यैव । यथा घटत्वक
लशत्वयोः समानियतत्वेन न घटत्वकलशत्वयोर्द्वयोर्जातित्वमपितु घ
टत्वस्यैव जातित्वम् ॥ ....सङ्कर इति । परस्परात्यन्ताभावसमानाधिक
रणयोर्धर्मयोरेकत्र समावेशः सङ्करः । यथा भूतत्वमूर्तत्वयोः तथा हि
भूतत्वाभाववति मनसि मूर्तत्वस्य; मूर्तत्वाभाववति गगने भूतत्वस्य
सत्वेन भूतत्वमूर्तत्वे परस्परात्यन्ताभावसमानाधिकरणे तयोरेकत्र पृ
थिव्यादिचतुष्टये समावेशात् ( सत्वेन ) तयोः सङ्करः तथा च सङ्क
रस्य सत्वेन न भूतत्वमूर्तत्वयोर्जातित्वं
— अनवस्थितिः । अनवस्थारूपदोषः । स चाप्रामाणिकानन्तपदार्
थकल्पनया अविश्रान्तिः । यथा जातेः जातिमत्वे तस्याः जातिमत्
तस्याः जातिमत्वं तस्याः जातिमत्वमित्यनवस्थादोषः अतः जातिवृत्ति
धर्मस्य न जातित्वमिति ॥ रूपहानिः स्वतोव्यावर्तकत्वहानिः । यथा;
विशेषाणां स्वतोव्यावर्तकत्वमभ्युपगतं स्वतोव्यावर्तकत्वं च स्वरूपतोव्याव
र्तकत्वं ; यथा एतत्परमाणुः इतरभिन्नः विशेषादिति ' तत्रविशेषस्यानि
रवच्छिन्नस्यैवेतरभेदानुमापकत्वं ; तत्राविशेषत्वजातिस्वीकारे सामान्यध
र्माश्रयस्य सामान्यरूपेणैव व्यावर्तकत्वं वाच्यं तथा सति विशेषत्व



रूपेण तस्य व्यवर्तकत्वे हेतुर्व्यभिचारीस्यादतो विशेषत्वस्य न जा
तित्वं अतः सामान्यरूपेण न तस्य व्यवर्तकत्वमपि तु स्वरूपेणैव
व्यावर्तकत्वमभ्युपगन्तव्यं । तादृशव्यावर्तकत्वहानिः स्यात् अतो न विशे
षत्वं जातिरिति ॥
असम्बन्धः अनुयोगित्वप्रतियोगित्वान्यतरसम्बन्धावच्छिन्नसमवायनिष्ठ
प्रतियोगिकाभाववत्वं । समवायत्वस्याभावत्वस्य च जातित्वे बाधकं तथा
हि घटे रूपं समवायेन विद्यते आधारास्त्वनुयोगिनः आधेयाः प्रतियो-
गिन इति समवायसम्बन्धस्य रूपं प्रतियोगि घटः अनुयोगी अनुयोगि
तासम्बन्धेन समवायविशिष्टो घटः प्रतियोगितासम्बन्धेन समवायवि
शिष्टं रूपं ; तादृशान्यतरसम्बन्धावच्छिन्नसमवायनिष्ठप्रतियोगिताका
भाववत्वं समवाये ऽभावे च ' समवायस्य कुत्रापि समवायेनासत्वात्
समवाये कस्यापि समवायेनासत्वात् । एवमभावस्य कुत्रापि समवाये
नासत्वात् ;अभावे कस्यापि समवायेनासत्वात् इति ॥ अतः असंबंधा
त् समवायत्वाभावत्वयो र्नजातित्वमिति

[ मुक्तावली ]

का ॥ परभिन्ना च या जातिः सैवापरतयोच्यते
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥
व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च ।

मु ॥ परत्वमधिकदेशवृत्तित्वमपरत्वमल्पदेशवृत्तित्वं , सकलजात्य
पेक्षया सत्ताया अधिकदेशवृत्तित्वात्परत्वम् । तदपेक्षया चान्यास
जातीनामपरत्वम् । पृथिवीत्वाद्यपेक्षया द्रव्यत्वस्याधिकदेशवृत्तित्वा
द्व्यापकत्वात्परत्वं सत्तापेक्षयाऽल्पदेशवृत्तित्वाद्व्याप्यत्वादपरत्वम् । तथा
च धर्मद्वयसमावेशादुभयमविरुद्धम् ॥ ८ ॥ ९ ॥
( सुबोधिनी ) परत्वमिति । स्पष्टोऽर्थः ॥ ८ ॥ ९ ॥ —

[ मुक्तावली ]

**का ॥ अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥**

मु ॥ विशेषं निरूपयति । ....अन्त्य इति । अन्त्येऽवसाने वर्तत इत्यन्त्यः । यदपेक्षया विशेषो नास्तीत्यर्थः । घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः परमाणूनां परस्परं भेदको विशेष एव स तु स्वत एव व्यावृत्तस्तेन तत्र विशेषान्तरापेक्षा नास्तीत्यर्थः ॥ १० ॥

(सुबोधिनी)

क्रमप्राप्तं विशेषं निरूपयतीत्याह —विशेषं निरूपयतीति । अन्त्यशब्दस्य विग्रहस्वरूपमुपपादयति —अन्त्य इति । अन्त्यशब्दार्थमुपपादयति ....यदपेक्षयेति । विशेषपदार्थस्वीकारे हेतुमुपपादयति —घटादीनामिति । घटादिद्व्यणुकपर्यन्तावयाविनां तत्तदवयवभेदेन भेदःसिध्यति परमाणूनान्तु निरवयवत्वेन गगनादीनामपि निरवयवत्वेन अवयवतारतम्येण तेषां भेदसिध्धिर्न संभवतीति विशेषाणामेव तेषु परस्परभेदकत्वं वाच्यम् । अतः विशेषरूपपदार्थोभ्युपगन्तव्यः । ननु विशेषाणामपि भेदकत्वेन पुनः तत्र विशेषान्तरमभ्युपगंतव्यं तथा चानवस्थाप्रसक्तिरित्यत आह ....सत्विति । विशेषस्तु स्वत एव व्यावृत्तइति तद्व्यावर्तकत्वेन नविशेषान्तरापेक्षा अतो नानवस्था दोष इतिभावः स्वतोव्यावृत्तत्वं चस्वभिन्नलिंगकस्वविशेष्यकस्वसजातीयेतर भेदानुमित्यविषयत्वम् । साजात्यं च पदार्थविभाजकोपाधिरूपेण ॥ १० ॥

[ मुक्तावली ]

**का ॥ घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः**

**तेषु जातेश्च सबन्धः समवायः प्रकीर्तितः ॥ ११ ॥**

मु ॥ समवायं दर्शयति । घटादीनामिति अवयवावयविनो र्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः संबन्धः स समवायः, समवायत्वं नित्यसंबन्धत्वम् ॥



( सुबोधिनी )

उद्देशानुसारेण समवायं निरूपयतीत्याह । ....समवायं निरूपयतीति । — घटादीनामितीति । युतसिद्धयोः संयोगः, अयुतसिद्धयोः समवाय इति अयुतसिद्धपदार्थौ दर्शयति । .... अवयवावयविनोरिति । अयुतसिद्धत्वं च वर्तमानकालीनत्वविशिष्टयादृशोभयत्वव्यापकः आश्रयाश्रयिभावसंबन्धः तादृशोभयत्वम्, तथाहि वर्तमानकालीनत्वविशिष्टघटकपालोभयत्वव्यापकः आश्रयाश्रयिभावसंबन्धः तादृशघटकपालावयुतसिद्धाविति लक्षणसंगतिः ॥ समवायस्यलक्षणमुपपादयति ....समवायत्वमिति । नित्यत्वेसति संबधत्वं समवायस्य लक्षणम्, संयोगेऽतिव्याप्तिवारणाय नित्यत्वेति । गगनादावतिव्याप्तिवारणाय संबन्धत्वनिवेशः [ मुक्तावली ]

तत्र प्रमाणन्तु गुणक्रियादिविशिष्टबुध्दिर्विशेषणविशेष्यसंबन्धविषया, विशिष्टबुध्दित्वाद्दण्डी पुरुष इति विशिष्टबुध्दिवदित्यनुमानम् । एतेन संयोगादिबाधात्समवायसिध्दिः ।

( सुबोधिनी )

समवायसत्वे प्रमाणमुपपादयति । —तत्रेति । एतादृशानुमानेन सम्बन्धस्य सिध्दावपि तादृशसंबन्धः संयोगादिर्भवत्वित्यत आह । —एतेनेति । गुणाक्रियादिविशिष्टबुध्देः विशेषणविशेष्यसंबन्धविषयकत्वसाधनेनेत्यर्थः, तथा च संयोगस्य द्रव्ययोरेव संबन्धत्वस्वीकारत् द्रव्यगुणयोः द्रव्यक्रिययोःतत्संबन्धात्परिशेषात्समवायसिध्दिरितिभावः ॥

[ मुक्तावली ]

न च स्वरूपसंबन्धेन सिध्दसाधनमर्थान्तरं वा । अनन्तस्वरूपाणां

संबन्धत्व कल्पने गौरवाल्लाघवादेकसमवायसिध्दिः

(सुबोधिनी)

शङ्कते —न चेति। निरुक्तानुमानेन संबन्धस्य सिध्दावपि अयुतसिद्धयोः स्वरूपसंबन्ध इति वदतः परस्यमते स्वरूपसंबन्धस्य सिध्दत्वेन एतादृशानुमाने सिध्दसाधनं समवायसंबन्धसाधनार्थं प्रवृत्तस्य स्वरूपसंबन्धं सिध्दौ अनपेक्षितार्थाभिधानरूपा र्थान्तररूपदोषो वा स्यादित्याशयः॥ निरुक्तदोषद्वयमपाकरोति। …अनन्तस्वरूपाणामिति। तथा चानन्तस्वरूपाणां संबन्धत्वकल्पनापेक्षया एकस्य नित्यस्य समवायस्यैव संबन्धत्व कल्पनंयुक्तमिति न सिध्दसाधनं न वा अर्थान्तरदोषो वेत्याशयः॥ [मुक्तावली]

न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसंगः। तत्र रूपसमवायसत्त्वे ऽपि रूपाभावात्॥ (सुबोधिनी)

समवायस्यैकत्वे रूपसमवायस्य स्पर्शसमवायस्य चैकत्वेन वायौ स्पर्शसमवायसत्वे रूपसमवायस्यापि सत्वेन वायौ रूपवत्ताप्रतीतिरित्याशङ्कते। …न चेति। तद्वत्ता बुद्धित्वावच्छिन्नं प्रति तत्संबन्धित्वस्य प्रयोजकतया वायौ रूपसमवायरूपतत्संबन्धित्वस्य सत्वेन वायौ रूपवत्ताबुद्धेः प्रमात्वप्रसङ्ग इत्याशयः। तद्वत्ताबुद्धित्वावच्छिन्नं प्रति न तत्संबन्धित्वं प्रयोजकमपि तु तेन संबन्धेन तद्वत्त्वं प्रयोजकमिति सिद्धान्तमतमनुसृत्य समाधत्ते। —तत्रेति। वायावित्यर्थः रूपसमवायस्य सत्वेऽपि समवायसंबन्धावच्छिन्न रूपत्वावच्छिन्नाधेयतानिरूपिताधिकारणत्वस्याभावान्न वायौ रूपवत्ताबुद्धेः प्रमात्वप्रसङ्ग इति भावः [मुक्तावली]

नचैवमभावस्यापि वैशिष्ट्यं संबन्धान्तरं सिद्ध्येदिति वाच्यम्

(सुबोधिनी)



शङ्कते —नचेति। वाच्यमिति परेणान्वयः। द्रव्यगुणादिविशिष्टत्वसंबन्धान्तरं समवायरूपं नित्यमेकं लाघवाद्यथा सिद्ध्यत्येवमनन्तस्वरूपाणां संबन्धत्वकल्पनापेक्षया लाघवादभावस्यापि संबन्धान्तरं सिध्येदिति तात्पर्यम्: [मुक्तावली]

तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात् घटाभावस्य तत्रसत्वात्तस्य च नित्यत्वात् अन्यथा देशान्तरेऽपि घटाभावप्रतीतिर्न स्यात् विशिष्टत्वस्य च तत्रसत्वात्॥

(सुबोधिनी)

न चेत्याद्याशंकां तादृशसंबन्धान्तरं नित्यत्वानित्यत्वाभ्यां विकल्प्य निरस्यति —तस्यनित्यत्व इति। तादृशसंबन्धस्य नित्यत्वे घटानयनानंतरं घटदेशे नित्यस्य घटाभावस्य नित्यस्य विशिष्टत्वस्य च सत्वाद्घटाभाववत्ताप्रतीतिः स्यादित्याशयः। तत्र तादृशसंबन्धान्तरावच्छिन्नघटाभावत्वावच्छिन्नाधिकरणताया सत्वात्। अन्यथा घटाभावस्यानित्यत्वे। देशान्तरेऽपि घटशून्यदेशेऽपि घटाभावप्रतीतिर्न स्यात्; घटाभावबुद्धिर्न स्यादित्यर्थः। घटानयनानंतरं घटाभावस्य नष्टत्वेन देशांतरेऽपि घटाभावाभावात् घटाभाववत्ताबुद्धिः स्यादित्याशयः॥ मुक्तावल्यां समन्वयस्तु। तस्य नित्यत्वे भूतले घटानयनानंतरमपि घटाभावबुद्धिप्रसङ्गात्। घटाभावस्य तत्र सत्वात्। तस्य च घटाभावस्य च नित्यत्वात्। विशिष्टत्वस्य च तत्र सत्वादिति अभेदेनान्वयः। अभावस्यानित्यत्वपक्षे; अन्यथादेशांतरेऽपि घटाभाव प्रतीतिर्नस्यादिति

[मुक्तावली]

मम तु मते पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न श्यामताबुद्धिः, अनित्यत्वे तु अनंतविशिष्टत्वकल्पने तवैव गौरवम् एवं च तत्तद्भूतलादीनां तत्तदभावानां संबन्धः॥ ११

( सुबोधिनी )

श्यामते समवायस्य नित्यत्वेऽपि रूपविशेषाभावकाले न रूपविशेषवत्ता ध्यापतिरित्युपपादयति — ममत्विति । घटे यदा पाकेन पूर्वतनश्यामरूप नाशः रक्तरूपोत्पत्तिः तदानीं श्यामरूपसमवायस्य घटे सत्वेऽपि समवा यसंबंधावच्छिन्न श्यामत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्यासत्वान्न श्यामरूपवत्ताप्रतीत्यापत्तिरित्यर्थः ॥ अभावस्य विशिष्टवत्तां , संबन्धान्तर सिद्ध्येदित्यत्र तादृशसंबंधान्तरं नित्यमनित्यं वेति विकल्प्य पूर्वं नित्यत्वपक्ष भूतले घटानयनानंतर घटाभाववत्ताबुध्यापत्तिरूपदोषः प्रदर्शितः इदानीं तादृशसंबंधांतरस्यानित्यत्वपक्षे दोषमुपपादयति . . वैशिष्ट्यस्यानित्यत्वे इति तथा च तत्तदनंतविशिष्टत्व कल्पने संबंधांतरस्वीकर्तॄणां मत एव गौरव मित्याशयः । ननु घटाभावादेः विशिष्टत्वरूपसम्बन्धांतरानङ्गीकारे भूतलं घट भाववदिति कथंवा विशिष्टबुद्धिः स्वरूपसम्बंधस्वीकारे तस्य भूतलघटा भावस्वरूपत्वेन घटानयनकालेऽपि तस्य सत्वेन घटानयनकाले भूतले घटाभावप्रतीतिः स्यादित्यत आह . . . अत्रेति । तत्तत्कालीनभूतलं घटाभा वदिति ज्ञानकालीनं तत्तद्भूतलं विशिष्टं तन्भूतले घटाभावबुद्धिः तत्तद्भूत ल दितत्तदभावानां सम्बंध इत्यर्थः तथाच घटानयनकाले घटाभावज्ञानकालीन त्वविशिष्टतत्तद्भूतलरूपसम्बन्धाभावान्न भूतले घटाभाववत्ताबुद्धिरित्य शयः

[ मुक्तावली ]

का ॥ अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।

प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥ १२ ॥

एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।

मु ॥ अभावं विभजते — अभावस्त्विति । अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्वम् । संसर्गाभावान्योन्याभावभेदादित्यर्थः । अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्, संसर्गाभावं विभजते । प्रागभा



व इति ॥ संसर्गाभावत्वमन्योन्याभावभिन्नाभावत्वम् ॥ अन्योन्याभाव त्वं तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम् ॥

( सुबोधिनी )

उद्देशानुसारेण अभावंविभजत इत्याह ....अभावं विभजत इति । . . . अभावस्त्विवतीति । अभावलक्षण मुपपादयति ..... अभावत्वमिति । द्रव्यादिषट्कान्योन्याभवस्य एको न द्वाविति न्यायेन द्रव्येपि सत्वात् द्रव्ये ऽतिव्याप्तिरिति चेन्न द्रव्यादिभेदषट्कवत्वस्य तदर्थत्वात् द्रव्ये गुणादिभेदपञ्चकस्य सत्वे ऽपि द्रव्यभेदस्यासत्वान्नातिप्रसङ्गः । मूलस्थ संसर्गान्योन्याभाव इति वाक्यस्य संसर्गः अन्योन्याभावः तयोर्भेदादि. त्यर्थस्वीकारे संसर्गस्याभावत्वं बाधितमिति द्वन्द्वान्ते श्रूयमाणं पदं- प्रत्येकं संबध्यत इति न्यायमनुसृत्य तदमुपपादयति । संसर्गाभावे. ति ॥तथाचसंसर्गश्चान्योन्यंच संसर्गान्योन्येतयोरभावः संसर्गान्योन्याभावः द्वन्द्वान्तेश्रूयमाणं पदं प्रत्येकं संबध्यतइति संसर्गाभावान्योन्याभावभेदादि त्यर्थःप्रथमेन्यान्याभावविभागाकरणे हेतुमुपपादयति..अन्योन्याभावस्ये ति। संसर्गाभावस्य लक्षणमुपपादयति ।....संसर्गाभावत्वमिति ॥ घटा. दिष्वतिव्याप्तिवारणायाभावत्वानिवेशः । अन्योन्याभावेऽतिव्याप्तिवारणाय. अन्योन्याभावभिन्नत्वनिवेशः । अन्योन्याभावत्वं च संसर्गाभावभिन्नत्व मिति लक्षणप्रतिपादने अन्योन्याभावज्ञानं प्रति संसर्गाभावज्ञानं - संसर्गाभावज्ञानं प्र त्यन्योन्याभावज्ञानं हेतुः स्या त्तथा च अन्योन्यश्रयः स्यादिति अन्योन्याभावमन्यथा परिष्करोति । अन्यो न्याभावत्वामिति ॥

[ मुक्तावली ]

विनाश्यभावत्व प्रागभावत्वम् । जन्याभावत्वं ध्वंसत्वम । नि- त्यसंसर्गाभावत्वमत्यन्ताभावत्वम् । यत्रतु भूतलादौ घटादिकम-

**पसारितं पुनरानीतञ्च तत्र घटकालस्य सम्बन्धाघटकत्वादत्यन्ताभावस्य नित्यत्वे ऽपि घटकाले न घटात्यन्ताभावबुद्धिः । तत्रोत्पत्तिविनाशशाली चतुर्थोऽयमभाव इति केचित् ॥**

(सुबोधिनी)

प्रागभावस्य लक्षणं निर्वक्ति — **विनाश्यभावत्वमिति** । विनाश्यत्वे सति अभावत्वं प्रागभावस्य लक्षणमित्यर्थः, घटोत्पत्तेः पूर्वं विद्यमानत्वेन घटोत्पत्त्यनन्तरं विनाश्यत्वेन घटप्रागभावे लक्षणसंगतिः ॥ विनाश्यत्वमात्रोक्तौ तस्य घटे विद्यमानत्वाद्घटेऽतिव्याप्तिरतोऽभावत्वनिवेशः । अभावत्वस्य घटेऽसत्वान्नातिप्रसंगः । अभावत्वस्यात्यन्ताभावेऽपि सत्वादतिव्याप्तिः । अतो विनाश्यत्वनिवेशः तथा चात्यन्ताभावे विनाश्यत्वाभावान्नातिप्रसङ्गः ॥ ध्वंसस्य लक्षणमुपपादयति । जन्याभावत्वमिति । जन्यत्वे सत्यभावत्वं ध्वंसस्य लक्षणं । जन्यत्वस्य घटे विद्यमानत्वादतिप्रसङ्गः । अतोऽभावत्वनिवेशः तथा च घटेऽभावत्वस्यासत्वान्नातिव्याप्तिः ॥ अत्यन्ताभावलक्षणमुपपादयति । — **नित्यसंसर्गाभावत्वमिति** ॥ नित्यत्वे सति संसर्गाभावत्वमत्यन्ताभावस्य लक्षणम् । संसर्गाभावत्वस्य प्रागभावे विद्यमानत्वात्तत्रातिव्याप्तिरतस्तन्निवेशः, तथा च प्रागभावस्य विनाश्यत्वेन तत्र नित्यत्वाभावान्नातिप्रसङ्गः । नित्यत्वस्य गगने सत्वादतिव्याप्तिरतः संसर्गाभावत्वनिवेशः । अभावत्वस्य नित्यत्वस्य चान्योन्याभावे सत्वादतिव्याप्तिरतः संसर्गाभावत्वनिवेशः ॥ अत्यन्ताभावस्य नित्यत्वे घटशून्यदेशे घटानयनानन्तरं भूतले घटाभावप्रतीतिः स्यदित्यापत्तिं परिहरति ....तत्रेति । तत्तत्कालीनतत्तद्भूतलादेरेवाभावस्य संबंधतया घटानकालीनभूतलादेः घटाभावसंबन्धाघटकतया घटाभावस्यनित्यत्वेऽपि घटवद्देशे न घटाभावप्रतीतिरित्यर्थः ॥



घटाभावस्य नित्यत्वे तत्संबन्धस्यापि नित्यत्वे घटानयनानन्तरं घटवद्भूतले घटाभावप्रतीतिर्दुर्वारेति अत्यन्ताभावस्य अनित्यत्वमङ्गीकृत्यात्यन्ताभावलक्षणमन्यथा परिष्करोति .... तत्रेति । तथा च प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वे सत्यभावत्वमत्यन्ताभावस्य लक्षणमिति पर्यवसन्नम् । प्रागभावेऽति व्याप्तिवारणाय प्रागभावप्रतियोगित्वं । ध्वंसेऽतिव्याप्तिवारणाय ध्वंसप्रतियोत्वम् । घटेऽतिव्याप्तिवारणायाभावत्वमिति ॥ एवं च घटानयनानन्तरं घटाभावस्य विनष्टत्वेन न घटाभावप्रतीत्यापत्तिः । केचिदित्यनेनास्वरसः सूचितः स च घटाभावस्यानित्यत्वे घटानयनानन्तरं तस्य विनष्टत्वेन देशान्तरे घटाभावबुद्धिर्न स्यादिति । अपि च घटाभावस्य नित्यत्वेऽपि घटानयनानन्तरं घटाभावप्रतीतेरन्यथानिवारितत्वेन तस्यानित्यत्वमभ्युपगम्यानन्तघटाभावाभ्युपगमे गौरवञ्चेति ॥

[ मुक्तावली ]

**अत्रध्वंसप्रागभावाधिकरणे नान्यन्ताभाव इति प्राचां मतम्, श्यामघटनाशे रक्तो नास्तिरक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावं तयोर्विरोधात् नव्यास्तु –तत्र विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनात्यन्ताभावो वर्तत इत्याहुः**

( सुबोधिनी )

प्राचीनानां मतमुपन्यस्यति ....अत्रेति । अत्यन्ताभावविषये । प्राचां मतमित्यग्रेतनेनान्वयः । प्राचामयमाशयः, ध्वंसप्रागभावयोराधिकरणे नात्यंताभावो वर्तते ध्वंसात्यंताभावयोः प्रागभावात्यन्ताभावयोर्विरोधादिति पाकेन घटे श्यामरूपनाशे रक्तरूपे जायमाने अन्तरा रक्तो नास्तीति प्रतीतिः कथमुपपद्यते ' एवं पूर्वश्यामनाशे सति स्यामोनास्तीति प्रतीतिः कथमुपपद्यत इत्यत आह —श्यामघटनाश इति । श्या

मघटनाशे रक्तरूपे उत्पद्यमाने ऽन्तरा रक्तोनास्तीति प्रतीतिः रक्तप्रागभावमवगाहते ' श्यामो नास्तीति प्रतीतिः श्यामरूपध्वंसमवगाहते न तु रक्तरूपात्यंताभावं, ध्वंसाधिकरणे प्रागभावाधिकरणे ऽत्यन्तभावानङ्गीकरादिति । प्राचां मतमित्यनेनास्वरसः सूचितः स च ध्वंसप्रागभावयोः अत्यन्ताभावस्य च विरोधे मानाभवएव ॥ अस्मिन्नव्यमतमुपन्यस्यति ..नव्यास्त्विति । ध्वंसप्रागभावयोरत्यन्ताभावस्य च विरोधे प्रमाणाभावत् श्यामरूपध्वंसाधिकरणे श्यामोनास्तीति प्रतीतिः रक्तरूपप्रागभावाधिकरणे रक्तो नास्तीति प्रतीतिः श्यामरूपात्यंताभावं रक्तरूपात्यंताभावं चावगाहत इतिभावः ॥

[मुक्तावली]

नन्वत्यंताभावानामधिकरणात्मकत्वं लाघवादिति चेन्न । अनंताधिकरणात्मकत्वकल्पनापेक्षयातिरिक्तकल्पनाया एव लघीयस्त्वात्

(सुबोधिनी)

मीमांसकमतमाशंकते —नन्विति । घटपटाद्यभानामन्तानामभ्युपगमापेक्षया तेषां कॢप्ताधिकरणात्मकत्वकल्पमेवोचितं लाघवात् नत्वभावानामतिरिक्तत्वं ;अतिरिक्तत्वे तत्कल्पनाप्रयुक्तगौरवमितिभावः ॥ मीमांसकमतंनिराकरोति ....अनंतेति । एकघटाभावस्य नानाधिकरणेषु विद्यतयातत्तदनंताधिकरणस्वरूपकल्पनापेक्षयातिरिक्तत्वकल्पनमेवलाघ्वेति· भवः

[मुक्तावली]

एवं चाधाराधेयभावोप्युपपद्यते

(सुबोधिनी)

अभावस्यातिरिक्तत्वे उपयोगमपि दर्शयति।...एवञ्चेति ।अभावस्याधिकरणात्मकत्वे स्वस्मिन्स्वस्यासत्वेन भूतले घटाभावोस्तीति प्रतीतिसिद्धाधाराधेयभावानुपपत्तिः, अभावस्यातिरिक्तत्वे तादृशप्रतीतिसिद्धाधाराधेयभावः साधु संगच्छत इतिभावः

[मुक्तावली]

एवं च तत्तच्छब्दगंधरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते ॥ अन्यथा तत्तदाधिकरणानां तत्तादद्रियाग्राह्यत्वात्प्रत्यक्षत्वं नस्यात्

(सुबोधिनी)

अभावस्यातिरिक्तत्वाभ्युपगमे प्रयोजनानंतरमपि दर्शयति —एवंचेति अभावस्याधिकरणातिरिक्तत्वे सतीत्यर्थः । अभावस्याधिकरणात्मकत्वेऽनुपपत्तिं प्रदर्शयति .... अन्यथेति । अभावस्याधिकरणानतिरिक्तत्व इत्यर्थः । तत्तदधिकरणानामिति ।शब्दाभावाधिकरणस्याकाशस्यश्रोत्रेंद्रियाग्राह्यत्वेन शब्दाभावस्याकाशस्वरूपत्वे तादृशशब्दाभावप्रत्यक्षं न स्यात् गंधाभावस्य तदाधिकरणपृथिवीस्वरूपत्वेनपृथिव्याः घ्राणेंद्रियेणगंधाभावप्रत्यक्षं न स्यात् , रसाभावस्य तदधिकरणजलस्वरूपत्वे न जलस्य रसनेन्द्रियाग्राहयत्वेन रसनेन्द्रियेण रसाभावप्रत्यक्षं नस्यादित्यर्थः ॥

[मुक्तावली]

एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमभावस्येति प्रत्युक्तं, अप्रत्यक्षत्वापत्तेः ॥ १२ ॥

(सुबोधिनी)

अभावस्य ज्ञानविशेषात्मकत्वं कालविशेषात्मकत्वमभ्युपगच्छतां केषां चिन्मतं निरस्यति । —एतेनेति । वक्ष्यमाणदोषेणेत्यर्थः । तादृशदोषमेवोपपादयति । .... अप्रत्यक्षत्वापत्तेरिति । ज्ञानविशेषकालविशेषयोः बहिरिंद्रियाग्राहयत्वेन शब्दस्पर्शगंधरसरूपाद्यभावानामप्रत्यक्षत्वापत्तेरित्यथः ॥ १२ ॥

[ मुक्तावली ]

**का ॥ सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥**

मु ॥ इदानीं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुं प्रक्रमते । सप्तानामिति । समानो धर्मो येषां ते सधर्माणस्तेषां भावः साधर्म्यं समानो धर्म इति फलितोर्थः । एवं विरुद्धोधर्मो येषां ते विधर्माणस्तेषां भावो वैधर्म्यं विरुद्धो धर्म इति फलितार्थः । ज्ञेयत्वं ज्ञानविषयता सा च सर्वत्रैवास्ति ईश्वरज्ञानविषयतायाः केवलान्वयित्वात् । एवमभिधेयत्वप्रमेयत्वादिकं बोध्यम् ॥ १३ ॥

सुबोधिनी

....इदानीमिति ॥ पदार्थनिरूपणानंतरमित्यर्थः । ....सप्तानामिति । साधर्म्येशब्दार्थं दर्शयति । —समान इति ॥ वैधर्म्यपदार्थं मुपपादयति । ....एवमिति ॥ ज्ञेयत्वशब्दार्थमाह । ....ज्ञेयत्व मिति ॥ तच्च सर्वत्र विद्यमानत्वान्नाव्याप्तिरित्याशयेनाह । ....सा चेति ॥ सर्वत्र विद्यमानत्वे हेतु मुपपादयति । — ईश्वरज्ञानविषयताया इति ॥ पदार्थानां ज्ञेयत्वलक्षणमुक्त्वा लक्षणांतरमपि दर्शयति । —एवमिति ॥ यथा ज्ञेयत्वं पदार्थ सामान्य लक्षणमेवमभिधेयत्वं प्रमेयत्वं च पदार्थानां लक्षणं संभवतीत्यर्थः ॥ १३ ॥

[ मुक्तावली ]

का ॥ द्रव्यादयः पंच भावा अनेके समवायिनः ॥

मु ॥ द्रव्यादय इति । द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वञ्च । यद्यप्यनेकत्वमभावेप्यस्ति तथाप्यनेकत्वे सतिभावत्वं पञ्चानां साधर्म्यम् । तथा चानेकाभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोर्थः । तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः । समवायित्वं च समवायसंबन्धेन संबंधित्वं न समवायवत्वं सामान्यादावभावात् ॥

(सुबोधिनी)



द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्य मुपपादयितुं मूलमवतारयति । ...द्रव्यादय इतीति । द्रव्यादिसमवायान्तानां षण्णां साधर्म्यानिरूपणेन मूलस्य न्यूनत्वमितिचेन्न । सप्तमपदार्थस्याभावत्वकथनेनैव षण्णां भावत्वं स्फुटमिति तदप्रतिपादनात् । अत्र द्रव्यादयः पंचेत्युद्देश्यवाचकपदं,भावा अनेक इति विधेयवाचकपदं तथा च पर्यवसितं लक्षणमुपपादयति । ...द्रव्यगुणेत्यादिना ॥ द्रव्यगुणकर्मसामान्यविशेषाणामनेकत्वे सति भावत्वमेकं लक्षणं; समवायित्वं द्वितीयलक्षणम् । भावत्वविशेषणस्य सार्थक्यप्रदर्शनार्थमतिव्याप्तिमुपपादयति ....यद्यपीति । द्रव्यादिपञ्चकस्यानेकत्वं लक्षणमित्युक्तौ अनेकत्वस्याभावेविद्यमानत्वादभावेऽतिव्याप्तिरतो भावत्वमपि लक्षणे निवेशनीयं तथा चाभावे भावत्वाभावान्नातिप्रसङ्ग इति भावः ॥

नन्वेकत्वस्य प्रत्येकं घटादावकाशादावसत्त्वात्तत्राव्याप्तिरित्यत आह —तथाचेति । अनेकाभाववृत्तिपदार्थविभाजकोपाधिधर्मत्वं पृथिव्यादिपंचभावानां लक्षणं ' अनेके ये भावाः घटपटादयः तद्वृत्तिपदार्थविभाजकोपाधिधर्मः द्रव्यत्वरूपधर्मः तद्धर्मवत्वस्य घटादिष्वपि सत्वेन नातिप्रसङ्गः । नन्वनेकत्वस्यगुणत्वेन गुणेगुणानङ्गीकारेण अनेकत्वस्य गुणेष्वसत्वात् अनेके येभावा न हि गुणाः किन्तु पृथिव्यादय एव तद्वृत्तिपदार्थविभाजकोपाधिधर्मवत्वस्य ( द्रव्यत्वस्य ) गुणेष्वविद्यमानत्वादव्याप्तिरिति चेन्न । स्वानुयोगिवृत्तित्व ' स्वप्रतियोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टत्वस्यैवानेकत्वपदार्थत्वात् । तच्च गुणेष्वपि विद्यमानतया अव्याप्त्यनवकाशात् । स्वपदेन घटभेदस्वीकारे स्वानुयोगी जलं तद्वृत्तिः गुणःस्वप्रतियोगी घटः तद्वृत्तिरपि गुणोभवति अतोनिरुक्तोभयसंबन्धेन भेदविशिष्टो गुणः तद्वृत्तिपदार्थविभाजकोपाधिधर्मः गुणत्वरूपधर्मः तद्धर्मवत्वस्य गुणेषु विद्यमा

नतया अव्याप्तिनिरासः

समवायित्व ञ्चानुयोगितासंबन्धेन समवायवत्वं तच्च सामान्यविशेषयो रसिद्धं तत्र समवायेन कस्याप्यसत्वादित्यत आह । ... समवायित्वं चेति । तथा च सामान्यविशेषयोरपि समवायेन द्रव्येषु संबन्धित्वान्नाव्याप्तिरिति भावः । अनुयोगितासंबन्धेन समवायवत्व रूपं न संभवतीत्याह ।.... न त्विति । तत्र हेतुमाह । —सामान्यादाविति ॥

[ मुक्तावली ]

का ॥ **सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः** ॥ १४ ॥

मु ॥ सत्तावन्त इति ॥ द्रव्यगुणकर्मणां सत्तावत्वमित्यर्थः । गुणादिरिति ॥ यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वं च गगनादावतिव्याप्तं तथापि गुणवदवृत्तिधर्मवत्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्वं च तदर्थः ॥ न हि घटत्वादिकं द्रव्यत्वादिकं वा गुणवदवृत्ति कर्मवदवृत्ति वा किन्तु गुणत्वादिकं तथा , आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः ॥ १४ ॥

( सुबोधिनी )

ननूद्देश्यवाचकपदस्य विधेयवाचकपदपूर्वनिपातित्वानियमे सति विधेयवाचकसत्तावन्त इति पदस्य उद्देश्यवाचक आद्या इति पदपूर्वनिपातित्वं मूलेऽसङ्गतमित्यत आह । —द्रव्यगुणकर्मणामिति । तथा च योजनया उद्देश्यवाचकपदस्यपूर्वनिपातित्वं बोध्यमित्याशयः । द्रव्यगुणकर्मणां सत्तावत्त्वंलक्षणमिति ॥ गुणकर्मसामान्यविशेषाभावानां गुणात्यन्ताभाववत्त्वमेकं लक्षणं । क्रियात्यन्तभाववत्त्वमपरं लक्षणमित्याशयः । लक्षणद्वयेऽतिव्याप्तिमुपपादयति —यद्यपीति । घटगतगुणं क्रियां च प्रति घटस्य समवायकारणत्वेन कारणस्य कार्यनियत पूर्ववृत्तितया स्वगतगुणं क्रियां च प्रति घटस्य कारणत्वोपपत्त्यर्थमुत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति न्यायोऽभ्युपगन्तव्यः तथा चाद्यक्षणे घटस्य निर्गुणत्वान्निष्क्रियत्वाच्च तत्र निरुक्तलक्षणद्वयस्यातिव्याप्तिरित्याशयः । निष्क्रियत्वलक्षणस्यातिव्याप्त्यन्तरं दर्शयति ...क्रियाशून्यत्वं चेति । निर्गुणत्वमितिलक्षणमन्यथा परिष्कृत्यातिव्याप्तिमपाकरोति । —तथापीति । गुणवदवृत्तिर्यो धर्मः न पृथिवीत्वादिकं किंतु गुणत्वादिकमेव गुणे गुणानंगीकारात् ; तादृशधर्मवत्त्वस्य गुणादिषु सत्त्वान्नासंभवः , उत्पन्नविनष्टघटेऽविद्यमानत्वान्नातिप्रसङ्गश्चेति भावः । ननु कालिकसंबंधेन गुणेगुणस्य सत्वात् । गुणवान्गुणः तदवृत्तिर्यो धर्मः न हि गुणत्वरूपो धर्मः किंतु सामान्यत्वादि धर्मः तद्धर्मवत्त्वस्य गुणेष्वविद्यमानत्वात् गुणेऽव्याप्तिः ; एवं कर्मण्यपीति चेन्न । समवायेन गुणवत्त्वस्य विवक्षितत्त्वात् ; तथा च समवायेन गुणवान्न हि गुणः अपितुद्रव्यमेव तदवृत्तिर्यो धर्मः गुणत्वरूप धर्मः तद्वत्त्वस्य गुणेषु विद्यमानत्वान्नाव्याप्तिः , एवं कर्मत्वमादयापि कर्मण्यव्याप्तिनिरासः ॥ न चैवं समवायेन गुणवद्द्रव्यं तन्निरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाभाववान्यो धर्मः पृथिवीजलान्यतरत्वरूपधर्मः तादृशान्यतरत्वस्य स्वरूपेणैव सत्वात् । तादृशधर्मवत्वस्य पृथिव्यां विद्यमानत्वादतिव्याप्तिरिति वाच्यं । गुणवन्निरूपितवृत्तितायां स्वरूपसमवायान्यतरसंबन्धावच्छिन्नत्वस्य विवक्षणीयत्वात् ; तथा च पृथिवीजलान्यतरत्वरूपधर्मे पृथिवीनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वस्यैव सत्वेन तादृशान्यतरसंबन्धावाच्छिन्न गुणवन्निरूपितवृत्तित्वाभाववान्यो धर्मः न निरुक्तान्यतरत्वरूपधर्मः किंतु गुणत्वादिकमेव तस्य पृथिव्यादिष्वविद्यमानत्वान्नातिव्याप्तिः । ननु वृत्तितायां स्वरूपसंबन्धावच्छिन्नत्वानिवेशेनैव निरुक्तदोषवारणसंभवेऽन्यतरसंबन्धावच्छिन्नत्वनिवेशो व्यर्थ इति चेन्न । गुणवन्निरूपितस्वरूपसंबन्धा

च्छिन्नावृत्तित्वाभाववद्द्रव्यत्वमादाय द्रव्येऽतिप्रसङ्गात् । अन्यतरस-
म्बन्धावच्छिन्नत्वनिवेशे गुणवन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्व-
स्यैव द्रव्यत्वे सत्वेन न तादृशधर्ममादायातिव्याप्तिः ॥ अथैवमपी
गुणवदवृत्तिगुणत्वस्य कालिकसम्बन्धेन द्रव्ये विद्यमानत्वादतिव्या-
प्तिरिति चेन्न । स्वरूपसमवायान्यतरसंबंधेन तादृशधर्मवत्त्वस्य विवक्षित-
त्वात् समवायसंबन्धेन तादृशगुणत्वस्य द्रव्येऽसत्वेन नातिव्याप्तिरिति ॥
न चैवं समवायसंबन्धेन तादृशधर्मवत्त्वविवक्षणेनैव निरुक्तातिव्या-
प्तिवारणसंभवे स्वरूपसमवायान्यतरसंबन्धावच्छिन्नत्वनिवेशो व्यर्थ इ-
ति वाच्यम् । गुणवदवृत्तिसामान्यत्वादीनां समवायेन सामान्यादिष्व-
सत्वेनाव्याप्तिप्रसङ्गात् ॥ एवं च किं फलितं समवायसंबन्धावच्छि-
न्नगुणनिष्ठाधेयतानिरूपिताधिकरणतानिरूपितस्वरूपसमवायान्यतर-
संबन्धावच्छिन्न वृत्तित्वाभाववद्धर्मनिष्ठस्वरूपसमवायान्यतरसंबन्धावच्छि-
न्नाधेयतानिरूपिताधिकरणत्वं गुणकर्मसामान्यविशेषसमवायाभावानां
लक्षणमिति — क्रियाशून्यत्वमिति । द्वितीयलक्षणे आद्यक्षणावच्छिन्नघ-
टादावतिव्याप्ति लक्षणमन्यथा परिष्कृत्य वारयति । ....कर्मवदवृ-
त्तीति ॥ कर्मवदवृत्तिः पदार्थविभाजको य उपाधिः (धर्मः) तद्व-
त्व तदर्थः । कर्मवदवृत्तिः पदार्थविभाजको य उपाधिः न घटत्वं द्रव्य-
त्वं वा किंतु गुणत्वादिकमेव तद्वत्वस्य घटेद्रव्ये वा असत्वान्नातिव्या-
प्तिः ॥ तदेव स्फुटयति । —नहीति ॥ उपाधौ पदार्थविभाजकत्वनि-
वेशस्य फलं दर्शयति । ....आकाशत्वादिकमिति ॥ तदनिवेशे गग-
नस्य क्रियाशून्यत्वात् कर्मवदवृत्तिर्यो धर्मः गगनत्वरूपधर्मः तद्व-
त्वस्य गगने सत्वादतिव्याप्तिः स्यादेव; तन्निवेशे तु गगनत्वे पदा-
र्थ विभाजकत्वाभावान्न तादृशधर्मवत्त्वमादायातिप्रसङ्गः ॥ अत्रापि-
कर्मवत्वं समवायेन; कर्मवन्निरूपितवृत्तित्वं स्वरूपसमवायान्यतरसं-



बन्धेन; पदार्थविभाजकधर्मवत्त्वं स्वरूपसमवायान्यतरसंबन्धेन बो-
ध्यं । प्रयोजनन्तु पूर्ववद्बोध्यम् । एवं च किं फलितं समवायसंबन्धाव-
च्छिन्नकर्मनिष्ठाधेयतानिरूपिताधिकरणतानिरूपितस्वरूपसमवायान्य-
तरसंबन्धावच्छिन्नवृत्तित्वाभाववत्पदार्थविभाजकोपाधिनिष्ठस्वरूपसमवा-
यान्यतरसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वं गुणकर्मसामा-
न्यविशेषसमवायाभावानां लक्षणमिति ॥ १४ ॥

[ मुक्तावली ]

का ॥ सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।
मु ॥ सामान्येति । सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः ॥

( सुबोधिनी )

सामान्यविशेषसमवायाभावानां लक्षणमुपपादयति ॥ ....सामा-
न्यानधिकरणत्वमिति । साधर्म्यमित्यादिः ॥ ननु सामान्यस्य द्र-
व्ये सत्वात्तत्र सामान्यविशेषसमवायाभावानां विद्यमानत्वेन सामाना-
धिकरण्यसंबंधेन सामान्याधिकरणत्वमेव सामान्यविशेषसमवायाभावानां
न तु तदनधिकरणत्वमित्यव्याप्तिरिति चेन्न । सामान्यनिष्ठ समवा-
यसंबंधावच्छिन्नाधेयतानिरूपिताधिकरणत्वाभावस्य विवक्षितत्वात् सा-
मान्यादिषु समवायेन सामान्यस्यासत्वेनासंभवनिरासात् ॥

[ मुक्तावली ]

का ॥ पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥
मु ॥ पारिमाण्डल्येति ॥ पारिमाण्डल्यमणुपरिमाणम् । कारण-
त्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणं तु न कस्यापि कारण-
म् । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् । तच्च न सं-
भवति परिमाणस्य स्वसजातीयोत्कृष्टपरिमाणजनकत्वनियमात्
महदारब्धस्य महत्तरत्ववत् अणुजन्यस्याणुतरत्वप्रसङ्गात्

( सुबोधिनी )

... पारिमाण्डल्येतीति । पारिमाण्डल्यशब्दार्थमुपपादयति ।.... पारिमाण्डल्यामिति । द्व्यणुकपरिमाणस्याप्युपलक्षकं । तथा च परमाणुपरिमाणद्व्यणुकपरिमाणभिन्नानां कारणत्वं साधर्म्यमित्यर्थः । अणुपरिमाणस्य लक्ष्यतावच्छेदकानाक्रान्तत्वे हेतुमुपपादयति । —अणुपरिमाणंत्विति । अणुपरिमाणस्याकारणत्वेहेतुमुपपादयति । ... तद्धीति । अणुपरिमाणस्य स्वाश्रयेणारब्धं यद्द्रव्यं तद्गतपरिमाणारंभकत्वं वक्तव्यं , पारिमाण्डल्याश्रयपरमाण्वारब्धद्व्यणुकगतपरिमाणारंभकत्वं वक्तव्यं , तदेव न संभवतीत्याह । .... तच्चेति । तत्र हेतुंसदृष्टान्तमुपपादयति । परिमाणस्येति । परिमाणस्य स्वसजातीयोत्कृष्टपरिमाणजनकत्वं नियतं , साजात्यं च परिमाणविभाजकोपाधिधर्मपुरस्सरेण , यथा च महत्वविशिष्टद्रव्यारब्धद्रव्यस्य महत्तरत्वं लोके दृष्टं तथैवाणुत्वाश्रयद्रव्यारब्धद्रव्यस्याणुतरत्वं स्यादित्यर्थः । नन्वण्वारब्धद्रव्यस्याणुतरत्वमभ्युपगम्यत इत्यत आह । —अणुजन्यस्येति । तथा च परमाणुजन्यस्य द्व्यणुकस्याणुतरत्वे तज्जन्यस्यापि त्र्यणुकस्याप्यणुतरत्वप्रसक्तिः एवं सति त्र्यणुकस्याणुतरत्वे द्रव्यचाक्षुषं प्रति सामानाधिकरण्य संबन्धेन महत्वाविशिष्टोद्भूतरूपस्य कारणत्वेन तत्र महत्वाभावात् त्र्यणुकस्य चाक्षुषत्वं न स्यादित्याशयः ॥ ननु तर्हि द्व्यणुकगतपरिमाणं प्रति कस्य वा कारणत्वमिति चेत् परमाणुगतद्वित्वसंख्यायाः कारणत्वमेवंत्र्यणुकगतमहत्वं प्रति द्व्यणुकगतत्रित्वसंख्यायाः कारणत्वमिति बोध्यम् ॥

[ मुक्तावली ]

एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः ॥



( सुबोधिनी )

ननु पारिमाण्डल्याभिन्नानां यदि कारणत्वं लक्षणं तदा परममहत्वातीन्द्रियसामान्यानामपि लक्ष्यतया तेषु कारणत्वाभावादव्याप्तिः ; तेषामलक्ष्यत्वे तादृशालक्ष्यत्वाप्रदर्शनेन मूलस्य न्यूनत्व मतस्तेषामलक्ष्यत्वप्रदर्शनेन मूलस्य न्यूनतां परिहरति । —एवमिति । यथा पारिमाण्डल्यस्य न कारणत्वमेवं परममहत्वस्य अतीन्द्रियसामान्यस्याविशेषाणा ञ्च न कारणत्वमित्यर्थः । तथा हि परममहत्वस्यातीन्द्रियसामान्यविशेषाणां चाप्रत्यक्षत्वेन तेषां प्रत्यक्षं प्रति कारणत्व विषयाविधयापि न संभवाति नापि स्वसजातीयकार्यारंभकत्वेन कारणत्वं परममहत्तरत्वाभावेन स्वसजातीयकार्यस्यैवासत्वात् परममहत्वस्य स्वकार्यस्वसजातीयसामान्यविशेषयोरप्रसिद्धत्वेनातीन्द्रियसामान्यविशेषयोः कारणत्वं संभवति अतस्तेषां कार्यमात्रं प्रति कारणत्वमेव नास्तीत्याशयः , तथा च पारिमाण्डल्यद्व्यणुकपरिमाणपरममहत्वातीन्द्रियसामान्याविशेषाभिन्नानां कारणत्वं साधर्म्यं ,' लक्षणमिति पर्यवसितम् । अत्र महत्व परमत्वविशेषणेन सामान्येऽतीन्द्रियत्वविशेषणेन महत्त्वेन्द्रियग्राहयसामान्ययोः प्रत्यक्षं प्रति विषयविधया कारणत्वेऽपि लक्षणस्य नातिप्रसङ्गः । अन्यथा तयोरप्यलक्ष्यतया स्वविषयकप्रत्यक्षं प्रति कारणत्वेन महत्वसामान्ययोरपि कारणत्वमित्यतिप्रसङ्गप्रसक्तिरित्याशयः ॥

[ मुक्तावली ]

इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वं । ज्ञायमानं सामान्यं न प्रत्यासत्तिः ज्ञायमानं लिङ्गं नानुमितिकारणमित्यभिप्रायेणोक्तं ॥

सुबोधिनी

ननु योगिनां परममहत्त्वविषयकप्रत्यक्षस्योत्पत्या प्रत्यक्षे विषयस्य

कारणत्वेन योगिप्रत्यक्षं प्रति परममहत्वस्य कारणत्वादतिव्याप्तिरि
त्यतआह —इदमपीति । यथा योगिनां अतीतानागतविषयक
प्रत्यक्षं प्रतिविषयस्य कारणत्वं नास्त्येवमेव वर्तमानविषयकप्रत्यक्षं
प्रत्यपि विषयस्य कारणत्वमनङ्गीकृत्यैवैतल्लक्षणमुक्तं तथा च पर
ममहत्वस्य योगिप्रत्यक्षं प्रत्यपिकारणत्वाभावेन नातिव्याप्तिरित्याश
यः ननु ज्ञायमानसामान्यस्यालौकिकप्रत्यक्षं प्रति हेतुत्वेन ज्ञायमा
नपरममहत्वस्याप्यलौकिकप्रत्यक्षं प्रति कारणमेवेत्यातिव्याप्तिरित्यत आ
ह .... ज्ञायमानमिति । सामान्यज्ञानस्यैवालौकिकप्रत्यक्षं प्रतिकारण
त्वनतुज्ञायमानसामान्यस्येतिनिष्कृष्टमताभिप्रायेणैवेदं लक्षणमुपपादितंत
था च परममहत्वज्ञानस्या लौकिकप्रत्यक्षं प्रतिहेतुत्वेऽपि परममहत्वस्या
कारणत्वान्नातिव्याप्तिरित्याशयः ॥ ननु ज्ञायमानलिङ्गस्यानुमितिहेतुत्वे
न परममहत्वलिङ्गकानुमितिं प्रति परममहत्वस्य कारणत्वेन परममहत्वे
तिव्याप्तिरित्यत आह । ज्ञायमानलिङ्गमिति । तथा च लिङ्गज्ञान
स्यैवानुमिति हेतुत्वेन परममहत्वलिङ्गकानुमितिं प्रति तद्ज्ञानस्यका
रणत्वेऽपिपरममहत्वस्याकारणत्वेन नातिप्रसङ्ग इतिभावः

[मुक्तावली]

आत्ममानसप्रत्यक्षे आत्मपरममहत्वस्य कारणत्वात्परममहत्परिमाणमा
काशादेर्बोध्यम् ॥ सुबोधिनी

ननु आत्मनिष्ठपरममहत्वस्यात्ममानसप्रत्यक्षे हेतुत्वात्तत्रातिव्याप्तिरित्यत
आह .... आत्ममानसप्रत्यक्ष इति । तथा च लक्ष्यतावच्छेदकको
टौ निविष्टपरममहत्वे आत्मपरममहत्वाभिन्नत्वं निवेशनीयं तथा सतिआ
त्मपरममहत्वस्यापि लक्ष्यतया नातिप्रसङ्ग इतिभावः ॥

[मुक्तावली]

तस्यापि न कारणत्वमित्याचार्याणामाशयं इत्यन्ये । तन्न ; ज्ञानाति



रिक्त प्रत्येवाकारणतया आचार्यैरुक्तत्वात् ॥ १५ ॥

( सुबोधिनी )

केषांचिन्मतमुपन्यस्यति.... तस्यापीति । आत्ममानसं प्रति आत्म
परममहत्वस्यापि कारणत्वं नास्तीत्याचार्याणामाशय इति केचिद्वदन्ति
त्यर्थः ' तथा चात्मपरममहत्वस्याप्यकारणतया न तत्रातिव्याप्तिरिति
तद्भिन्नत्वं लक्ष्यतावच्छेदककोटौ न निवेश्य मित्याशयः । आचार्याशयव
र्णनपुरःसरं पूर्वोक्तमतं निरस्यति .... तन्नेति । कारणत्वं च ज्ञा
तृधर्मेतरकार्यापेक्षयेत्याचार्यग्रन्थः । ज्ञातृधर्माः ज्ञानादयः तदातिरिक्त
भावकार्यं प्रति पारिमाण्डल्यभिन्नानां कारणत्वमिति तदर्थः । तथा-
चात्मपरममहत्वस्य ज्ञानं प्रति न कारणत्वमिति नैवाचार्याणामाश
यः । किन्तु ज्ञानातिरिक्तभावकार्यं प्रति कारणत्वं नास्तीति तेषामाशय
अतो परममहत्वे आत्मनिष्टे अतिव्याप्तिवारणाय लक्ष्यतावच्छेदककोटौ
परममहत्वांशे आत्मपरममहत्वभिन्नत्वं निवेशनीय मित्याशयः । एत्र च
किंफलितं पारिमाण्डल्यद्व्यणुकपरिमाणात्मपरममहत्वाभिन्नपरममहत्वावि
शेषातीन्द्रियसामान्यभिन्नानां कारणत्वं साधर्म्यमितिफलितम् ॥ १५ ॥

मुक्तावली

**कां ॥ अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।**
**कारणत्वं भवेत्तस्य त्रैविध्यम्परिकीर्तितम् ॥ १६ ॥**
**समवायिकारणत्वं**
**ज्ञेयमथाप्यसमवायिहेतुत्वम् ।**
**एवं न्यायनयज्ञै**
**स्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥**

मु ॥ ननु कारणत्वं किमत आह । अन्यथासिद्धेति । तस्य कार
णत्वस्य ॥ १६ ॥ १७ ॥

( सुबोधिनी )

मूलेऽन्यथासिद्धिशून्यस्येति ।अन्यथासिद्धिशून्यत्वे सति कार्यनिय.
तत्वे सति कार्यपूर्ववृत्तित्वं कारणस्य लक्षणं । कार्यनियतत्वं च कार्याधि
करणवृत्त्यत्यन्ताभावाप्रतियोगित्वं।कार्यं घटः कार्याधिकरणं कपालः तद्वृ
त्तियों ऽत्यन्ताभावः नहि स्वजन्यभ्रमिजन्यभ्रमिमत्तासम्बंधेन दण्डो
नास्तीतिप्रतीतिसिद्धो ऽभावः परन्तु पटाभावः तादृशाभावप्रतियो
गित्वं पटे , तदप्रतियोगित्वस्यकार्य ( घट )पूर्ववृत्तित्वस्य अन्यथासिद्धि
शून्यत्वस्य च त्रयाणामपि दण्डे विद्यमानत्वाल्लक्षणसङ्गतिः ॥ का
र्याधिकरणे कपाले स्वाश्रयभ्रमिजन्यभ्रमिवत्तासंबंधेन दंडत्वदंडरूप.
योः सत्वेन दंडत्वदंडरूपयोः निरुक्तसंबंधेन कार्यव्यापकत्वात् का.
र्यपूर्ववृत्तित्वादतिव्याप्तिरतो ऽन्यथासिद्धिशून्यत्वनिवेशः । तयोरन्यथा.
सिद्धत्वेन नातिप्रसङ्गः । कार्यव्यापकत्वस्य कार्ये सत्वात्तत्रा.
तिव्याप्तिवारणाय कार्यपूर्ववृत्तित्वनिवेशः । कार्ये कार्यपूर्ववृत्तित्वा.
भावात्नातिप्रसङ्गः॥ कार्यपूर्ववृत्तित्वस्य रासभादौ विद्यमानत्वाद्रासभे.
ऽतिव्याप्तिरतः कार्यव्यापकत्वनिवेशः।ननु रासभादिषु अन्यथासि.
द्धिशून्यत्वनिवेशेनैवातिप्रसङ्गवारणसम्भवे कारणलक्षणे कार्यव्या.
पकत्वनिवेशो व्यर्थइतिचेन्न । अन्यथासिद्धिशून्यत्वं चानन्यथासि.
द्धत्वं तच्चान्यथासिद्धभिन्नत्वं तत् तु निखिलान्यथासिद्धसाधारणम
नुगतमेकं वक्तुमशक्यमिति लक्षणे ऽन्यथासिद्धं यद्यत्तत्तद्भेदकूटो
निवेशनीयः तथा चा नंतरासभादीनांभेदकूटनिवेशापेक्षया
कार्यव्यापकत्वनिवेशस्यैव लघुत्वात् , तथा च रासभादीनांकार्य.
व्यापकत्वनिवेशेनैवव्यावृत्तिः दंडत्वादीनां कार्यव्यापकत्वसत्वे ऽपि ते
षामन्यथासिद्धत्वेन तत्तद्भेदकूटो लक्षणे निवेशनीयः ॥ एवं च किं
फलितं , अन्यथासिद्धं यद्यत् तत्तद्भेदकूटवत्वे सति कार्यव्यापक



त्वे सति कार्यपूर्ववृत्तित्वं कारणस्य लक्षणमिति फलितम् ॥
तस्यकारणत्वस्येति मुक्तावल्यां त्रैविध्यमित्यनेनान्वयः ॥ १६ ॥
तादृशत्रैविध्यमेवोपपादयतिमूले । समवायिकारणत्वमिति । समवायि
कारणत्वमेकं , असमवायिकारणत्वं द्वितीयं . तृतीयं निमित्तकारण.
त्वमिति एवंन्यायनयज्ञैः न्यायशास्त्रविद्भिः उक्तं प्रतिपादितमित्यर्थः ॥ १७

[ मुक्तावली ]

**का ॥ यत्समवेतं कार्यं**
**स्याद्ज्ञेयन्तु समवायिजनकं तत् ।**

( सुबोधिनी )

मूले यत्समवेतमिति । अस्मिन् श्लोके द्वितीयपादे केषुचित्पु
स्तकेषु "भवति ज्ञेयन्तु समवायिजनकं तत् ,, इति पाठो दृश्यते
सच पाठः " लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमेजः ,,
इत्यार्यालक्षणविरुद्धत्वेनोपेक्षणीयः। यस्मिन्समवेतं सत् यत्कार्यमुत्प.
द्यते तत्कार्यं प्रति तत्समवायिकारणमित्यर्थः । कपाले समवायसंबं
न्धेन वर्तमानं सत् घटात्मककार्यमुत्पद्यते तादृशघटकार्यं प्रति
कपालं समवायिकारणं भवति । नन्वत्र कार्यतावच्छेदककारणताव
च्छेदकसंबंधौ कीदृशौ। घटाधिकरणे कपाले तादात्म्यसंबंधे न
कपालस्य विद्यमानत्वेन कार्याधिकरणे कारणं येन संबंधेन वि.
द्यते कारणतातत्संबंधावच्छिन्नेति कपालनिष्ठकारणता तादात्म्यसं
बंधावच्छिन्नेति ; कारणतावच्छेदकसंबंधः तादात्म्यसंबंधः, एवं का.
रणस्य कारणतावच्छेदकसंबंधेनाधिकरणे येन संबंधेन कार्यं व.
र्तते स संबंधः कार्यतावच्छेदकसंबंध इति कारणतावच्छेदकता
दात्म्यसंबंधेनकारणस्य कपालस्याधिकरणे समवायेन कार्यस्य ( घटस्य )
विद्यमानत्वात् कार्यतावच्छेदकसंबंधः समवाय इति ज्ञातव्यः ,तथ.

च समवायसंबंधावच्छिन्नकार्यतानिरूपिततादात्म्यसंबंधावच्छिन्नकारणत्वं समवायिकारणस्य लक्षणमिति पर्यवसितम् ॥ नन्वत्र कार्यतायां समवायसंबंधावच्छिन्नत्वनिवेशो व्यर्थ इतिचेत्न । प्रत्यक्षे विषयस्य तादात्म्येन कारणतया विषयतासंबन्धेन घटप्रत्यक्षस्य घटे जायमानतया विषयतासंबन्धावच्छिन्नघटप्रत्यक्षनिष्ठकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वस्य घटे विद्यमानतया घटेऽतिव्याप्त्यापत्तेः । अतः कार्यतायां समवायसंबन्धावच्छिन्नत्वनिवेशः, तथा च विषयतासंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वस्य घटेविद्यमानत्वेऽपि समवायसंबन्धावच्छिन्न घटप्रत्यक्षनिष्ठकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वस्य घटेऽविद्यमानत्वान्न प्रत्यक्षसमवयिकारणत्वस्य घटेऽतिप्रसङ्गः ॥ नन्वेवमपि कारणतायां तादात्म्यसंबन्धावच्छिन्नत्वनिवेशो व्यर्थ इति चेन्न । समवायसंबन्धावच्छिन्नघटनिष्ठकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वस्य कपालद्वयसंयोगे सत्वेन कपालद्वयसंयोगेऽतिव्याप्त्यापत्तेः ॥ तन्निवेशे तु समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वस्य कपालद्वयसंयोगेऽसत्वान्नातिप्रसङ्गः ॥

[मुक्तावली]

**का ॥ तत्रासन्नं जनकं**

**द्वितीयमाभ्यां परं तृतीयं स्यात् ॥१८॥**

**मु ॥ तत्रेति । समवायिकारणे प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः ॥**

(सुबोधिनी)

....**तत्रेतीति** । तत्पदार्थमुपपादयति .... **समवायिकारणमिति** । प्रत्यासन्नं समवेतमित्यर्थः । तथा च समवायिकारणे कार्यस्य समवायसंबंधेन विद्यमानतया तादृशसमवायसंबंधेन कार्याधिकरणेकारण





स्य समवायसंबन्धेन सत्वात्कार्यकारणतावच्छेदकसंबन्धौ समवायौ । एवञ्च समवायसंबधावच्छिन्नकार्यतानिरूपितसमवायसंबंधावच्छिन्नकारणत्वमसमवायिकारणस्य लक्षणं पर्यवसितम् । तथा हि समवायसंबंधावच्छिन्ना या कार्यता घटनिष्ठा कार्यता तादृशकार्यतानिरूपिता या समवायसंबन्धावच्छिन्ना कारणताकपालद्वयसंयोगनिष्ठा कारणता तादृशकारणत्वस्य कपालद्वयसंयोगे सत्वाल्लक्षणसंगतिः । नन्वत्र कार्यतायां समवायसंबन्धावच्छिन्नत्वनिवेशो व्यर्थइति चेन्न । विषयतासंबन्धेनघटेजायमानघटप्रत्यक्षं प्रति समवायसंबन्धेन घटविद्यमानोद्भूतरूपस्य कारणत्वेन विषयतासंबंधावच्छिन्नकार्यतानिरूपितसमवायसंबंधावच्छिन्नकारणत्वस्य घटरूपे सत्वेन घटरूपेऽतिव्याप्तिप्रसङ्गात् । कार्यतायां समवायसंबधावच्छिन्नत्वनिवेशे समवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वस्य घटरूपेऽसत्त्वात् नातिप्रसङ्गः ॥ नन्वेवमपि कारणतायां समवायसंबन्धावच्छिन्नत्वनिवेशो व्यर्थ इतिचेत्, न । समवायसम्बन्धावच्छिन्नकार्यतानिरूपित तादात्म्यसंबन्धावच्छिन्नकारणत्वमादाय समवायिकारणेऽतिप्रसङ्गस्य वारकतयातन्निवेशस्यावश्यकत्वात् ॥

[मुक्तावली]

**अत्र यद्यपि तुरीतन्तुसंयोगे पटासमवायिकारणत्वं स्यात् वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात् एवं ज्ञानादीनामपीच्छाद्यसमवायिकारणत्वं स्यात्, तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगाभिन्नत्वं देयम्, तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयं । आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्व**

नास्ति तेनतद्भिन्नत्वं सामान्यलक्षणे देयमेव ॥

(सुबोधिनी)

तुरीतन्तुसंयोगस्य तुरीपटसंयोगं प्रत्यसमवायिकारणत्वादसमवायिकारणसामान्यलक्षणस्य न तुरीतन्तुसंयोगेऽतिव्याप्तिरतः पटासमवायिकारणविशेषलक्षणस्य तुरीतन्तुसंयोगेतिव्याप्तिं दर्शयति ....अत्रेति । तुरीतन्तुसंयोगस्य पटस्य च तन्तुषु समवायेन सत्वेन पट'कार्य'नियतपूर्ववृत्तित्वेन च पटनिष्ठसमवायसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वस्य तुरीतन्तुसंयोगेविद्यमानतया तुरीतन्तुसंयोगेऽतिव्याप्तिरित्याशयः । न च तुरीतन्तुसंयोगस्य पटं प्रत्यन्यथासिद्धत्वेनानन्यथासिद्धत्वाभावेन कथमतिव्याप्तिरिति वाच्यम् । सर्वानुगतान्यथासिद्धत्वस्य दुर्वचत्वेन तत्तद्भिन्नत्वस्यैव लक्षणे निवेशनीयतया तुरीतन्तुसंयोगभिन्नत्वस्य लक्षणेऽनिविष्टतया अतिव्याप्तेर्दुर्वारत्वात् । एवमभिघातसंयोगासमवायिकारणलक्षणस्यातिव्याप्तिमुपपादयति । ....वेगादीनामिति । अभिघातसंयोगं प्रति क्रियायाः कारणत्वं न तु वेगस्य तस्य निमित्तत्वाभ्युपगमात् , तथा च वेगस्याभिघातसंयोगस्य च एकस्मिन्मृत्पिण्डे समवायेन विद्यमानतया अभिघातसंयोगरूपकार्यनियतत्वेन च अभिघातसंयोगासमवायिकारणलक्षणस्य वेगेऽतिव्याप्तिरितिभावः ॥ एवमसमवायिकारणसामान्यलक्षणस्याप्यतिव्याप्तिं दर्शयति ... एवंज्ञानादीनामिति । आदिना सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां ग्रहणम् । तेषां कुत्राप्यसमवायिकारणत्वाभावादसमवायिकारणसामान्यलक्षणस्यैवातिव्याप्तिः , तथा हि ज्ञानादीनां इच्छादीनां चात्मनि समवायेन सत्वेन इच्छादिरूपकार्यनियतपूर्ववृत्तित्वेन चातिप्रसङ्ग इत्याशयः । समाधत्ते । .... तथापीति । तथा च पटासमवायिकारणस्य पटनिष्ठसमवायिसंबन्धावच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वे सति तुरीतंतुसंयोगभिन्नत्वं लक्षणम् ॥ एवमभिघातसंयोगासमवायिकारणलक्षणे वेगादिभिन्नत्वं निवेशनीयमित्याशयः ॥ तुरीतंतुसंयोगभिन्नत्वं वेगादिभिन्नत्वं चासमवायिकारणसामान्यलक्षण एव निवेश्यतामित्यत आह । — तुरीतंतुसंयोगस्त्विति । तथा च तुरीतन्तुसंयोगस्य तुरीपटसंयोगं , वेगादीनां वेगस्यन्दादिकं चासमवायिकारणत्वेन तयोरसमवायिकारणसामान्यलक्षणलक्ष्यतया सामान्यलक्षणे तत्तद्भिन्नत्वनिवेशे असमवायिकारणसामान्यलक्षणस्य तयोरव्याप्तिः स्यादतः सामान्यलक्षणे तन्नदोयं विशेषलक्षण एव तत्तद्भिन्नत्वं देयमित्याशयः । आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वाभावात्सामान्यलक्षणएव ज्ञानादिभिन्नत्वं निवेशनीयमित्युपपादयति । — आत्मविशेषगुणानां त्विति । आत्मनि जायमानज्ञानादिकं प्रति आत्ममनस्संयोगस्यैवासमवायिकारणत्वेनज्ञानादीनामसमवायिहेतुत्वाभावात् । सामान्यलक्षणे ज्ञानादिभिन्नत्वनिवेशेऽपि नाव्याप्तिप्रसक्तिरिति सामान्यलक्षणे ज्ञानादिभिन्नत्वमेव निवेशनीयमित्याशयः ॥

[मुक्तावली]

अत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च आद्यं यथा घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणं तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्य एकस्मिन्कपाले प्रत्यासत्तिरस्ति द्वितीयं यथा घटरूपं प्रति कपालरूपमसमवायिकारणं स्वगतरूपादिकं प्रति समवायिकारणं घटः तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति तथाच क्वचित्समवायसम्बन्धेन क्वचित्स्वसमवायिसमवेतत्वसम्बंधेनेति

फलितोर्थः इत्थं च कार्ये कार्यकारणैकार्थान्यतरप्रत्यासत्त्या समवा
यिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्य
लक्षणं पर्यवसितम् (सुबोधिनी)
घटरूपं प्रति कपालरूपस्यासमवायिकारणत्वेन तत्र समवायसंबन्धा
वच्छिन्नकार्यतानिरूपितसमवायसंबन्धावच्छिन्नकारणत्वस्यासत्त्वेन कपा-
लादिरूपे अव्याप्तिरित्यत आह .... अत्रेति । कार्यैकार्थप्रत्यासत्त्या स
मवायसंबन्धेन, कारणैकार्थप्रत्यासत्त्या स्वसमवायिसमवेतत्वसंबंधेनेत्यर्थः
कार्यैकार्थप्रत्यासत्त्या कारणेप्रत्यासन्नमसमवायिकारणमुदाहरति—आ
द्यं यथेति । तत्र लक्षणसमन्वयमुपपादयति तत्र —कार्येणेति । का
रणैकार्थप्रत्यासत्त्या कारणे प्रत्यासन्नमसमवायिकारणमुदाहरति । द्वि
तीयं .... यथेति । तत्र लक्षणसमन्वयमुपपादयति ....स्वगतरूपादिक-
प्रतीति । उभयसाधारणसमवायिकारणलक्षणं निष्कृष्टमुपापदयति....इ
त्थंचेति । ज्ञानादिभिन्नत्वे सति समवायसंबन्धावच्छिन्नकार्यतानिरू-
पितसमवाय स्वसमवायिसमवेतत्वान्यतरसंबन्धावच्छिन्नकारणत्वमसमवा-
यिकारणस्य लक्षणम् इति पर्यवसितम् । कपालद्वयसंयोगे अव्याप्ति
वारणाय कारणतायांसमवायसंबन्धावच्छिन्नत्वनिवेशः । कपालरूपे ऽ
व्याप्तिवारणाय कारणतायां स्वसमवायिसमवेतत्वसंबन्धावच्छिन्नत्वनि-
वेशः । तादृशोभयसंबन्धावच्छिन्नकारणत्वाप्रसिद्ध्या ऽ संभवः स्यादि-
ति तादृशसंबंधद्वयस्यान्यतरत्वेन निवेशः ॥

[मुक्तावली]

**आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृ**
**तीयंनिमित्तकारणमित्यर्थः** ॥१८॥ (सुबोधिनी)

आभ्यामित्यस्य सर्वनामत्वेन तदर्थमुपपादयति —आभ्यमिति
तथा च समवायिकारणभिन्नत्वे सत्यसमवायिकारणभिन्नत्वेसतिकारण



त्वंनिमित्तकारणस्य लक्षणमिति पर्यवासितम् । ननु घटंप्रतिनिमित्त-
कारणस्य दंडस्य स्वगतरूपं प्रति समवायिकारणत्वेन सामान्यतो
समवायिकारणभिन्नत्वस्यदंडे ऽसत्त्वादव्याप्तिरिति चेत् न समवायिकार-
णताभिन्नाअसमावायिकारणताभिन्ना या कारणता तदाश्रयत्वस्य विव
क्षितत्वात् । तथा च दण्डे समवायिकारणताभिन्नासमवायिकारणता
भिन्ननिमित्तकारणत्वस्य सत्त्वेन नाव्याप्तिः , समवायिकारणे ऽति-
व्याप्तिवारणाय कारणतायां समवायिकारणताभिन्नत्वनिवेशः ' अस
मवायिकारणे ऽतिव्याप्तिवारणाय कारणतायामसमवायिकारणताभि-
न्नत्वनिवेशः पारिमाण्डल्यादावतिव्याप्तिवारणाय कारणत्वनिवेशः ।१८

[मुक्तावली]

**का ॥ येन सह पूर्वभावः ; कारणमादाय वा यस्य ।**

मु ॥ इदानीमन्यथासिद्धत्वमेव क्रियतां तदाह । **येनेति** ।
यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येनरूपेण गृह्यते तत्कार्यं प्र
ति तद्रूपमन्यथासिद्ध मित्यर्थः । यथा घटं प्रति दण्डत्व-
मिति ॥ (सुबोधिनी)

अनन्यथासिद्धत्वघटितकारणलक्षणनिरूपणानन्तरं प्रसङ्गसङ्गत्य
यस्य यस्यान्यथासिद्धत्वं तत्तत्प्रतिपादनार्थं मूलमवतारयति
— इदानीमित्यादिना । येनेतीति । मूलेयेनेत्यस्य यद्रूपेणत्यर्थः त
था च यद्रूपेणकारणस्य यत्कार्यं प्रति पूर्वभावः पूर्ववृत्तित्वं गृ-
ह्यते तत्कार्यं प्रति तद्रूपं , कारणतावच्छेदकं , अन्यथासिद्धं
एतादृशार्थमेवस्फुटयति मुक्तावल्यां । ...यत्कार्यं प्रतीति । उदा
हरति । — **यथेति** । घटं प्रति दण्डस्य दण्डत्वेन पूर्ववृत्तित्वं
गृह्यते तादृशघटं प्रति दण्डत्वमन्यथासिद्धमित्याशयः । एवं स
र्वत्र कारणतावच्छेदकमन्यथासिद्धमिति फलितोर्थः ॥

[मुक्तावळी]

द्वितीयमन्यथासिद्धमाह —कारणमिति । यस्यस्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः कारणमादायैवान्वयव्यतिरेकै गृह्येते तदन्यथासिद्धम्;यथा दण्डरूपम् ॥

(सुबोधिनी)

कारणमित्यादिद्वितीयमन्यथासिद्धमित्याह। द्वितीयमन्यथासिद्धमाहेति । यस्येति । अन्वयोनाम तत्सत्वे तत्सत्वं, व्यतिरेको नाम तदभावे तदभावः । तथा च यस्य कारणं विहाय यत्कार्यं प्रत्यन्वयव्यतिरेकौ न स्तः कारणमादायैव कारणगतगुणस्यान्वयव्यतिरेकौ स्तः कारणस्यान्वयव्यतिरेकयोः सत्वात्तत्पुरःसरेणैव तद्गतगुणस्यापि अन्वयव्यतिरेकौ स्तः तत्कार्यं प्रति तदन्यथासिद्धमित्याशयः । उदाहरति । यथेति । दण्डरूपस्यघटंप्रति दण्डं विना स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः दण्डस्यान्वयव्यतिरेकयोः सत्वाद्दण्डरूपस्यापि अन्वयव्यतिरेकौ गृह्येते इति घटं प्रति दण्डरूपादिकमन्यथासिद्धमित्यर्थः [मुक्तावळी]

आ ॥ अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥ १९ ॥

मु ॥ तृतीयमाह । अन्यं प्रतीति । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटादिकं प्रत्याकाशस्य तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात्तद्धि शब्दसमवायिकारणत्वम् । एवं च तस्य शब्दं प्रति कारणत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम् ॥

(सुबोधिनी)

—मूलेऽन्यं प्रतीति । कार्यांतरं प्रतीत्यर्थः । पूर्वभावे पूर्ववृत्तित्वे ज्ञात एव, यत्पूर्वभावविज्ञानं यादृशकार्यपूर्ववृत्तित्वज्ञानं यस्य भवति, तादृशकार्यं प्रति तदन्यथासिद्धमित्यर्थः । एतादृशार्थमेव स्फुटयति मुक्तावल्यां .... अन्यं प्रति पूर्ववृत्तित्व इति । उदाहरति .... यथेति । तदेवोपपादयति ... तस्येति । आकाशत्वं च शब्दसमवायिकारणत्वं ; घटं प्रत्याकाशस्य कारणत्वे वक्तव्ये कारणतावच्छेदकमाकाशत्वं वाच्यं। अवच्छेद्यज्ञानं प्रत्यवच्छेदकज्ञानस्य कारणतया शब्दसमवायिकारणत्वरूपाकाशत्वज्ञानं विना आकाशे घटपूर्ववृत्तित्वरूपघटकारणताज्ञानं न संभवति । शब्दसमवायिकारणत्वं च शब्दपूर्ववृत्तित्वं, एवं च शब्दं प्रति पूर्ववृत्तित्वज्ञानानन्तरमेव घटं प्रत्याकाशस्य पूर्ववृत्तित्वज्ञानं संभवतीति घटं प्रत्याकाशस्यान्यथासिद्धत्वमित्याशयः ॥



[मुक्तावळी]

ननु शब्दाश्रयत्वेन तस्य कारणत्वे कान्यथासिद्धिरिति चेत् पञ्चमीति गृहाण ॥ (सुबोधिनी)

नन्वाकाशत्वं च शब्दाश्रयत्वं तथा चाकाशस्य घटकारणत्वे कारणतावच्छेदकं शब्दाश्रयत्वं एवं च शब्दपूर्ववृत्तित्वज्ञानं विनैवावच्छेदकशब्दाश्रयत्वज्ञानसंभवेनाकाशे घटपूर्ववृत्तित्वज्ञानं सम्भवतीति आकाशस्य घटकारणत्वापत्तिरित्यत आह । .... नन्विति । आकाशे तृतीयान्यथासिद्धत्वाभावेऽपि पञ्चमान्यथासिद्धत्वसत्वान्न घटकारणत्वमाकाशस्येति भावः ॥ [मुक्तावळी]

नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत् कत्वादिकं, विशेषपदार्थो वेति ॥ १९ ॥

( सुबोधिनी )

नन्वाकाशत्वस्य शब्दसमवायिकारणत्वे आकाशस्य शब्दं प्रति

कारणत्वेऽवच्छेद्यावच्छेदकयोरैक्येन स्वग्रहाधीनस्वग्रहकत्वरूपात्माश्रय इत्याशङ्क्य परिहरति ।....नन्विति । —कवत्वादिकमिति । गकाररूपशब्दसमवायिकारणतावच्छेदकं कवत्वं, ककाररूपशब्दसमवायिकारणतावच्छेदकं गवत्वमित्येवं बोध्यं । तथा चावच्छेद्यावच्छेदकयोर्भिन्नत्वेन नात्माश्रय इति भावः । लाघवादाह । .... विशेषपदार्थो वेति ॥ १९ ॥ [ मुक्तावळी ]

का ॥ जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते ।

मु ॥ चतुर्थमन्यथासिद्धमाह । ...जनकं प्रतीति । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा कुलालपितुर्घटं प्रति, तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वेऽन्यथासिद्धिः । कुलालत्वेन रूपेण जनकत्वे त्विष्टापत्तिः । कुलालमात्रस्य घटं प्रति जनकत्वात् । (सुबोधिनी)

मूले जनकं प्रतीति । यत्कार्यजनकं प्रतीत्यर्थः । यस्य यत्कार्यजनकं प्राति पूर्ववृत्तित्वमपरिज्ञाय यत्कार्यं प्रति यस्य पूर्ववृत्तित्वं न गृह्यते तत्कार्यं प्रतितदन्यथासिद्धमित्यर्थः । पर्यवसितार्थमुपपादयति मुक्तावल्याम् । —यत्कार्यजनकं प्रतीति । उदाहरति । ....यथेति । कुलाले धर्मद्वयं विद्यते कुलालपितृत्वं कुलालत्वं चेति तत्र कुलालपितृत्वेन घटं प्रति कुलालस्य कारणत्वेऽन्यथासिद्धत्वमेवेत्युपपादयति । —तस्य हीति । कुलालस्य कुलालपितृत्वेन घटं प्रति जनकत्वे घटजनककुलालं प्रति पूर्ववृत्तित्वं गृहीत्वैव घटं प्रतिपूर्ववृत्तित्वं गृहीतमिति कुलालपिता अन्यथासिद्ध इत्याशयः । कुलालत्वेन जनकत्वेतु निरुक्तान्यथासिद्धलक्षणानाक्रान्तत्वेन घटंप्रति तस्यापि कारणत्वेन च इष्टापत्तिरेवेति भावः । कुलालपितुरपि कुलालत्वेन जनकत्वे हेतुमुपपादयति । ...कुलालमात्रस्येति ॥ इति चतुर्थमन्यथासिद्धम् ॥ [ मुक्तावली ]



का ॥ अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्ववर्तिनः ॥ २० ॥

मु ॥ पंचममन्यथासिद्धमाह । – अतिरिक्तमिति । अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणं, अनेकद्रव्यत्वमन्यथासिद्धम् । न च वैपरीत्ये किं विनिगमकमिति वाच्यम् । महत्त्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ २० ॥

(सुबोधिनी)

.... पञ्चममिति । मूलस्यार्थमुपपादयति .... अवश्यक्लृप्तेति । रासभादेः यत्किञ्चिद्घटव्यक्तिं प्रति नियतपूर्ववृत्तित्वेऽपि घटसामान्यं प्रत्यवश्यक्लृप्तानियतपूर्ववर्तिनः दण्डादेः घटकार्यसंभवे दण्डादिभिन्नं रासभादिकमन्यथासिद्धमितिपर्यवसितम् । अत एव एतादृशान्यथासिद्धत्वस्वीकारादेवेत्यर्थः । प्रत्यक्षे अनेकद्रव्यत्वस्यैव कारणत्वमास्तां, महत्त्वस्यैवान्यथासिद्धत्वमस्तु विनिगमनाभावादिति शङ्कते । .... न चेति । वाच्यमिति परेणान्वयः । समाधत्ते । .... महत्त्वजातेरिति । प्रत्यक्षे महत्त्वस्य कारणत्वे कारणतावच्छेदकं महत्त्वत्वं तच्च जातिविशेषः, अनेकद्रव्यत्वस्य कारणत्वे कारणतावच्छेदकमनेकद्रव्यत्वत्वं, तच्चानेकद्रव्येतरासमवेतत्वे सति अनेकद्रव्यसमवेतत्वं तच्च गुरु, तदपेक्षया महत्त्वत्वजातेरेव कारणतावच्छेदकत्वस्वीकारे लाघवं विनिगमकमतोऽनेकद्रव्यत्वं न प्रत्यक्षे कारणमपित्वन्यथासिद्धमेवेत्याशयः ॥ २० ॥ [ मुक्तावली ]

का ॥ एते पंचान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥

**तृतीयन्तु भवेद्व्योम कुलालजनको ऽपरः।**
**पंचमो रासभादिः स्यात् एतेष्वावश्यकस्त्वसौ ॥ २२ ॥**

—रासभादिरिति । यद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववृत्तित्व-मस्ति तत्रापि तद्घटजातीयं प्रति सिद्धकारणभावैर्दण्डादीभिरेव तद्व्यक्तेरपि संभवेरासभो ऽन्यथासिद्ध इति भावः ।

(सुबोधिनी)

....रासभादिरितीति । एकघटव्यक्तिं प्रति रासभस्य नियतपूर्ववृत्तित्वे ऽपि तद्घटवृत्ति घटत्वजात्यश्रयेतरघटान्प्रति नियतपूर्ववृत्तिभिर्दण्डादिव्याक्तिभिरेव तद्घटस्याप्युत्पत्तिसंभवे तद्घटं प्रति रासभस्य न कारणत्व मपित्वन्यथासिद्धत्वमेवेत्यर्थः ॥

[मुक्तावली]

एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमो ऽन्यथासिद्ध आवश्यकः तेनैव परेषां चरितार्थत्वात्। तथा हि दण्डादिभिरवश्य-क्लृप्तनियतपूर्ववृत्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम् न च वैपरीत्ये किं विनिगमकमिति वाच्यम्। दण्डत्वस्य कारणत्वे दण्डघटितत्वायाः परंपरायाः संबन्धत्वकल्पने गौरवात् । एवमन्येषामप्यनेनैव चरितार्थत्वं संभवतीति ॥ २१ ॥ २२ ॥

(सुबोधिनी)

पञ्चसु अन्यथासिद्धेषु कस्य वा आवश्यकत्वमित्यत आह । —एतेष्विति । पञ्चमस्य आवश्यकत्वे हेतुमुपपादयति ....तेनैवेति । पञ्चमेन प्राथमिकान्यथासिद्धस्य चरितार्थत्वं दर्शयति । तथाहीति । शंकते ।—न चेति । किमिति कुत्सार्थे । दण्डस्येति कारणत्वे विनिगमकं, (एक पक्षव्यवस्थापकयुक्तिः) नास्तीत्यर्थः । दण्डत्वस्य घटं प्रत्यकारणत्वे युक्तिमुपपादयति । —दण्ड-



त्वस्येति । तथा च दण्डत्वस्य कारणत्वे दण्डत्वत्वं कारणतावच्छेदकं वाच्यम्, तच्च दण्डेतरासमवेतत्वे सति निखिलदण्डसमवेतत्वं तच्च गुरु, दण्डस्य कारणत्वे कारणतावच्छेदकं दण्डत्वं तच्च जातिरिति कारणतावच्छेदकलाघवात् दण्डस्यैव कारणत्वं न दण्डत्वस्य; कारणतावच्छेदकगौरवादिति भावः ॥ २१ ॥ २२ ॥

[मुक्तावली]

**का ॥ समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।**

मु ॥ समवायीति । स्पष्टम् ॥

(सुबोधिनी)

मूले समवायिकारणत्वमिति । द्रव्यस्यैवेति एव कारेण न त्वितरेषां साधर्म्यं । परन्तु द्रव्याणां समवायिकारणत्वं साधर्म्यमित्यर्थः । ननूत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियञ्च निष्ठतीति न्यायेन उत्पन्नविनष्टघटे उत्पत्तिक्षणावच्छेदेन क्रियायाः गुणस्य वा अजायमानत्वेन द्वितीयक्षणे घटस्यैव विनष्टत्वेन तादृशघटे समवायिकारणत्वाभावादव्याप्तिरिति चेन्न । समवायिकारणवृत्तिपदार्थविभाजकधर्मवत्वस्य विवक्षितत्वात् । तथा च जन्यपदार्थानां समवायिकारणं द्रव्यमेव, तद्वृत्तिपदार्थविभाजकधर्मः द्रव्यत्वरूपधर्मः तादृशधर्मवत्वस्योत्पन्नविनष्टघटे ऽपि सत्वान्नाव्याप्तिः ॥

[मुक्तावली]

**का ॥ गुणकर्ममात्रवृत्तिज्ञेयमथाप्यसमवायिहेतुत्वम् ॥ २३ ॥**

मु ॥ गुणेति । असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं न तु गुणकर्मणोः साधर्म्यमित्यत्रतात्पर्यम् । अथ वाऽसमवायिकारणवृत्तिसत्ताभिन्नजातिमत्वं तदर्थः तेन ज्ञानादीनामसमवायिकारणत्वविरहे ऽपि नाव्याप्तिः ॥ २३ ॥

(सुबोधिनी)

— गुणेतीति । ज्ञानेच्छादीनां कुत्राप्यसमवायिकारणत्वाभावादसमवायिकारणत्वस्य साधर्म्यस्य ज्ञानेच्छादिष्वव्याप्तिरतो गुणकर्मभिन्नानामसमवायिकारणत्वं वैधर्म्यमित्युपपादयति । —असमवायिकारणत्वमिति । साधर्म्यनिरूपणप्रकरणे वैधर्म्यनिरूपणमसङ्गतमित्यत आह — अथ वेति । असमवायिकारणत्वस्य ज्ञानादिष्वसत्वेनाव्याप्तिरतो लक्षणमन्यथा परिष्करोति । .... **असमवायिकारणवृत्तीति ।** कार्यमात्रं प्रति गुणस्य कर्मणश्चासमवायिकारणत्वेन असमवायिकारणवृत्तिः सत्ताभिन्ना या जातिः गुणत्वजातिः कर्मत्वजातिश्च तद्वत्वस्य 'तादृशगुणत्ववत्वस्य, गुणेषु 'कर्मत्ववत्वस्य, कर्मसु विद्यमानत्वेन नाव्याप्तिः । सत्तामादाय द्रव्येष्वतिव्याप्तिवारणाय सत्ताभिन्नेति जातौ विशेषणम् ॥ एतादृशपरिष्कारे ज्ञानादिषु नाव्याप्तिरित्युपपादयति । ... **तेनेति** । एतादृशपरिष्कारकरणेनेत्यर्थः ॥ २३ ॥

[मुक्तावली]

**का ॥ अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।**

**मु ॥ अन्यत्रेति । नित्यद्रव्याणि परमाण्वाकाशादीनि विहाय आश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वन्तु समवायादिसंबंधेन वृत्तिमत्वं विशेषणतया नित्यानामपि कालादौ वृत्तेः ॥**

(सुबोधिनी)

...मूले अन्यत्रेति । इह न्यायसिद्धांत इत्यर्थः । नित्यद्रव्येभ्योऽन्यत्र आश्रितत्वं साधर्म्यमित्यादिः, उच्यत इति योजना मुक्तावल्याम् अन्यत्रेति । नित्यद्रव्याण्युपपादयति —परमाण्वाकाशादीनीति । आदिना कालदिगात्ममनसां ग्रहणम् । तथा च नित्यद्रव्यातिरिक्तपदार्थानामाश्रितत्वं साधर्म्यमिति फलितं । ननु सर्वाधारः काल इति न्यायेन काले कालिकसंबन्धेन गगनादेः सत्वात्कालिकसंबन्धेनाश्रितत्वं गगनादावतिव्याप्तमित्यत आह .... आश्रितत्वन्त्विति । .... **समवायादिनेति ।** सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धेनेति तदर्थः । एतादृशसंबंधेन वृत्तिमत्वविवक्षणे प्रयोजनमुपपादयति —**विशेषणतयेति ।** कालिकविशेषणतयेति तदर्थः । तथा च नित्यानां कालिकसंबन्धेन वृत्तिमत्वेऽपि कालिकसंबन्धस्य सर्वाधारताप्रयोजकतया तद्भिन्नसंबन्धेन नित्यानां वृत्तिमत्त्वाभावान्ननित्येष्वतिव्याप्तिरिति भावः ॥



[मुक्तावली]

**का ॥ क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥ २४ ॥**

**मु ॥ इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते .... क्षित्यादीनामिति । स्पष्टम् ॥ २४ ॥**

(सुबोधिनी)

मूले ॥ ...क्षित्यादीनामिति । क्षित्यादीनां नवानां द्रव्याणां द्रव्यत्वमेकं साधर्म्यं । अपरन्तु गुणवत्वं । ननु गुणवत्वस्याद्यक्षणावच्छिन्नघटे उत्पन्नविनष्टघटे चाव्याप्तिः, उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति न्यायेन तत्रगुणवत्वाभावादिति चेन्न । गुणसमानाधिकरणसत्ताभिन्नजातिमत्वस्यविवक्षितत्वात् तादृशद्रव्यत्वजातेरुत्पन्नविनष्टघटादौ सत्वेनाव्याप्तिविरहात् । न चैवं सत्ताभिन्नत्वनिवेशो व्यर्थ इति वाच्यम् । गुणसमानाधिकरणसत्तारूपजातिमत्वस्य गुणे सत्वेन गुणेऽतिव्याप्तिभिया तन्निवेशात् ॥ २५ ॥

[मुक्तावली]

**का ॥ क्षितिर्जलं तथा तेजः पवनो मन एव च ।**

**परापरत्वमूर्तत्वक्रिया वेगाश्रया अमी ॥ २४ ॥**

मु । क्षितिरिति । **पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्वं मूर्तत्वं वेगवत्वं कर्मवत्वं च साधर्म्यं । न च यत्र घटादौ पर**

त्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यम् । परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । मूर्तत्वमपकृष्टपरिमाणवत्त्वं तच्चैषामेव गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् पूर्ववत्कर्मवत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम् ॥ २५ ॥

(सुबोधिनी)

....क्षितिरितीति । द्रव्यान्तर्गतानां केषांचित्साधर्म्यं निर्वक्ति पृथिव्यप्तेजोवायुमनसामिति । एतेषां परत्वमेकं साधर्म्यं, अपरत्ववत्त्वमपरं, मूर्तत्वं तृतीयं, वेगाश्रयत्वं चतुर्थं, कर्मवत्त्वं पञ्चमं, साधर्म्यमिति विभागः । शङ्कते । ... न चेति । वाच्यमिति परेणान्वयः । यत्र घटादावित्यनेनोत्पन्नविनष्टघटस्य आद्यक्षणावच्छिन्नघटस्य च परिग्रहः तयोः परत्वापरत्वयोरसत्वेनाव्याप्तिरित्यर्थः । समाधत्ते । ....परत्वादिति । परत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य अपरत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य च विवक्षितत्वात् इत्यर्थः । अत्र द्रव्यत्वव्याप्यत्वं च द्रव्यत्वन्यूनवृत्तित्वं तच्च द्रव्यत्वसमानाधिकरणत्वे सति द्रव्यत्वसमानाधिकरण भेदप्रतियोगितावच्छेदकत्वं । न तु द्रव्यत्वाभाववदवृत्तित्वंद्रव्यत्वव्याप्यत्वं । तादृशव्याप्यत्वस्य द्रव्यत्वेऽनपायेन परत्वसमानाधिकरण द्रव्यत्वाभाववदवृत्तिद्रव्यत्वजातिमत्त्वस्याकाशेऽपि सत्वेनाकाशेऽतिव्याप्तेर्दुर्वारत्वात् । द्रव्यत्वन्यूनवृत्तित्वरूपद्रव्यत्वव्याप्यत्वविवक्षेण तु द्रव्यत्वसामानाधिकरण्यस्य द्रव्यत्वे सत्वेऽपि न द्रव्यत्वं द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकं द्रव्यत्वाधिकरणे द्रव्ये द्रव्यभेदस्यासत्वात्, अपितु पृथिवीत्वं जलत्वादिकमेव तद्वत्वस्याकाशादावसत्वेन नाव्याप्तिः एवमग्रेऽपि बोध्यम् । मूर्तत्वं .... परिष्करोति । मूर्तत्वमपकृष्टपरिमाणवत्त्वमिति । परिच्छिन्नपरिमाणवत्त्वमिति तदर्थः । तच्चैषामेवेति तादृशापकृष्टपरिमाणवत्त्वं पृथिव्याप्तेजोवायुमनसामेवेति तदर्थः गगनादावसत्वे हेतुमुपपादयति । — गगनादीति । उत्पन्नविनष्टघटे कर्मवत्त्वाभावात्तादृशलक्षणस्याव्याप्तिरिति कर्मवत्त्वलक्षणमपि परिष्करोति । .... एवमिति । कर्मसमानाधिकरणद्रव्यत्वजातिमादाय गगनेऽतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति पूर्ववद्द्रव्यत्वन्यूनवृत्तीति तदर्थः । शेषं पूर्ववद्बोध्यम् । एव मुत्पन्नविनष्टघटे वेगवत्वाभावात् तदपि परिष्करोति । वेगवत्त्वमिति । शेषंपूर्ववद्बोध्यम् २५ ॥



[ मुक्तावली ]

**का ॥ कालखात्मदिशां सर्वगतत्वं परमं महत् ।**

मु ॥ कालेति ॥ कालाकाशात्मदिशां सर्वगतत्वं, सर्वगतत्वं सर्वमूर्तसंयोगित्वं, परममहत्त्वं च । परममहत्वत्वं जातिविशेषः अपकर्षानाश्रयपरिमाणवत्त्वं वा ॥

(सुबोधिनी)

— कालेतीति ॥ कालाकाशात्मदिशां सर्वगतत्वं साधर्म्यमित्यर्थः सर्वगतत्वं किमित्यत आह । — सर्वगतत्वमिति । मूर्तसंयोगित्वस्य घटादिष्वपि सत्वेन सर्वपदं निविष्टं, सर्वसंयोगित्वं आकाशादावसंभवि, विभुद्वयसंयोगानङ्गीकारात् । अत उक्तं मूर्तेति ॥ शेषः सुगमः ॥

[ मुक्तावली ]

**का ॥ क्षित्यादिपंचभूतानि, चत्वारिस्पर्शवन्ति हि ॥ २६ ॥**

मु —। क्षित्यादीति । पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वं, तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं । तेन ज्ञातो घट इति प्रत्यक्षे ज्ञानस्याप्युपनीतभा-

नाविषयत्वात्तद्वत्यात्मनि नातिव्याप्तिः । न वा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः तस्यापि स्वरूपयोग्यत्वात्' महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षत्वं । अथ वा आत्मावृत्तिविशेषगुणवत्त्वम् । चत्वरीति ॥ पृथिव्यप्तेजो वायूनां स्पर्शवत्त्वं ॥ २६ ॥

(सुबोधिनी)

...क्षित्यादीनीति । ....भूतत्वमिति । साधर्म्यमित्यादिः । किं तावद्भूतत्वमित्यत आह ॥ ....तच्चेति । भूतत्वंचेत्यर्थः । बहिरिन्द्रियग्राह्यो यो विशेषगुणः तद्वत्वमित्यर्थः । विशेषगुणाश्च "रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः ॥ बुध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः ,, पृथिव्यां बहिरिन्द्रियग्राह्यविशेषगुणभूतगन्धवत्वस्य जले तादृश रसस्य तेजसि तादृश स्पर्शस्य वायौ तादृशस्पर्शस्याकाशे तादृशशब्दस्य च सत्वात् पृथिव्यप्तेजोवाय्वाकाशाना भूतत्वम् । मनइन्द्रियग्राह्यज्ञानादिरूपविशेषगुणवत्व्यात्मनि सत्वादतिव्याप्तिरतो बहिरिन्द्रियग्राह्येति विशेषगुणेविशेषणं ' आत्मविशेषगुणनां बहिरीन्द्रियाग्राह्यत्वेन नात्मन्यतिप्रसक्तिः । बहिरिंद्रियग्राह्यकालघटगतद्वित्वस्य काले सत्वेन अतिव्याप्तिरतोविशेषेति । संख्यायाः विशेषगुणानात्मकतया न कालादावतिव्याप्तिः । बहिरिंद्रियग्राह्यत्वञ्च बहिरिंद्रियजन्यप्रत्यक्षविषयत्वं' तथा च बहिरिंद्रियजन्यं यत्प्रत्यक्षं ज्ञातो घट इति प्रत्यक्षं तादृशप्रत्यक्षे ज्ञानस्यापिज्ञानलक्षणाप्रत्यासत्तिरूपालौकिकसन्निकर्षेणभानात्, तादृशप्रत्यक्षानिरूपितौलौकिकविषयताश्रयज्ञानवत्त्वस्यात्मनि सत्वेनात्मन्यतिव्याप्तिरित्यत आह ....अत्रेति । तथा च बहिरिंद्रियजन्यप्रत्यक्षानिरूपितलौकिक विषयताश्रयत्वयोग्य विशेषगुणवत्वमिति तदर्थः । एवञ्च ज्ञाने बहिरिंद्रियजन्यप्रत्यक्षनिरूपितलौकिकविषयत्व-



योग्यत्वाभावान्नतदादायात्मन्यातिव्याप्तिः । लौकिकविषयतानिवेशप्रयोजनमुपपादयति ....तेनेति । योग्यतापर्यन्तनिवेशनप्रयोजनमुपन्यस्यति । —न वेति । परमाणुरूपादीनां लौकिकप्रत्यक्षविषयत्वयोग्यत्वे कथमप्रत्यक्षत्वमित्यत आह । ...महत्वलक्षणेति । तथा च परमाणुरूपादीनां प्रत्यक्षयोग्यत्वेऽपि प्रत्यक्षप्रयोजककारणान्तरासमवधानात्तेषां परमाणुरूपादीना मप्रत्यक्षत्वमित्याशयः । लाघवमनुसृत्याह । ....अथ वेति । आत्मन्यतिव्याप्तिवारणायात्मावृत्तित्वं विशेषगुणे विशेषणम् । —चत्वारीतीति । उत्पन्नविनष्टघटादावव्याप्तिवारणाय स्पर्शसमानाधिकरणद्रव्यत्वन्यूनवृत्तिजातिमत्वं विवक्षणीयम् ॥

[मुक्तावली]

**का ॥ द्रव्यारम्भश्चतुर्षु स्यात् ।**

मु ॥ ....द्रव्यारम्भइति । पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वं । न च द्रव्यानारम्भके घटादावव्याप्तिः । द्रव्यसमवायिकारण वृत्ति द्रव्यत्वव्याप्यजातिमत्वस्य विवक्षितत्वात् ॥

( सुबोधिनी )

इदानीं पृथिव्यप्तेजोवायूनांसाधर्म्यं वक्तुं मूलमवातरयति —द्रव्यारम्भइतीति । ....द्रव्यारम्भकत्वमिति स्यात् । तथा च पृथिव्यप्तेजोवायूनांद्रव्यारम्भकत्वं साधर्म्यमितिभावः । शङ्कते ....नचेति । घटादीनामन्त्यावयवित्वेन तेषु द्रव्यांतरस्यानुत्पद्यमानत्वेन तेषां द्रव्यारम्भकत्वाभावादव्याप्तिरित्यर्थः । अव्याप्तिमपाकरोति— द्रव्यसमवायिकारणेति । द्रव्यसमवायिकारणवृत्तिः द्रव्यत्वव्याप्या या जातिः तादृशजातिमत्वस्य विवक्षितत्वादित्यर्थः । तथा च द्रव्यसमवायिकारणं पृथिवी, जलं,, तेजो वायुश्च, तेष्वेव द्रव्यस्य समवायेन जायमानत्वात्

तद्वृत्तिः द्रव्यत्वन्यूनवृत्तिर्या जातिः पृथिवीत्वादिजातिः तद्वत्त्वस्य अन्यतमत्वेषु घटादिष्वपि सत्त्वेन नाव्याप्तिरिति ॥ अत्र समवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वनिवेशे ज्ञानसमवायिकारणात्मवृत्ति द्रव्यत्वव्याप्यात्मत्वजातिमादायात्मन्यतिव्याप्तिरतो द्रव्येति । तेन आत्मनो द्रव्यं प्रति समवायिकारणत्वाभावान्नाव्याप्तिः । द्रव्यत्वजातिमादायाकाशादिष्वतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । द्रव्यत्वन्यूनवृत्तिरिति तदर्थः । तादृशपृथिव्याकाशान्यतरत्वमादायाकाशेऽतिव्याप्तिवारणाय जातीति ॥

[मुक्तावली]

का ॥ अथाकाशशरीरिणां ।

अव्याप्यवृत्तिक्षणिको विशेषगुण इष्यते ॥ २७ ॥

मु ॥ .... अथाकाशेति । आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं साधर्म्यमित्यर्थः । आकाशस्य विशेषगुणश्शब्दः स चाव्याप्यवृत्तिः । यदा किंचिदवच्छेदेन शब्द उत्पद्यते तदान्यावच्छेदेन तदभावस्यापि सत्त्वात् । क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं । योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिविशेषगुणनाश्यत्वात् प्रथमशब्दस्य द्वितीयशब्देन नाशः । एवं ज्ञानादीनामपि । ज्ञानादिकं यदात्मनि विभौ शरीरावच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽस्त्येव । एवं ज्ञानादिकमपि क्षणद्वयावस्थायि । इत्थं चाव्याप्यवृत्ति विशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं चार्थः ॥

(सुबोधिनी)

आकाशात्मनां साधर्म्यं वक्तुं मूलमवतारयति । —अथाकाशेतीति । आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वमिति लक्षणं । लक्ष्ये समन्वयं कर्तुं प्रथमतः आकाशनिष्ठविशेषगुणस्य शब्दस्याव्याप्यवृत्तित्वमुपपादयति । .... आकाशस्येति । अव्याप्यवृत्तित्वं च स्वात्यन्ताभावसामानाधिकरण्यं ; स्वपदार्थः यस्याव्याप्यवृत्तित्वमभिमतं स एव । तादृशाव्याप्यवृत्तित्वं शब्दे दर्शयति । ...यदेति । तथा च किंचिदवच्छेदेन शब्दस्याधिकरणे आकाशे तदन्यावच्छेदेन शब्दात्यन्ताभावस्यापि सत्त्वेन स्वपदेन शब्दस्वीकारे स्वसमानाधिकरणात्यन्ताभावः शब्दाभावः तत्प्रतियोगित्वस्य शब्दे सत्त्वेन शब्दोऽव्याप्यवृत्तिरिति भावः । शब्दज्ञानयोः द्विक्षणावस्थायित्वेन तयोः क्षणिकत्वमसिद्धं' अतः तत्साधारण्येन क्षणिकत्वं परिष्करोति । ...क्षणिकत्वं चेति । शब्दस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपक्षणिकत्वमुपपादयति । .... योग्येति । इन्द्रययोग्याः 'इन्द्रियग्राह्याः, ये विभुविशेषगुणाः तेषां स्वानन्तरोत्पन्नविशेषगुणेन नाश्यत्वात् स्वोत्पत्तिक्षण एकः स्वानन्तरजायमानविशेषगुणोत्पत्तिक्षणोऽपरः । तत्र स्वानन्तरजातविशेषगुणेन शब्देन स्वस्य तृतीयक्षणे नाश इति तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं शब्दे वर्तत इति निरुक्तपारिभाषिकक्षणिकः शब्द इत्याशयः । एवं ज्ञानादीनामप्यव्याप्यवृत्तित्वमस्तीत्युपपादयति । ... एवमिति । स्वपदेन ज्ञानस्वीकारे स्वसमानाधिकरणो योऽत्यन्ताभावः आत्मनो विभुत्वेन आत्मनि शरीरावच्छेदेन ज्ञानस्य सत्त्वेऽपि घटाद्यवच्छेदेन ज्ञानाभावोऽस्ति । तादृशाभावप्रतियोगित्वस्य ज्ञानादिषु सत्त्वेन ज्ञानादयोऽप्यव्याप्यवृत्तय एवेत्याशयः । एवमेव ज्ञानादीनामपि निरुक्तक्षणिकत्वमस्तीत्युपपादयति । .... एवं ज्ञानादिकमपीति । शेषं पूर्ववत् । नन्वाकाशात्मनां अव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वस्यैकलक्षणत्वेऽव्याप्यवृत्तीतिपदस्य वैयर्थ्यमित्याशंकां, निराकरिष्यन् दृष्टान्ते श्रूयमाण

पदं प्रत्येकं संबध्यत इति अव्याप्यवृत्तिश्च क्षणिकश्चाव्याप्यवृत्ति क्षणिकौ तै च तौ विशेषगुणौ चेति स्वोक्तलक्षणवाक्यस्य विग्रहं मनसि निधायाव्याप्यविशेषगुणवत्त्वमेकं लक्षणं, क्षणिकविशेषगुणवत्त्वमपरामित्युपपादयति ।.... इत्थं चेति ।

[मुक्तावली]

पृथिव्यादौ रूपादिर्विशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम् ॥ पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीति विशेषगुणेत्युक्तं ॥

(सुबोधिनी)

प्रथमलक्षणे अव्याप्यवृत्तीति पदसार्थक्यायाह ॥ ...पृथिव्यादाविति तदनुक्तौ रूपादीनां विशेषगुणत्वेन तद्वत्त्वस्य पृथिव्यादौ सत्वेन पृथिव्यादावतिव्याप्तिः अतोऽव्याप्यवृत्तीति । तथा च रूपस्य व्याप्यवृत्तित्वेनाव्याप्यवृत्तिविशेषगुणवत्त्वस्य पृथिव्यादावसत्वेन नातिप्रसङ्ग इति भावः ॥ विशेषपदस्य सार्थक्य मुपपादयति । — पृथिव्यादाविति ॥ अव्याप्यवृत्तिः योगुणः संयोगः तद्वत्त्वस्य पृथिव्यादौ सत्वेन पृथिव्यादावतिव्याप्तिरतो विशेषेति ॥ तथा च संयोगस्य सामान्यगुणत्वेन नातिप्रसङ्ग इति भावः

[मुक्तावली]

न च रूपादीनामपि कदाचित् तृतीयक्षणे नाशसम्भवात् क्षणिकविशेषगुणवत्वं क्षित्यादावतिव्याप्तमिति वाच्यं । चतुः क्षणवृत्तिजन्यवृत्तिजातिमद्विशेषगुणवत्वस्य तदर्थत्वात् । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति क्षणचतुष्टयं तु न किमपि जन्यज्ञानादिकं तिष्ठति । रूपत्वादिकन्तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्तत इति तद्व्युदासः । ईश्वरज्ञानस्य चतुः क्षणवृत्तित्वात् ज्ञानत्वस्य तद्वृत्तित्वाज्जन्येत्युक्तम् ॥



(सुबोधिनी)

क्षणिकविशेषगुणवत्त्वमिति द्वितीयलक्षणेऽतिव्याप्तिमाशङ्कते ....न चेति । वाच्यमिति परेणान्वयः । तथा च तृतीयक्षणवृत्तिनाशप्रतियोगिविशेषगुणभूततादृशरूपवत्त्वस्य पृथिव्यां सत्वेनातिव्याप्तिरित्याशयः । द्वितीयलक्षणमन्यथा परिष्कृत्यातिव्याप्तिं वारयति -- चतुः क्षणवृत्तीति । चतुःक्षणवृत्ति यज्जन्यं तदवृत्तिः याजातिः तादृशजातिमद्विशेषगुणवत्त्वं तदर्थः । तथा च चतुः क्षणवृत्तियज्जन्यं क्षणचतुष्टयावस्थायिरूपं तदवृत्तिः या जातिः न हि रूपत्वजातिः । परन्तु ज्ञानत्वादिजातय एव तादृशजातिमद्विशेषगुणाः ज्ञानादयस्तद्वत्वस्य पृथिव्यामविद्यमानत्वान्नातिव्याप्तिरित्याशयः । एतदेव स्फुटयति अपेक्षाबुद्धिरित्यादिना ॥ अत्र जन्येत्यनुपादने चतुःक्षणवृत्ति यत् ईश्वरज्ञानं तदवृत्तिर्याजातिः न हि ज्ञानत्वजातिः किन्तु शब्दत्वजातिः द्वेषत्वजातिर्वा तादृशजातिमद्विशेषगुणभूतशब्दवत्त्वमादायाकाशे तादृशद्वेषत्वमादाय जीवेषु लक्षणसमन्वयेऽपीश्वरे तदभावादव्याप्तिरतो जन्येतीत्युपपादयति । तथा च चतुः क्षणवृत्ति यज्जन्यं न हीश्वरज्ञानं तस्यानित्यत्वात् । परन्तु रूपादिकमेव तदवृत्तिजातिमद्विशेषगुणज्ञानवत्त्वस्येश्वरेऽपि सत्वेन नाव्याप्तिरितिभावः ॥

[मुक्तावली]

यद्वाकाशजीवात्मनोः साधर्म्यं तदा जन्येति न देयं द्वेषत्वादिकमादाय लक्षणसमन्वयात् । परममहत्वस्य तादृशगुणत्वाच्चतुर्थक्षणे द्वित्वादीनां नाशाभ्युपगमात् द्वित्वादीनामपि तथात्वात्तद्वारणाय विशेषेति । त्रिक्षणवृत्तित्वं वा वक्तव्यं । इच्छात्वादिकमादायात्मनि लक्षणसमन्वयः ॥ २७ ॥

(सुबोधिनी)

मतान्तरमुपन्यस्यति — यद्वेति । चतुःक्षणवृत्तीत्यादिसाधर्म्यस्य

लक्ष्यतावच्छेदकं जीवात्मत्वाकाशत्वे तदा ईश्वरस्यालक्ष्यतया जन्येति न देयमित्यर्थः । ज्ञानस्य चतुःक्षणवृत्ति यत् ज्ञानं तद्वृत्तिजातिमद्भिन्नतया ज्ञानमादाय जीवे लक्षणसमन्वयस्य कर्तुमशक्यत्वेन कथं जीवे लक्षणसमन्वय इत्यत आह । ....द्वेषत्वादिकमिति । तथा च चतुःक्षणवृत्ति र्यः न द्वेषः तस्य द्विःक्षणस्थायित्वात्, अपितु रूपादिकं, तद्वृत्तिर्या जातिःद्वेषत्वजातिः, तादृशजातिमान् यो विशेषगुणः द्वेषः तद्वत्त्वस्य जीवे सत्त्वेन लक्षणसमन्वय इत्याशयः ॥ ईश्वरस्यापि लक्ष्यत्वपक्षे विशेषपदस्य सार्थक्यमुपपादयति । ....परममहत्त्वस्य तादृशगुणत्वादिति । परममहत्त्वस्य चतुःक्षणवृत्तियज्जन्यं तद्वृत्तिजातिमद्गुणत्वेन तादृशगुणवत्त्वस्य कालेऽपि सत्त्वात्कालेऽतिव्याप्तिः, जन्यपदाघटितलक्षणस्यातिव्याप्तिवारकतया विशेषपदस्यसार्थक्यमुपपादयितुमुपन्यस्यति ....द्वित्वादीनामिति।...तथात्वादिति । चतुःक्षणवृत्ति यत् न द्वित्वादिकमपि तु रूपादिकमेव तद्वृत्ति या जातिः द्वित्वत्वादिजातिःतादृशजातिमान्यो गुणःद्वित्वादिकं तद्वत्त्वस्य काले विद्यमानत्वेन कालेऽतिव्याप्तिरित्याशयः ।—तद्वारणायेति । निरुक्तातिव्याप्तिद्वयवारणाय पक्षद्वयलक्षणेऽपि विशेषपदं निवेशनीयं, तथा च परममहत्त्वस्य संख्यायाश्च विशेषगुणानात्मकत्वेन नातिप्रसङ्ग इत्याशयः ॥ प्रथमोपस्थितत्वरूपलाघवमभिप्रेत्याह....त्रिःक्षणवृत्तित्वं वेति । तथा च त्रिःक्षणवृत्तियज्जन्यं तद्वृत्तिजातिमद्विशेषगुणवत्त्वमाकाशात्मनां साधर्म्यमिति पर्यवसितम् । नन्वस्मिन्कल्पे ज्ञानवत्त्वस्यापेक्षाबुध्यात्मकत्रिःक्षणवृत्तिजन्यवृत्तितया ज्ञानमादायात्मनि लक्षणसमन्वयस्य कर्तुमशक्यत्वेन कथमात्मनि लक्षणसमन्वय इत्यत आह ...इच्छात्वादिकमिति । तथा च त्रिःक्षणवृत्ति यज्जन्यं ज्ञानादिकं तद्वृत्तिः या जातिः इच्छात्वजाति



तादृशजातिमद्विशेषगुणवत्त्वस्यात्मनि सत्त्वेन लक्षणसमन्वय इति भावः ॥ २७ ॥

[ मुक्तावली ]

का ॥ रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ।

मु —रूपद्रवत्वेति । पृथिव्यप्तेजसां रूपवत्त्वं, द्रवत्ववत्त्वं प्रत्यक्षविषयत्वं चेत्यर्थः । न च चक्षुरादीनां भर्जनकपालस्थवह्नेरूष्मणश्च रूपवत्त्वे किं मानमिति वाच्यम् । तत्रापि तेजस्त्वादिना रूपानुमानात् । एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम् ॥

( सुबोधिनी )

पृथिव्यप्तेजसां साधर्म्यं वक्तुं मूलमवतारयति । — रूपद्रवत्वेति । पृथिव्यप्तेजसां रूपवत्त्वमेकं लक्षणं, द्रवत्ववत्त्वमपरं लक्षणं, प्रत्यक्षविषयत्वं तृतीयं लक्षणमित्याशयः । रूपवत्त्वलक्षणस्याव्याप्तिमाशङ्कते । ....न चेति । वाच्यमिति परेणान्वयः । चक्षुरादीनां रूपवत्त्वे किं मानं । प्रमाणं नास्तीत्यर्थः । तथा च चक्षुरादिषु रूपवत्त्वाभावादव्याप्तिरित्याशयः ॥ चक्षुरादीनां रूपवत्त्वे-प्रत्यक्षप्रमाणाभावेऽपि अनुमानं प्रमाणमस्तीत्युपपादयति ।— तत्रापीति । चक्षुरादिष्वपीत्यर्थः ॥ तथा च चक्षुरादिकं रूपवत् तेजस्त्वात् ; रूपव्याप्यतेजस्त्ववच्चक्षुरादिकमिति परामर्शाच्चक्षुरादिकं रूपवदित्यनुमितिर्जायते ॥ एवञ्च एतादृशानुमानेन चक्षुरादीनां रूपवत्त्वसिद्धेर्नाव्याप्तिरित्याशयः ॥ चक्षुरादीनामित्यत्रादिपदार्थं स्फुटयति ॥ ....एवमिति ॥ तेजस्त्वादिनेत्यत्रादिपदार्थं स्फुटयति —पृथिवीत्वादिनेति ॥ तथा च वाय्वानीतपृथिवीपरमाणवः रूपवन्तः पृथिवीत्वादित्यनुमानेन तेषामपि रूपवत्त्वसिद्धेः तेष्वपि नाव्याप्तिरित्याशयः । परामर्शादिकं पूर्ववद्बोध्यम् ॥

[ मुक्तावली ]

**न च घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यम् । द्रवत्ववद्वृत्ति द्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ घृतजतुप्रभृतिषु पृथिवीषु जलेषु द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात्तत्र च पृथिवीत्वादिसत्वात्तदादाय सर्वत्र लक्षणसमन्वयः ॥**

( सुबोधिनी )

द्वितीयस्य द्रवत्ववत्त्वमिति लक्षणस्याव्याप्तिमाशङ्कते । —न चेति । वाच्यमिति परेणान्वयः । अव्याप्तिं निराकरोति ।.... द्रवत्ववद्वृत्तीति । लक्षणसमन्वयमुपपादयति । — घृतजतुप्रभृतिष्विति तथा च द्रवत्वाधिकरणानि घृतजतुप्रभृतयः तद्वृत्तिः द्रव्यत्वव्याप्या या जातिः पृथिवीत्वजातिः तादृशजातिमत्वस्य घटादौ सत्वाल्लक्षणसमन्वयः, एवं जलत्वजातिमादाय जले लक्षणसमन्वय इति प्रतिपादनार्थं जलेष्विति । एवमेव तेजस्त्वादिकमादाय सुवर्णादिष्वपि लक्षणसमन्वय इत्युपपादनार्थं द्रुतसुवर्णादौ तेजसि चेत्युपपादितम् । पृथिवीत्वादिसत्वादित्यत्रादिना जलत्व तेजस्त्वयोः परिग्रहः ; तथा च घटादिषु पृथिवीत्वस्य जले जलत्वस्य द्रुतसुवर्णादीभिन्ने तेजस्यापि तेजस्त्वस्य सत्वाल्लक्षणसमन्वय इति भावः एवं च तेषु द्रवत्ववत्त्वलक्षणस्य निरुक्तरीत्या परिष्कृतस्य सत्वान्नाव्याप्तिरित्याशयः । द्रव्यत्वजातिमादायाकाशादिष्वतिव्याप्तिवारणाय द्रव्यत्वव्याप्तेति । द्रव्यत्वन्यूनवृत्तिरिति तदर्थः ॥

[ मुक्तावली ]

**न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तं, अतिव्याप्तं च रूपादाविति वाच्यम । चाक्षुषलौकिकप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति**



( सुबोधिनी )

तृतीयस्य प्रत्यक्षविषयत्वलक्षणस्याव्याप्त्यतिव्याप्ती उपपादयति । ....न चेति । वाच्यमिति परेणान्वयः । परमाणूनां इन्द्रियाग्राह्यत्वेन तेषु प्रत्यक्षविषयत्वाभावादव्याप्तिरिति भावः । रूपस्य चाक्षुषप्रत्यक्षविषयत्वेन तत्रातिव्याप्तिरित्याशयः । परमाण्वादावित्यत्रादिना द्व्यणुकपरिग्रहः । रूपादावित्यत्रादिना रसादिपरिग्रहः ॥ उक्ताव्याप्त्यतिव्याप्ती निराकरोति । ...चाक्षुषेत्यादिना । चाक्षुषलौकिकप्रत्यक्षविषयवृत्तिः द्रव्यत्वव्याप्या या जातिः पृथिवीत्वजातिः, जलत्वजातिः, तेजस्त्वजातिश्च, तादृशजातिमत्त्वस्य परमाण्वादिष्वपि सत्वेन नाव्याप्तिः, तादृशजातिमत्त्वस्य रूपादावसत्वेन नातिप्रसङ्गश्चेत्याशयः । चाक्षुषपदसार्थक्यमुपपादयति । —आत्मनीति । मानसप्रत्यक्षविषयत्वस्यात्मनि सत्वेन तद्वृत्ति आत्मत्वजातिमादायात्मन्यातिव्याप्तिरतः चाक्षुषप्रत्यक्षविषयवृत्तिजातिमत्त्वं विवक्षणीयं । तथा चात्मनः चक्षुरिन्द्रियजन्यप्रत्यक्षाविषयत्वेन न तद्वृत्तिजातिमादायातिप्रसङ्ग इत्यर्थः ॥

[ मुक्तावली ]

**का ॥ गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥२८॥**

**मु॥ गुरुणी इति॥ गुरुत्ववत्त्वं रसवत्त्वं च पृथिवीजलयोरित्यर्थः । न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानां च रसादिमत्त्वे किंमानमिति वाच्यम् । तत्रापि पृथिवीत्वादिना तदनुमानात् ॥**

( सुबोधिनी )

पृथिवीजलयोः साधर्म्यं वक्तुं मूलमवतारयति ।...गुरुणी इतीति । द्रवत्ववत्त्वं पृथिवीजलयोरेकं लक्षणं, रसवत्त्वमपरं लक्षणमित्याशयः । निरुक्तलक्षणद्वयस्याव्याप्तिमाशङ्कते ।.... न चेति । वाच्यमिति परेणान्वयः । — किंमानमिति । प्रमाणं नास्तीत्यर्थः

समाधत्ते । ....तत्रापीति । घ्राणेन्द्रियं, गुरुत्ववत्, पृथिवीत्वादित्यनुमानेन घ्राणेन्द्रिये गुरुत्वं सिध्यतीत्यतो नाव्याप्तिरित्याशयः । घ्राणेन्द्रियादीनामित्यत्रादिना रसनेन्द्रियपरिग्रहः । पृथिवीत्वादिनेत्यत्रादिना जलत्वपरिग्रहः । तथा च रसनेन्द्रियं, गुरुत्ववत्, जलत्वादित्यनुमानेन रसनेन्द्रिये गुरुत्वसिद्धिरतो नाव्याप्तिरित्याशयः ॥

[ मुक्तावली ]

द्वयोरिति। पृथिवीतेजसोरित्यर्थः । न च नैमित्तिकं द्रवत्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यम् । नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥ २८॥

(सुबोधिनी)

पृथिवीतेजसोः साधर्म्यं वक्तुं मूलमवतारयति। .... द्वयोरिति । पृथिवीतेजसोः नैमित्तिकद्रवत्वं साधर्म्यमित्यर्थः । निरुक्तलक्षणस्य व्याप्तिमाशङ्कते । न चेति । वाच्यमिति परेणान्वयः । अव्याप्तिमपाकरोति । नैमित्तिकेति । नैमित्तिकद्रवत्वसमानाधिकरणा द्रव्यत्वव्याप्या याजातिः पृथिवीत्वजातिः तेजस्त्वजातिश्च तादृशपृथिवीत्वजातिमत्त्वस्य घटादौ तादृशतेजस्त्वजातिमत्त्वस्य वह्न्यादौ सत्त्वेन नाव्याप्तिरित्याशयः । द्रव्यत्वव्याप्येति । द्रव्यत्वन्यूनवृत्तिरित्यर्थः । द्रव्यत्वजातिमादाय जलेऽतिव्याप्तिवारणाय तन्निवेशः ॥ २८॥

[मुक्तावली]

का ॥ आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।

मु ॥ आत्मान इति । पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्वमित्यर्थः ॥

(सुबोधिनी)

आत्मान इतीति । ....पृथिवीति । अत्रापि उत्पन्नविनष्टघटेऽव्याप्तिवारणाय विशेषगुणसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्वं विवक्षि-



णीयम् । शेषं पूर्ववत् ॥

[मुक्तावली ]

का ॥ यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥

मु ॥ यदुक्तमिति। ज्ञेयत्वादिकं विहायेति बोध्यम् । तत्तु न कस्यापि वैधर्म्यं केवलान्वयित्वात् ॥ २९ ॥

(सुबोधिनी)

....यदुक्तमितीति । पदार्थानां ज्ञेयत्वादिकं साधर्म्यमित्युक्त तत्तु कस्य वैधर्म्यमित्यत आह । ...ज्ञेयत्वादिकमिति । ज्ञेयत्वपरित्यागे हेतुमुपपादयति । ....तदिति । ज्ञेयत्वादीनां वैधर्म्यत्वाभावे हेतुमुपपादयति । ...केवलान्वयित्वादिति । तथा च ज्ञेयत्वादीनां केवलान्वयित्वात् सर्वेषामपि पदार्थानां ज्ञेयत्वादिवत्वेन तच्छून्यपदार्थस्यैवासत्वेन ज्ञेयत्वादीनां वैधर्म्यत्वं न संभवतीत्यतः ज्ञेयत्वादीन्परित्यज्येतरेषां सर्वेषां तद् बोध्यमित्याशयः ॥ २९॥

[मुक्तावली]

का ॥ स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतोगुणाः ।

मु स्पर्शादय इति ॥

(सुबोधिनी)

....मूले स्पर्शादय इति । स्पर्शः संख्या परिमाणं पृथक्त्वं संयोगः विभागः परत्वं अपरत्वं चेत्यष्टौ वेगाख्यसंस्कारश्च एतद्गुणनवकं मरुतः गुणा इत्याशयः ॥

( कारिकावली )

स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसोगुणाः ॥ ३० ॥

(सुबोधिनी)

स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानि रूपवे

नैमित्तिकद्रवत्वं चेत्येकादशगुणाः तेजसि वर्तन्त इत्यर्थः ॥ ३० ॥

(कारिकावली)

**स्पर्शादयोऽष्टौ वेगश्च द्रवत्वं च गुरुत्वकम् ।**
**रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥**

(सुबोधिनी)

स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानि वेगाख्यसंस्कारः द्रवत्वं गुरुत्वं रूपं रसः गन्धः स्नेह इति एते चतुर्दशगुणाः वारिणि वर्तन्त इत्यर्थः ॥ ३१ ॥

(कारिकावली)

**स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।**

(सुबोधिनी)

स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानि अष्टौ वेगाख्यसंस्कारः द्रवत्वं गुरुत्वं रूपं रसः गन्ध इति षट् आहत्य-चतुर्दशगुणाः पृथिव्यां वर्तन्तइत्यर्थः ॥

कारिकावली

**बुद्ध्यादिषट्कं संख्यादिपंचकं भावना तथा । ३२ ।**
**धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश ।**

(सुबोधिनी)

...बुद्ध्यादीति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः संख्यापरिमाणपृथक्त्वसंयोगविभाग भावनाख्यसंस्काराः धर्माधर्मौ इति एते चतुर्दशगुणाः आत्मनः स्युरित्यर्थः ॥ ३२ ॥

कारिकावली

**संख्यादिपंचकं कालदिशोः शब्दश्च ते च खे । ३३ ।**

[मुक्तावली] ते च खे आकाशे ॥



(सुबोधिनी)

.... संख्यादिपञ्चकमिति । संख्यापरिमाणपृथक्त्वसंयोगविभागास्तु काले दिशिच वर्तन्ते, खे आकाशे ते च संख्यापरिमाणपृथक्त्व-संयोगविभागाः शब्दश्चेति गुणषट्कं वर्तत इत्यर्थः ॥ ३३ ॥

कारिकावली

**संख्यादिपंचकं बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।**

(सुबोधिनी)

—संख्यादीति । संख्यापरिमाणपृथक्त्वसंयोगविभागाः बुद्धिः इच्छा प्रयत्नश्चेति गुणाष्टकमीश्वरे वर्तत इत्यर्थः ॥

कारिकावली

**परापरत्वे संख्याद्याः पंच वेगश्च मानसे * ३४**

(सुबोधिनी)

परत्वं अपरत्वं संख्यापरिमाणपृथक्त्वसंयोगविभागाः वेगाख्यसंस्कारश्च मनोवृत्तय इत्यर्थः ॥ ३४ ॥

इति

बुलसु [परेश्वर]अप्पन्नशास्त्रिणा विरचितायां मुक्तावली व्याख्यायां सुबोधिन्याख्ययां प्रत्यक्षपरिच्छेदे प्रथमप्रकरणम्

—:XXXXX* * * *XXXXX:—

...........

[मुक्तावळी]

**का ! तत्र क्षितिर्गन्धहेतुर्नाना रूपवती मता !**

मु ॥ साधर्म्यवैधर्म्ये निरूप्य संप्रति प्रत्येकं पृथिव्यादिकं निरूपयति । तत्रेति । गन्धहेतुरिति । गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्वमात्रं पृथिव्या लक्षणमुचितम्, तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम् । तथा हि पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिध्यति अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः ॥

(सुबोधिनी)

मूले तत्रेति । तच्छब्देन नवद्रव्याण्युच्यन्ते त्रलप्रत्ययस्य घटकत्वमर्थः । नवद्रव्यघटकीभूता पृथिवी गन्धसमवायिकारणाभिन्ना अनेकरूपवदभिन्नेति शाब्दबोधः । गन्धहेतुरित्यत्र हेतुशब्दस्य निमित्तकारणपरत्वशङ्कानिरासार्थमाह मुक्तावल्यां । गन्धसमवायिकारणमित्यर्थ इति । गन्धवत्वस्यैव पृथिवीलक्षणत्वसंभवे गन्धसमवायिकारणत्वपर्यन्तानुधावनं व्यर्थमित्यभिप्रायेणशङ्कते । -- यद्यपीति । गन्धसमवायिकारणत्वपर्यन्तानुधावनस्य प्रयोजनमुपपादयति । — तथापीति । तादृशप्रमाणमेवोपन्यस्यति । .... तथाहीति । अनुमानप्रकारश्चेत्थं गन्धसमवायिकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात्, तादृशधर्मस्य जातित्वे लाघवमिति ज्ञानसहकृतात किंचिद्धर्मावच्छिन्नत्वव्याप्यकारणतात्ववती गन्धसमवायिकारणतेति परामर्शात् । गन्धसमवायिकारणता (पृथिवीत्वरूप) जात्यवच्छिन्नेत्यनुमितिर्जायते एतादृशानुमानरूपप्रमाणोपन्यासाय पृथिव्याः गन्धसमवायिकारणत्वोपन्यास इति भावः ॥ यदि पृथिव्या गन्धसमवायिकारणत्वं स्यात्तदवच्छेदकतया पृथिवीत्वजातिः सिध्यतु तदेवासिद्धमित्यत आह । —अन्यथेति ॥ पृथिव्याः गन्धसमवायिकारणत्वानभ्युपगम इत्यर्थः । ....गन्धत्वावच्छिन्नस्येति । गन्धसमवायिकारणत्वस्येतरेषु बाधात्पृथिव्यां तदनङ्गीकारात् गन्धस्यकारणं विना उत्पत्तिः स्यादित्यर्थः । न हि कारणं विना कार्यस्योत्पत्तिं कश्चिदभ्युपैति, अतो गन्धसमवायिकारणत्वं पृथिव्या अभ्युपगन्तव्यं, तदवच्छेदकतया लाघवज्ञानेन पृथिवीत्वजातिसिद्धिः । एवमग्रे ऽपि बोध्यम् ॥



[मुक्तावळी]

न च पाषाणादौ गन्धाभावात् गन्धवत्वमव्याप्तमिति वाच्यम् तत्रापि गन्धसत्वात्, अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते । भस्मनो हि पाषाणध्वंसजन्यत्वात् पाषाणोपादानोपादेयत्वं सिद्ध्यति, यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमितिव्याप्तेः । दृष्टं चैतत्खंडपटे महापटध्वंसजन्ये । इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यपाषाणस्यापि पृथिवीत्वं, तथा च तस्यापि गन्धवत्त्वे बाधकाभावः ॥

(सुबोधिनी)

पृथिव्या गन्धवत्त्वं लक्षणमित्युक्तं तत्र गन्धवत्त्वं च गन्धनिष्ठाधेयतानिरूपिताधिकरणत्वम्, पृथिव्यां गन्धोऽस्तीति प्रतीतिसिद्धाधेयतानिरूपिताधिकरणत्वस्य पृथिव्यां विद्यमानत्वाल्लक्षणसमन्वयः । ननु इदानीं गन्धोस्तीत्याकारकप्रतीतिसिद्धकालिकसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य काले विद्यमानत्वात्कालेऽतिव्याप्तिरिति चेन्न गन्धनिष्ठाधेयतायां समवायसंबन्धावच्छिन्नत्वस्य निवेशनीयत्वात् । तथा च कालिकसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य काले विद्यमानत्वेऽपि समवायसंबन्धावच्छिन्नगन्धनिष्ठाधेयतानिरूपिताधिकरणत्वस्य कालेऽविद्यमानत्वान्नातिव्याप्तिः । नन्वेवमपि एक धर्माव

च्छिन्नाधेयता एकैवेति न्यायेन जले गुणोऽस्तीत्याकारकप्रतीतिसिद्धायाः गुणत्वावच्छिन्नगन्धनिष्ठाधेयतानिरूपिताधिकरणतायाः जले सत्वाज्जलेऽतिव्याप्तिरतो गन्धनिष्ठाधेयतायां गन्धत्वावच्छिन्नत्वं निवेशनीयं, तथा च गुणत्वावच्छिन्नगन्धनिष्ठाधेयतानिरूपिताधिकरणत्वस्य जले सत्वेऽपि गन्धत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य जलेऽसत्वान्नातिप्रसङ्गः ॥ पृथिवीलक्षणस्याव्याप्तिमाशङ्कते ।....न चेति - वाच्यमिति परेणान्वयः । लक्ष्यतावच्छेदकाश्रये पाषाणादौ गन्धनिष्ठाधेयतानिरूपिताधिकरणत्वस्याविद्यमानत्वादव्याप्तिरित्याशयः ।...अव्याप्तिमपाकरोति ।...तत्रापीति । पाषाणादौ गन्धस्य सत्वे कथं तदनुपलब्धिरित्यत आह । अनुपलब्धिस्त्विति । गन्धविषयकप्रत्यक्षं प्रत्युत्कटगन्धस्यैव विषयविधया कारणत्वेन पाषाणस्थगन्धस्यानुत्कटत्वेन तत्प्रत्यक्षत्वं नसंभवति कारणस्योत्कट गन्धस्याभावादितिभावः—कथमन्यथेति ॥ पाषाणादीनां गन्धाभाववत्त्व इत्यर्थः । तद्भस्मनि पाषाणभस्मनीत्यर्थः । "कारणगुणाः कार्ये स्वसजातीयं गुणान्तरमारभन्त,, इति नियमेन भस्मतः पाषाणोपादानकत्वात् पाषाणे गन्धाभावे भस्मनोऽपि गन्धवत्वं न स्यात् पाषाणोपादानोपादेयभस्मनि गन्धस्य प्रत्यक्षत्वेन तदुपादानपाषाणे गन्धो वर्तत एवेत्यङ्गीकार्य मित्याशयं मनसि निधाय प्रथमतो भस्मनः पाषाणोपादनोपादेयत्वं स्थापयति । ...भस्मन इति ॥ भस्म पाषाणोपादानोपादेयं पाषाणध्वंसजन्यत्वा दित्यनुमानेन पाषाणोपादानोदेयत्वं सिध्यतीत्याशयः । सामान्यानुमानं दर्शयति । ....यद्द्रव्यमिति ॥ यत्र यत्र यद्द्रव्यध्वंसजन्यत्वं तत्र तद्द्रव्योपादानोपादेयत्वं, उपादानत्वं च समवायिकारणत्वं । दृष्टान्तयति ।—ष्ठामिति । स्वाभिप्रायमुपपादयति.... इत्थं चेति। एवं पाषाणभस्मनोः कार्यकारणभावे (उपादानोपादेयभावे) स्थिते सतीत्यर्थः।पाषाणस्य पृथिवी



परमाणु जन्यत्वेन पृथिवीत्वं, पृथिवीत्वादेव गन्धवत्त्वमिति निष्कर्षः । एवञ्च पाषाणेऽपि गन्धस्य विद्यमानत्वेन नाव्याप्तिरिति भावः । अत्रोत्पन्नविनष्टघटेऽव्याप्तिवारणाय समवायसंबन्धावच्छिन्न गन्धत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं विवक्षणीयम्

[मुक्तावली]

नानेति । शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्तते, नतु जलादौ, तत्र शुक्लस्यैव सत्वात्, पृथिव्यां त्वेकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसम्भवात्, न च यत्र नानारूपं नोत्पन्नं तत्राव्याप्तिरिति वाच्यम् । रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्वस्य विवक्षितत्वात्, रूपनाशवद्वृत्तिद्रव्यत्वव्याप्य जातिमत्त्वस्य वा वाच्यत्वात् । वैशेषिकनये पृथिवी परमाणौ रूपनाशस्य रूपान्तरस्य च सत्वात् न्यायनयेघटादावपि तत्सत्वाल्लक्षणसमन्वयः

(सुबोधिनी)

पृथिव्याः लक्षणान्तरमुपपादयितुं मूलमवतारयति —नानेतीति । नानारूपवत्वं पृथिव्याः लक्षणमित्याशयः । एतादृशलक्षणस्य जलादौ नातिप्रसङ्ग इत्याशयेनाह .... नत्विति । जलादौ नानारूपवत्वं नास्तीत्यर्थः । तत्र हेतुमुपपादयति ... तत्रेति । जलादौ शुक्लरूपस्यैकस्यैव सत्वेन नानारूपाभावान्नातिप्रसङ्ग इति भावः । पृथिव्यां लक्षण समन्वयमुपपादयति — पृथिव्यांत्विति । नानारूपवत्वलक्षणस्याव्याप्तिमाशङ्कते .... न चेति । वाच्यमिति परेणान्वयः । यत्रापक्वटे नानारूपवत्त्वाभावा दव्याप्तिरित्यर्थः । इदमुपलक्षणं । उत्पन्नविनष्टघटेऽप्यव्याप्तिर्बोध्या ।॥ अव्याप्तिमपाकरोति .... रूपद्वयवद्वृत्तीति । जलेऽभास्वरशुक्लरूपस्य तेजसि भास्वरशुक्लरूपस्यैव सत्वेन रूपद्वयाभावाद्रूपद्वयवती पृथिवी तद्वृत्तिः द्रव्यत्वव्याप्या या जतिः

पृथिवीत्वजातेः तादृशजातिमत्त्वस्य आमघटे उत्पन्नविनष्टघटे च सत्त्वेन नाव्याप्तिरित्याशयः। रूपद्वयवद्वृत्तिद्रव्यत्वजातिमादाय जलेऽतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति। द्रव्यत्वन्यूनवृत्तिरिति तदर्थः। तथा च द्रव्यत्वन्यूनवृत्तित्वस्य द्रव्यत्वेऽसत्वान्न द्रव्यत्वमादायातिव्याप्तिः। रूपद्वयवद्वृत्ति पृथिवीजलान्यतरत्वमादाय जलेऽतिव्याप्तिवारणाय जातिरिति। तथा चान्यतरत्वस्य जात्यन्यत्वेनान्यतरत्वमादाय नातिप्रसङ्गः। रूपवद्वृत्तीत्यादिना निवेशे शुक्लरूपवद्वृत्ति जलत्वजातिमादाय जलेऽतिप्रसक्तिरतो रूपद्वयवद्वृत्तीति। तथा च जलत्वस्यैकरूपवद्वृत्तित्वेन रूपद्वयवद्वृत्तित्वाभावान्न जलत्वमादायातिप्रसङ्गः॥ रूपद्वयवद्वृत्तित्वनिवेशापेक्षया लाघवमनुसृत्याह — रूपनाशवद्वृत्तीति। पृथिव्यां लक्षणसमन्वयमुपपादयति .... वैशेषिकनय इति। वैशेषिकनये पीलुपाकाभ्युपगमेन पाकेन पूर्वनाशे सति रूपान्तरोत्पत्तिरिति ध्वंसस्य स्वप्रतियोगिसमवायिकारणवृत्तित्वेन रूपध्वंसप्रतियोगिरूपस्य परमाणूनामेव समवायिकारणत्वेन रूपध्वंसः परमाणुवृत्तिः, तद्वृत्तिः द्रव्यत्वव्याप्या या जातिः पृथिवीत्वजातिर्भवति तादृश जातिमत्त्वमादाय पृथिव्यां लक्षणसमन्वय इति भावः। पिठरपाकवादिनां नैयायिकानां मते लक्षणसमन्वयमुपपादयति —न्यायनय इति। नैयायिकानां मते अवयविन्यवयवेषु च पाकाभ्युपगमेन पूर्वयुक्त्या रूपनाशाधिकरणं घटाः परमाणवश्च, तद्वृत्ति पृथिवीत्वजातिमादाय लक्षणसमन्वयः, शेषं पूर्वदिशावसेयं॥

[मुक्तावली]

षड्विध इति। मधुरादिभेदेन यः षड्विधरसः सः पृथिव्यामेव। जले मधुरएव रसः। अत्रापि पूर्ववद्रसद्वयवद्वृत्ति द्रव्यत्वव्याप्यजातिमत्वं लक्षणार्थोऽवसेयः॥



(सुबोधिनी)

पृथिव्याः लक्षणान्तरमुपपादयतीति मूलमवतारयति। ...षड्विध इतीति। लक्षणसमन्वय मुपपादयति। ....मधुरादिभेदेनेति। एवञ्च षड्विधरसवत्त्वस्य पृथिव्यां सत्त्वेन लक्षणसङ्गतिरिति भावः। जलेऽतिव्याप्तिर्नसंभवतीत्याशयेनाह। .... जल इति॥ जले मधुररसस्यैव सत्वेन षड्विधरसाभावान्नातिप्रसङ्ग इति भावः। यत्र पृथिव्यामेक एव रसः तत्रोत्पन्नविनष्ट घटे च षड्विधरसाभावादव्याप्तिरित्यत आह। ....अत्रापीति॥ शेषं दर्शितदिशावसेयम्॥

[मुक्तावली]

द्विविध इति। वस्तुस्थितिमात्रं न तु द्विविधगन्धवत्त्वं लक्षणं-द्विविधत्वस्य व्यर्थत्वात्। द्वैविध्यं च सौरभासौरभभेदेन बोध्यम्॥ ३५

(सुबोधिनी)

.... द्विविध इतीति॥ यदि द्विविधगन्धवत्त्वं पृथिव्याः लक्षणं तदा गन्धे द्विविधत्वस्य वैयर्थ्यं स्यादत आह। —वस्तुस्थितिमात्रमिति॥ एवं च "गन्धस्तु द्विविधो मत,, इतिमूलवाक्यं न लक्षणपरमपि तु पृथिव्यां द्विविधगन्धो वर्तत इति वस्तुस्वरूपप्रदर्शनपरमित्याशयः। द्विविधगंधवत्वस्य लक्षणत्वेऽनुपपत्तिं दर्शयति।— द्विविधत्वस्येति। गंधस्य द्वैविध्यमेव दर्शयति .... द्वैविध्यंचेति॥ ३५॥

[मुक्तावली]

का॥ स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः।

मु॥ स्पर्श इति। तस्याः पृथिव्याः। अनुष्णाशीतस्पर्शवत्वं वायावपि वर्तत इत्युक्तं पाकज इति। इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तं, पाकजस्पर्शवत्त्वमात्रं तु लक्षणं अधिकस्य वैयर्थ्यात्, यद्यपि पाकजस्पर्शो घटादौ नास्ति, तथापि पाकजस्पर्श

वद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः ।

(सुबोधिनी)

...स्पर्श इतीति । तच्छब्दार्थमाह — तस्या इति । पाकजानुष्णाशीतस्पर्शवत्त्वलक्षणे पाकजपदस्य सार्थक्यमुपपादयति ....अनुष्णाशीतस्पर्शवत्त्वमिति । अनुष्णाशीतस्पर्शवत्त्वस्य वायौ सत्त्वेन वायावतिव्याप्तिरतः पाकज इत्युक्तं, तथा च रूपादिचतुष्टयस्य पृथिव्यामेव पाकजत्वेन वायौ पाकजस्पर्शाभावान्नातिव्याप्तिरित्यर्थः ।

ननु पाकजस्पर्शवत्त्वमात्रस्यैव सम्यक्त्वे अनुष्णेति पदस्य वैयर्थ्यमित्यत आह । .... इत्थं चेति । अनुष्णेति पदं न लक्षणघटकमपि तु पृथिव्यां विद्यमानस्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं, लक्षणन्तु पाकजस्पर्शवत्त्वमेवेत्याशयः । अव्याप्तिमाशङ्कते । — यद्यपीति । घटादौ पाकजस्पर्शाभावादव्याप्तिरित्याशयः । लक्षणमन्यथा परिष्कृत्याव्याप्तिमपाकरोति । ... तथा पीति । पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्या या जातिः तादृशजातिमत्त्वं पृथिव्याः लक्षणमित्याशयः । तथा च पाकजस्पर्शवती पृथिवी, तद्वृत्तिर्द्रव्यत्वव्याप्या या जातिः पृथिवीत्वजातिः तादृशजातिमत्त्वस्य घटादावपि सत्त्वेन नाव्याप्तिरित्याशयः । द्रव्यत्वजातिमादाय जलेऽतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । द्रव्यत्वन्यूनवृत्तिरिति तदर्थः । द्रव्यत्वव्याप्यजलत्वजातिमादाय जलेऽतिव्याप्तिवारणाय पाकजस्पर्शवद्वृत्तित्वं जातौ निविष्टम् पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यपृथिवीजलान्यतरत्वमादाय जलेऽतिव्याप्तिवारणाय जातीति ॥

[मुक्तावली]

का॥ नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥

मु॥ नित्येति । सा पृथिवी द्विविधा नित्यानित्या चेत्यर्थः । अणुलक्षणा परमाणुरूपा पृथिवी नित्या ॥ ३६ ॥



(सुबोधिनी)

.... नित्यतीति । ....सेति । स्फुटोऽर्थः ॥ ३६ ॥

[मुक्तावली]

का॥ अनित्या तु तदन्या स्यात् सैवावयवयोगिनी ।
सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥

मु॥ तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्वाप्यनित्येत्यर्थः । सैवानित्या पृथिव्यवयववतीत्यर्थः । नन्ववयविनि किं मानम्, परमाणुपुञ्जैरेवोपपत्तेः । न च परमाणूनामतीन्द्रियत्वाद् घटादीनां प्रत्यक्षं न स्यादिति वाच्यम् । एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वसंभवात् । यथैक केशस्य दूरेऽप्रत्यक्षत्वेपि तत्समूहस्य प्रत्यक्षत्वम् ॥ न चैको घटः स्थूल इति बुद्धेरनुपपत्तिरिति वाच्यम् ॥ एको महान् धान्यराशिरितिवदुपपत्तेः ॥

(सुबोधिनी)

विलक्षणसंस्थानविशिष्टपरमाणुपुंजविषयकत्वेनैवायं घट इति प्रतीत्युपपत्तौ घटादिरूपावयव्यङ्गीकारोऽसंगत इति बौद्धमतमनुसृत्य शङ्कते । ....नन्विति ॥ घटादीनां परमाणुपुंजरूपत्वे तेषामतीन्द्रियत्वे न घटादीनां प्रत्यक्षत्वं न स्यादित्याशयेन शङ्कते । —न चेति ॥ वाच्यमिति परेणान्वयः । घटादीनां परमाणुपुंजरूपत्वेऽपि प्रत्यक्षत्वं सदृष्टान्तमुपपादयति । ....एकस्येति ॥ यथैकस्य दूरस्थ केशस्याप्रत्यक्षत्वेऽपि तादृशकेशसमूहस्य प्रत्यक्षत्वं, तथैव एक परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वं संभवत्येवेति घटप्रत्यक्षान्यथानुपपत्त्या अवयवकल्पना निरर्थिकेति भावः । शङ्कते —न चेति ॥ वाच्यमिति परेणान्वयः । परमाणुपुंजस्य घटरूपत्वे

एको घट इति घटे एकत्वावगाहिप्रतीते र्विरोधः समूहे एकत्वस्य बाधितत्वात्, एवं स्थूलो घट इति प्रतीतेरपि विरोधः परमाणुसमूहे स्थूलत्वस्य बाधितत्वादतोवयव्यङ्गीकार आवश्यक इति भावः। समाधत्ते। ....एक इति॥ यथा धान्यसमूहे एकत्वं महत्व मेवमेव परमाणुपुंजे एकत्वं महत्वं चोपपद्यत इति भावः॥

[मुक्तावळी]

**मैवं। परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षत्वायोगात्। दूरस्थकेशस्तु नातीन्द्रियः सान्निधाने तथैव प्रत्यक्षत्वात्।**

(सुबोधिनी)

बौद्धमतं निराकरोति। ...मैवमिति॥ केशस्य नातीन्द्रियत्वं सन्निधाने तस्य प्रत्यक्षत्वात्, दूरादिदोषेणतु तस्याप्रत्यक्षत्वं, परमाणोः दूरस्थत्वे ऽपि सन्निधाने ऽपि न प्रत्यक्षत्वं तस्यातीन्द्रियत्वात् अतस्तादृशातीन्द्रियपरमाणुपुंजस्याप्यप्रत्यक्षत्वेन न परमाणुपुंजस्य घटादिरूपत्वमतो घटादीनां प्रत्यक्षत्वान्यथानुपपत्या परमाणुभिन्नावयविकल्पन मावश्यक मित्याशयः॥

[मुक्तवली]

**न च तदानीं दृश्यपरमाणुपुंजस्योत्पन्नत्वात्प्रत्यक्षत्वे ऽपि विरोध इतिवाच्यं। अदृश्यस्य दृश्यानुपादानत्वात्। अन्यथा चक्षुरूष्मादि संततेः कदाचिद्दृश्यत्वप्रसङ्गात्।**

(सुबोधिनी)

शङ्कते --नचेति। वाच्यमिति परेणान्वयः। क्षणभङ्गवादि बौद्धानमते परमाणूनामुत्पत्तिस्वीकारात् अदृश्यपरमाणुभिर्दृश्यपरमाणुपुंजस्योत्पत्तिस्वीकारात् दृश्यपरमाणुपुंजस्यैव घटादिरूपत्वेन घटादीनां प्रत्यक्षत्व मुपपद्यत इत्यवयवकल्पनानिरार्थकेति भावः। क्षणभङ्गवादम



पाकरोति —अदृश्यस्येति। अदृश्यस्य दृश्यं प्रति यतः समवायिकारणत्वं नास्त्यतोऽदृश्य परमाणुभिः दृश्यपरमाणुपुंजस्य नोत्पत्तिरिति भावः —अन्यथेति। अदृश्यस्य दृश्यसमवायि कारणत्वे अदृश्यचक्षुरिन्द्रिय जन्योष्मादि सन्ततेः दृश्यरूपाया अपि जननेन तदृशोष्मादिसन्ततेः प्रत्यक्षत्वं स्यादित्यर्थः॥

[मुक्तावली]

**न च तितप्ततैलादौ कथमदृश्य दहनसन्तते र्दृश्यदहनोत्पत्तिरिति वाच्यम्। तत्र तदन्तः पातिभि र्दृश्यदहनावयवैः स्थूल दहनोत्पत्ते रुपगमात्॥**

(सुबोधिनी)

शङ्कते।....न चेति। वाच्यमिति परेणान्वयः। अतितप्ततैलगता दृश्यदहनसन्ततेः जलबिन्दुसंयोगेन दृश्यदहनजनकत्वं न स्याद्यदि अदृश्यस्य दृश्यं प्रत्यजनकत्वं स्यादतः दृश्यं प्रत्यदृश्यस्यापि कारणत्व मङ्गीकर्तव्यं। तथा चा दृश्यपरमाणुभिर्दृश्यपरमाणुपुंजस्योत्पत्तिसंभवे तादृशदृश्यपरमाणु पुंजैरेव घटादिव्यवहार संभवे अवयविकल्पनं निरर्थक मित्याशयः॥

एतदृशाशङ्कां निराकरोति। —तत्रेति। न ह्यतितप्ततैलादावदृश्यदहन सन्ततेः र्दृश्यदहनोत्पत्ति माचक्ष्महे। किन्तु दृश्यदहनसन्ततेरेव दृश्योत्पत्तिमङ्गीकुर्महे। तथा चादृश्यस्य दृश्यं प्रत्यकारणत्वेनादृश्यपरमाणुभिर्न दृश्यपरमाणु पुंजोत्पत्तिः संभवतीति घटादि प्रत्यक्षान्यथानुपपत्या अवयविकल्पन मावश्यकमिति भावः॥ न चातितप्ततैलादौ कारणीभूतदृश्यसन्ततिसत्वे किं मानमिति वाच्यम्। उपलोचन विशेषसहकृत चक्षुरिन्द्रियस्यैव प्रमाणत्वात्॥

[ मुक्तावली ]

**न चादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणो रुत्पत्तिरिति. वाच्यम् । यतो न दृश्यत्वमदृश्यत्वं वा कस्य चित्स्वभावादाचक्ष्महे । किन्तु महत्वोद्भूत रूपादि कारणसमुदायवतो दृश्यत्वम् , तदभावे चादृश्यत्वम् । तथा च त्रसरेणो र्महत्वात्प्रत्यक्षत्वं न तु द्व्यणुकादे स्तदभावात् ॥**

( सुबोधिनी )

अदृश्यस्य दृश्यानुपादानत्वे दोषमाशङ्कते ॥— न चेति ॥ वाच्यमिति परेणान्वयः ॥ त्र्यणुकस्य दृश्यत्वेन द्व्यणुकस्यादृश्यत्वेन द्व्यणुकात्त्र्यणुकोत्पत्तिर्न स्यादिति भावः ॥ समाधत्ते ॥

— यत इति ॥ अत्रायमाशयः ॥ अस्य वस्तुनो दृश्यत्वमस्यादृश्यत्वामिति न स्वभावाद्वयं ब्रूमः । किन्तु यत्र महत्वोद्भूत रूपवत्वं तस्य प्रत्यक्षविषयत्वं । यत्र महत्वो द्भूत रूपाभाव स्तस्या प्रत्यक्षत्व मिति। तथाच द्व्यणुकादौ महत्वोद्भूतरूपाभावाद प्रत्यक्षत्वं, त्र्यणुके तु तत्सत्वात्प्रत्यक्षत्वं, तथाचादृश्यद्व्यणुकाद्दृश्य त्र्यणुकोत्पत्ति स्वीकारेऽपि नकापि क्षतिरित भावः ॥

[मुक्तावली]

**न हि त्वन्मतेऽपि संभवतीदं , परमाणौ महत्वाभावात् ॥**

(सुबोधिनी)

ननु भवन्मतेऽदृश्यद्व्यणुकजन्यत्र्यणुकस्य महत्वोद्भूत रूपवत्त्वमङ्गीकृत्य तस्य प्रत्यक्षत्व मभ्युपगन्तव्य मेव मदृश्यपरमाणुजन्यस्य घटादिरूप परमाणुपुञ्जस्य महत्वोद्भूत रूपादिक मङ्गीकृत्य दृश्यत्व मङ्गीक्रियतामित्यत आह —नहीति । इदमत्रावधेयं, क्षणभङ्गवादिनां मते अदृश्यपरमाणूनां दृश्यपरमाणु पुञ्जोपादानत्व मित्यस्य को वा-



अर्थः, अदृश्यपरमाणूनां दृश्यपरमाणु समवायि कारणत्वं वा १, परमाणौ समवायेन परमाणोः वर्त्तित्वं वा २, दध्नः दुग्धादा विवनाशप्रतियोगित्वं वा ३ ? नाद्यः सम्भवति क्षण भङ्गवादिभिः अदृश्य परमाणूनां दृश्यपरमाणुपुंज समवायिकारणत्वानङ्गीकारात्, न द्वितीयः, परमाणौ समवायेन परमाणु सद्भावाङ्गीकारे अवयव्यङ्गीकारेण स्वमतविरोधात् । न तृतीयः पक्षः, तृतीयपक्षे नाशप्रतियोगित्वरूपप्रकृतित्वं वाच्यम् । तच्च तन्मते न संभवति । पूर्वव्यक्तेरेवोत्तरव्यक्तिं प्रति कारणत्वाभ्युपगमेन अन्तरा नाशस्यानपेक्षणात् । किन्तु तन्मते दृश्यपरमाणुपुंजं प्रति निमित्तकारणत्वमभ्युपगन्तव्यम । तथा च समवायिकारणगतसंख्याया एव अदृश्याज्जायमानद्रव्यनिष्ठपरिमाणं प्रति कारणत्वस्याभ्युपगन्तव्यतया अदृश्यपरमाणूनां निमित्तत्वेन तद्गतसंख्यायाः तज्जन्यकार्यगतमहत्परिमाणं प्रत्यकरणत्वेन, कारणाभावात् कार्यपरमाणुपुंजे महत्त्वासंभवेन तस्य प्रत्यक्षत्वं न संभवतीति घटादिप्रत्यक्षान्यथानुपपत्त्या अवयविसिद्धिर्बोध्येतिभावः ॥

[ मुक्तावली ]

**इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम् । तेषां चावयवधाराया अनन्तत्वेन मेरुसर्षपयोरपि साम्यप्रसङ्गः अतः कचिद्विश्रामो वाच्यः । यत्र तु विश्रामस्तस्यानित्यत्वेऽसमवेतकार्योत्पत्ति प्रसङ्गात्तस्य नित्यत्वम् । महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि कचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः ॥**

(सुबोधिनी)

स्वाभिप्रायं व्याचष्टे। ....इत्थं चेति। असमवेत कार्योत्पत्ति-प्रसङ्गादिति। अकारणक कार्योत्पत्ति प्रसङ्गादित्यर्थः। स्पष्टोऽर्थः॥

[मुक्तावली]

न च त्रसरेणोरेव विश्रामोऽस्त्विति वाच्यम्। त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धौ त्रसरेणोरवयवाः सावयवाः महदारंभकत्वात्कपालवदित्यनुमानेन तदवयवसिद्धेः। न चेदमप्रयोजकं, अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यवत्त्वस्य प्रयोजकत्वात्। न चैवं क्रमेण तदवयवधारापि सिद्ध्येदिति वच्यम्। अनवस्थाभयेन तत्सिद्धेरिति। सा चेति। कार्यरूपा पृथिवी त्रिविधा। शरीरेन्द्रिय विषयभेदादित्यर्थः॥ ३७॥

(सुबोधिनी)

अवयवधारायाः परमाणुषु विश्रान्तत्वाभ्युपगमापेक्षया त्र्यणुकेष्वेव विश्रामोऽस्त्विति शङ्कते। ...न चेति। वाच्यमिति परेणान्वयः,। अवयवधारायाः परमाणुष्वेव विश्रामो वाच्यः, न द्व्यणुकेषु। न वा द्व्यणुकेष्विति प्रतिपादयितुं त्र्यणुकद्व्यणुकयोः सावयवत्त्वमनुमानेन साधयति। ....त्रसरेणुरिति। त्र्यणुकः सावयवः चक्षुरिन्द्रियजन्य प्रत्यक्षविषयत्वे सति द्रव्यत्वात् घटवत्, सावयवत्व व्याप्य चक्षुरिन्द्रिय जन्यप्रत्यक्ष विषयत्व विशिष्ट द्रव्यत्ववान्त्र्यणुक इति परामर्शात्त्र्यणुकः सावयव इत्यनुमितिर्जायते, तथाचानुमानेन त्र्यणुकावयवानां सिद्धौ, त्र्यणुकावयवा अपि सावयवाः महदारंभकत्वात्, सावयवत्वव्याप्य महदारंभकत्ववन्तः त्र्यणुकावयवा इति परामर्शेन त्र्यणुकावयवावयवानां परमणूनां सिद्धिरिति भावः॥



शङ्कते।—न चेति। अनुकूलतर्काभावान्नेदमनुमानं परमाणुसाधकमिति भावः। समाधत्ते। अपकृष्टमहत्त्वमिति। अपकृष्टपरिमाणं प्रति स्वसमवेतसमवेतत्वसंबन्धेनानेकद्रव्यवत्त्वं प्रयोजकं। तथाच स्वपदेन परमाणूनां स्वीकारे तत्समवेतानि द्व्यणुकानि तत्समवेतत्वं त्र्यणुके वर्ततइति स्वसमवेतसमवेतत्वसंबंधेन परमाणुरूपानेकद्रव्यवत्वस्य त्र्यणुके सत्त्वात्त्र्यणुकेऽपकृष्टमहत्वं जायतइति तादृशापकृष्ट महत्वप्रयोजकतया परमाणुसिद्धिरिति भावः। शंकते ... नचेति। वाच्यमितिपरेणान्वयः। समाधत्ते .... अनवस्थाभयेनेति। ....साचेतीति। ....कार्यरूपेति। स्पष्टोऽर्थः॥ ३७॥

[मुक्तावली]

का॥ योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम्।
विषयोद्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः॥ ३८

मु॥ तत्र देहमुदाहरति। योनिजादीति। योनिजमयोनिजं चेत्यर्थः। योनिजमपि द्विविधं जरायुजमण्डजं चेति जरायुजं मानुषादीनां अण्डजं सर्पादीनां। अयोनिजं स्वेदजोद्भिज्जादिकं। स्वेदजाः कृमिदंशाद्याः। उद्भिज्जास्तरुगुल्माद्याः। नारकिणां शरीरमप्ययोनिजम्॥

(सुबोधिनी)

...तत्र योनिज मुदाहरतीति। योनिजादीत्यत्रादि शब्दार्थमुपपदयति ....योनिजमयोनिज मिति। शेषः स्पष्टः॥

[मुक्तावली]

न च मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम्। गन्धादिमत्त्वस्यैव प्रमाणत्वात्॥

(सुबोधिनी)

मानुषादिशरीराणां प्रमाणप्रदर्शनपूर्वकं पार्थिवत्वं व्यवस्थापयितुं

शङ्कते .... नचेति । वाच्यमितिपरेणान्वयः । मानुषादिशरीराणां पार्थिवत्वे प्रमाणं नास्तीत्यर्थः । तेषां पार्थिवत्वे प्रमाण दर्शयति -- गन्धादिमत्त्वस्यैवेति । तथा च मानुषादिशरीराणि पार्थिवानि गन्धवत्वात्, पार्थिवत्वव्याप्य गन्धवन्ति मानुषादिशरीराणीति परामर्शान्मानुषादिशरीराणि पार्थिवानीत्यनुमिति जायते । एवञ्चैत दृशानुमानेन मानुषादिशरीराणां पार्थिवत्वसिद्धिरित्याशयः ॥

[मुक्तावली]

**न च क्लेदोष्मादरुपलंभादाप्यत्वादिक मपि स्यादिति वाच्यम् तथा सति जलत्व पृथिवीत्वादिना सङ्करप्रसङ्गात् ॥**

(सुबोधिनी)

शङ्कते .... न चेति । वाच्यमिति परेणान्वयः । क्लेदो नाम स्वेदः । ऊष्मा उष्णम् । आदिना व्यूहाकाशपरिग्रहः । व्यूहो नाम क्रिया । आकाशः मुखादावन्नादि गत्य प्रतिबन्धकः तथा च मानुषादि शरीराणि जलीयानि स्वेदवत्त्वादित्यनुमानेन जलीयत्वं सिद्ध्यतु । मानुषादि शरीराणि तैजसानि उष्णस्पर्शवत्त्वादित्युमानेन तैजसत्वं वा सिद्ध्यतु । मानुषादि शरीराणि वायवीयानि क्रियाश्रयप्राणादिमत्वादित्यनुमानेन वायवीयत्वं वा सिद्ध्यतु। मानुषादिशरीराणि आकाश सम्बन्धीनि अन्नादि गत्य प्रतिबंधकवत्वादित्यनुमानेना काशसंबंधित्वं वा सिद्ध्यत्वित्याशयः । मानुषादिशरीराणां पार्थिवत्वं व्यवस्थापयितुं पूर्वोक्ताशंका मपाकरोति — तथासतीति । एकस्मिन्देहे पार्थिवत्वजलत्वादि समावेशे तेषां सङ्करप्रसक्तिः, तथा हि पार्थिवत्वाभाववति जले जलत्वस्य, जलत्वाभाववति पृथिव्यां पृथिवीत्वस्यसत्वेन, तयोः मनुष्यदेहे समावेशेन सङ्करप्रसङ्ग इतिभावः ॥ तथा च मनुष्यादिदेहानां पार्थिवत्वमेव, न तु जलीयत्वादिकमिति पर्यवसितोर्थः ॥



[मुक्तावली]

**न च तर्हि जलीयत्वादिकमेवास्तु न तु पार्थिवत्वमितिवाच्यम् मृदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानाद्गंधाद्युपलब्धेश्च । पृथिवीत्वसिद्धेः, तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम् ॥**

(सुबोधिनी)

शङ्कते । नचेति । वाच्यमितिपरेणान्वयः । संकरभयेन पार्थिवत्वजलीयत्वादीनामनभ्युपगमेऽपि विनिगमनाभावान्मानुषादिशरीराणां जलीयत्वादिकमेवास्तु न तु पार्थिवत्वमित्यर्थः । मनुष्यादिशरीराणां पार्थिवत्वाभ्युपगमे जलीयत्वानभ्युपगमे हेतूडपपादयति । क्लेदादीनामिति क्लेदादिकमादायैव मनुष्यादिशरीराणां जलीयत्वादिकमभ्युपगन्तव्यं क्लेदादिनाशे तु शरीरस्य नाशोभ्युपगन्तव्यः। न च तथा दृश्यते क्लेदादिनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानादतो न जलीयत्वं गन्धाद्युपलब्धेश्च पार्थिवत्वमभ्युपगन्तव्यं यत्र गन्धः तत्र पार्थिवत्वमिति व्याप्तेरित्याशयः ॥

मनुष्यादिशरीराणां पार्थिवत्वे शरीरस्य पाञ्चभौतिकत्व प्रवादः कथमित्यत आह ...तेनेति । यतः मनुष्यादिदेहानां पार्थिवत्वं, तेन पार्थिवशरीरे जलादीनां निमित्तकारणत्वं । एवं जलीयदेहेषु पृथिव्यादीनां निमित्तत्वं, एवमेव तैजसादिशरीरेषु पृथिव्यादीनां निमित्तत्वं तत्तद्देहेषु तत्तत्पदार्थाना मुपादानत्वं, एतादृश प्रक्रियामनुसृत्यैव शरीराणां पाञ्चभौतिकत्वप्रवाद इत्याशयः ॥

[मुक्तवली]

**शरीरत्वं न जातिः, पृथिवीत्वादिना सांकर्यात् । किंतु चेष्टाश्रय**

त्वं, वृक्षादिनामपि चेष्टाश्रयत्वान्नाव्याप्तिः। न च वृक्षादेः शरीरत्वे
किं मानमिति वाच्यम् । आध्यात्मिकवायुसंबन्धस्य प्रमाणत्वात् । तत्रै
व किंमानमिति चेत्, भग्नक्षतसंरोहणादीनां तदुन्नयनात् । यदि ह
स्तादौ शरीरव्यवहारो न भवति तदन्त्यावयवित्वेन विशेषणीयम् ॥

(सुबोधिनी)

शरीरत्वमिति । शरीरत्वस्य जातित्वे बाधकमुपपादयति।...पृथिवीत्वादि
नेति। शरीरत्वाभाववति घटे पृथिवीत्वस्य पृथिवीत्वाभाववति जली
यशरीरे शरीरत्वस्य सत्वेन परस्परात्यन्ताभाव समानाधिकरणयोः
तयोः पृथिवीत्वशरीरत्वयोः पार्थिवशरीरे समावेशात्संकरः जातिबा
धकस्य संकरस्य सत्वेन शरीरत्वं न जातिरित्याशयः ॥ शरीरत्व
स्य जात्यनात्मकत्वे कीदृशरूपं शरीरत्वमित्यत आह ....किंत्वि
ति। चेष्टाश्रयत्वं शरीरस्य लक्षणं। तादृशचेष्टाश्रयत्वस्य वृक्षादी
नां सत्वेन तत्र नाव्याप्तिरित्युपपादयति — वृक्षादीनामपीति ।
शंकते । नचेति । वाच्यमितिपरेणान्वयः । वृक्षादीनां शरीरत्वे प्रमा
णं नास्तीत्यर्थः ।वृक्षादीनां शरीरत्वे प्रमाणं दर्शयति।....आध्यात्मि
कवायुसंबन्धस्येति । वृक्षादीनां, शरीरत्वं, प्राणवायुसंबन्धवत्वादित्यनु
मानेन वृक्षादीनां शरीरत्वं सिद्ध्यतीत्यर्थः । वृक्षादीनां प्राणवायुसं
बन्धवत्वे किं प्रमाणमिति शंकापूर्वकं हेतुमुपपादयति ... तत्रैवेति।
वृक्षादीना माध्यात्मिक वायुसंबन्धवत्वे प्रमाणं किमिति प्रश्नः। त
त्र हेतुः भग्नक्षतसंरोहणादिनेति । भग्नक्षतयोः विभागविशेष विश्लि
ष्टावयवयोः संरोहणादिनेति तदर्थः आदिना वृद्धिपरिग्रहः । तथा
च वृक्षाःप्राणवन्तः विभाग विशेष विश्लिष्टावयवयोः संरोहणात्, वृद्धे
र्वा इत्यनुमानेन तेषां प्राणवायुसंबन्धो ऽनुमीयत इत्यर्थः ।
ननु हस्तादीनां शरीरावयवत्वेन तेषां शरीरत्वाभावात्तत्र चेष्टाश्रयत्व



स्य सत्वेनातिप्रसङ्ग इत्यत आह । ....यदीति । हस्तादीनां
शरीर इति व्यवहाराभावे अन्त्यावयवित्वे सति चेष्टाश्रयत्वं श
रीरलक्षणं वाच्यम् । तथा च हस्तादौ चेष्टाश्रयत्वस्य सत्वेऽपि
अन्त्यावयवित्वस्या सत्वान्नातिप्रसङ्ग इत्याशयः ॥

[मुक्तावली]

**न च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यम् । तादृशे प्रमाणाभावात् । अथ वा चेष्टावदन्त्यावयवि वृत्तिद्रव्य-त्वव्याप्यजातिमत्वं अन्त्यावयविमात्रवृत्ति चेष्टावद्वृत्ति जातिमत्वं वा तत् । मानुषत्व चैत्रत्वादि जातिमादाय लक्षणसमन्वयः॥**

(सुबोधिनी)

शरीरलक्षणस्याव्याप्तिमाशङ्कते । — न चेति । वाच्यमिति परे
णान्वयः ॥ अव्याप्तिमपाकरोति ॥ ....तादृश इति ॥ चेष्टाशू
न्यशरीरसत्वे प्रमाणाभावात्, सर्वशरीरेषु चेष्टाश्रयत्वस्य सत्वेन-
नाव्याप्तिरित्याशयः ॥ मृतशरीरे चेष्टाश्रयत्वाभावादव्याप्तिरित्यत-
आह ॥ .... अथवेति ॥ चेष्टावान्योऽन्त्यावयवी तद्वृत्तिः द्रव्य
त्वव्याप्या या जातिः मानुषत्व चैत्रत्वादिजातिः तादृशजातिमत्वस्य
मृतशरीरेऽपि सत्वेन नाव्याप्तिः ॥ द्रव्यत्वजातिमादाय घटादावति
व्याप्तिवारणाय द्रव्यत्वव्याप्येति ॥ तथाच द्रव्यत्वव्याप्यघटत्वादिजातीनां
चेष्टावद्वृत्तित्वेन न क्षतिः चेष्टावद्वृत्तिद्रव्यत्वव्याप्य पाणित्वादिक
मादाय हस्तादावति व्याप्तिवारणायान्त्यावयविवृत्तित्व निवेशः। हस्तादेः
शरीरावयवत्वेनान्त्यावयवित्वाभावान्न हस्तत्वादिजातिरन्त्यावयवि वृत्तिरि
ति नातिप्रसङ्गः ॥

ननु चेष्टावदन्त्यावयविवृत्ति द्रव्यत्वव्याप्या या जातिः पृथिवी-
त्वजातिः तादृशजातिमत्त्वस्य घटादौ सत्त्वेन घटादावतिव्याप्तिरि-

त्वत आह ॥ —अन्त्यवयविमात्रेति । तथा च अन्त्यावयविमात्र-वृत्तिः चेष्टावद्वृत्तिया जातिः न पृथिवीत्वजातिः पृथिवीत्वस्य कपालादिरूपावयवेष्वपि सत्वात् अपि तु मानुषत्वादिजातिरेव तादृशजातिमत्त्वस्य घटादावविद्यमानत्वान्नातिप्रसङ्ग इति भावः ॥ शेषं पूर्ववद्बोध्यम् ॥ यादृशजातिमादाय लक्षणसमन्वयः करणीय स्तादृशजातिमुदाहरति ॥ ....मानुषत्वेति ॥

[मुक्तावली]

न च नृसिंहशरीरे कथं लक्षणसमन्वयः तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावात् जलीयतैजस शरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यम् ॥ कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात् ॥

(सुबोधिनी)

अव्याप्तिमाशङ्कते —न चेति ॥ वाच्यमिति परेणान्वयः ॥ व्यक्त्यभेदस्य जातिबाधकत्वेन नृसिंहस्यैकव्यक्तित्वेन तन्मात्रवृत्तिनृसिंहत्वस्य जातित्वाभावत् न नृसिंहत्वं निरुक्तचेष्टावद्वृत्तिजातिरिति न नृसिंहत्वमादाय नृसिंहे लक्षणसङ्गतिः, नापि देवत्वमादायापि लक्षणसङ्गतिरित्युपपादयति ॥ ....जलीयतैजसशरीरवृत्तितयेति ॥ संकर दोषप्रसक्त्या देवत्व मपि न जातिः, तथाहि देवत्वाभाववति जले जलत्वस्य जलत्वाभाववति तैजसशरीरेषु आदित्यलोकस्थेषु देवत्वस्य सत्वेन परस्परात्यन्ताभाव समानाधिकरण तादृशजलत्वदेवत्वयोर्वरुणलोकस्थ जलीयदेहेषु समावेशेन संकरस्तथा च नृसिंहदेहे निरुक्तलक्षणाभावादव्याप्तिरित्याशयः ॥ अव्याप्तिमपाकरोति । ....कल्पभेदेनेति । तथा च नृसिंहशरीराणां नानात्वेन नृसिंहत्वस्य नानाव्यक्तिसमवेततया तस्य जाति



त्वं संभवतीति नृसिंहत्वजातिमादाय नृसिंहे लक्षणसमन्वयान्नाव्याप्तिरितिभावः ॥

[मुक्तावली]

इन्द्रियमिति ॥ घ्राणेन्द्रियं पार्थिवमित्यर्थः । पार्थिवत्वं कथमिति चेदित्थम् । घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात्, कुंकुमगन्धाभिव्यञ्जकगोघृतवत् ॥

(सुबोधिनी)

—इन्द्रियमिति । घ्राणेन्द्रियस्य पार्थिवत्वेऽनुमानप्रमाणं दर्शयति । ... घ्राणेन्द्रियमिति । घ्राणेन्द्रियं, पार्थिवं, रूपाद्यव्यञ्जकत्वे सति गन्धाभिव्यञ्जकत्वादित्यर्थः । तत्र दृष्टान्तमुपपादयति — कुंकुमेति । पार्थिवत्वव्याप्य रूपाद्यव्यञ्जकत्व विशिष्टगन्धाभिव्यञ्जकत्ववद्घ्राणेन्द्रियमित्याकारकपरामर्शाद् घ्राणेन्द्रियं पार्थिवमित्यनुमितिर्जायत इत्याशयः ॥

[मुक्तावली]

न च दृष्टान्ते स्वीयरूपादिव्यञ्जकत्वादासिद्धिरिति वाच्यम् । परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात् ॥

(सुबोधिनी)

दृष्टान्तस्य गोघृतस्य स्वीयरूपव्यञ्जकत्वेन रूपाद्यव्यञ्जकत्व घटितहेतोरसत्वात्स्वरूपासिद्धो हेतुरिति शङ्कते । —न चेति ।वाच्यमिति परेणान्वयः । समाधत्ते —परकीयेति । तथा च परकीयरूपाद्यव्यञ्जकत्वे सति गन्धाभिव्यञ्जकत्वादिति हेतुः, एवञ्च गोघृतस्य स्वीयरूपव्यञ्जकत्वेऽपि परकीयरूपाद्यव्यञ्जकत्वाद् कुंकुमगन्धाभिव्यंजकत्वान्नस्वरूपासिद्धिरिति भावः ॥

[मुक्तावली]

न च नवशरावगन्धव्यंजक जलेऽनैकान्तिकत्वमिति वा-

च्यम् । तस्य सक्तुरसाभिव्यंजकत्वात् ॥

(सुबोधिनी)

स्वरूपासिध्यभावे ऽपि व्यभिचाररूपदोष आवस्यक इत्याशयेन शङ्कते .... नचेति । वाच्यमितिपरेणान्वयः । नूतनशरावे जलसम्बन्धेन गन्धाभिव्यक्तिर्भवति पार्थिवत्वाभाववति तादृशजले परकीयरूपाद्यव्यंजकत्वविशिष्टगन्धाभिव्यंजकत्वस्य सत्वेन हेतोः साध्याभाववद्वृत्तित्वेन व्यभिचार इत्यर्थः । नायं हेतुर्व्यभिचारीति प्रतिपादयति —तस्येति । जलस्येत्यर्थः । नूतनशरावगतसक्तु रसाभिव्यंजकत्वेन परकीयरूपाद्यव्यंजकत्वाभावान्नायं हेतुर्व्यभिचारीत्याशयः ॥

[मुक्तावली]

यद्वा परकीयेति न देयम्, वायूपनीत सुरभिभागानां दृष्टान्तत्व सम्भवात् ।

(सुबोधिनी)

लाघवादाह .... यद्वेति । परकीयेति विशेषाणानुपादानेऽभ्युपगतस्य स्वीयरूपाभिव्यञ्जकत्वेन हेतुः स्वरूपासिद्ध इत्यत आह । वायूपनीत सुरभि भागानामिति । परकीयेति विशेषाणनुपादानपक्षे वायूपनीत सुरभिभागानां दृष्टान्तत्वं बोध्यं तेषां रूपाद्यव्यंजकत्वेन गन्धाभि व्यञ्जकतया च दृष्टान्तत्वसम्भवादिति भावः ॥

[मुक्तावली]

न च घ्राणेन्द्रिय सन्निकर्षस्य गन्धमात्राव्यंजकत्वात्तत्र व्यभिचार इति वाच्यम । द्रव्यत्वे सतीति विशेषणात् ॥

(सुबोधिनी)

व्यभिचारमाशङ्कते....नचेति । वाच्यमिति परेणान्वयः । तथा च पार्थिवत्वाभाववति घ्राणेन्द्रियसन्निकर्षे रूपाद्यव्यंजकत्व विशिष्टगन्धाभिव्यंजकत्वस्य सत्वेन हेतुर्व्यभिचारीत्याशयः ॥ विशेषणान्तरप्रक्षेपपुरः सरं व्यभिचारंवारयति ... द्रव्यत्वेसतीति । तथा च घ्राणेन्द्रियसंयोगे द्रव्यत्वाभावान्न व्यभिचारइत्याशयः ॥



एवञ्चकिं फलितम् ॥ घ्राणेन्द्रियं, पार्थिवं द्रव्यत्वे सति रूपाद्यव्यंजकत्वे सति गन्धाभिव्यंजकत्वात्, वायूपनीत सुरभि भागवदित्यनुमानेन घ्राणेन्द्रियस्य पार्थिवत्वं सिद्धमिति फलितम् ॥

[मुक्तावली]

विषय माह । विषय इति । उपभोगसाधनं विषयः । सर्वमेव कार्यजातमदृष्टाधीनम् । यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परंपरया वा जनयत्येव । न हि बीजप्रयोजनाभ्यां विना कस्य चिदुत्पत्तिरस्ति तेन द्व्यणुकादिब्रह्माण्डान्तं सर्वमेव विषयो भवति । शरीरेन्द्रिययो र्विषयत्वे ऽपि प्रकारान्तरेणोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥ ३८ ॥

(सुबोधिनी)

... विषयमाहेति । ....उपभोगसाधनमिति । उपभोगसाधनत्वं विषयस्य लक्षणमित्याशयः । एकस्योपभोगं प्रति निखिलविषयाणां साधनत्वाभावादव्याप्तिरित्यत आह । ....सर्वमेवेति । कार्यजातमित्यत्र जातपदं संपातादायातं। सर्वपदेनैव तादृशार्थलाभात् ।

निखिलं कार्यमदृष्टजन्यमित्यनेन कार्यमात्रं प्रत्यदृष्टस्य कारणत्वं प्राप्तं तत्र कीदृशः कारणतावच्छेदकसंबन्धः, न समवायसंबन्धः पटरूपकार्याधिकरणे समवायेनादृष्टस्यासत्वेना कारणत्वप्रसङ्गात । नतावत् स्वसमवायिसंयुक्तत्वं, स्वपदेनादृष्टग्रहणे स्वसमवाय्यात्मसंयुक्तत्वस्य घटादि रूपकार्याधिकरणे कपालादौ सत्वेपि शब्दरूप कार्याधिकरणे गगने स्वपदग्राह्य

दृष्टाश्रयात्म संयुक्तत्वाभावेन शब्दं प्रत्यदृष्टस्याकारणत्वप्रसङ्गात् किन्तु स्वसमवायिसंयुक्त संयोगसंबन्धः. तथा चादृष्टस्य स्वपदेन ग्रहणे स्वसवाय्यात्मा तत्संयुक्तं मूर्तद्रव्यं तत्संयोगस्याकाशे सत्वेन तेन संबन्धेन कारणत्वमदृष्टस्य शब्दं प्रत्युपपद्यते । एवं निखिलकार्यं प्रत्यपि स्वाश्रयसंयुक्तसंयोगसंबन्धेनादृष्टस्य कारणत्वं बोध्यम् । एवं च यादृशयादृशकार्यं यद्यत्पुरुषादृष्टजन्यं तत्तत्कार्यं तत्तत्पुरुषप्रत्युपभोगसाधनं साक्षात्परंपरया वा भवतीति कार्यमात्रस्योपभोगसाधनत्वं संभवतीत्याशयः । कार्यमात्रस्योपभोग साधनत्वमुपपादयति । ....न हीति । बीजप्रयोजनाभ्यां विना कस्यचित्कार्यस्य हात्ति र्नसंभवतीति कार्यमात्रं प्रति बीजमदृष्टादि प्रयोजनन्तु उपभोग इति द्व्यणुकादिनिखिलकार्यमुपभोगसाधनमेवेति लक्षणसङ्गतिः ।

ननु परमाणूनामपि परंपरया उपभोगसाधनत्वात्तेषामपि लक्ष्यत्वेन द्व्यणुकादिब्रह्माण्डान्त इति कथनमसङ्गतमिति चेन्न । परमाणूनामुपभोगसाधनत्वेन विषयत्वेऽपि कार्यरूपपृथिव्या एव त्रिविधत्वेन विभजनात् । कार्यरूपपृथिवीविषयस्यैव द्व्यणुकेत्यादिना प्रदर्शितत्वात् । नन्वेवं शरीरेन्द्रिययोरप्युपभोगसाधनत्वेन विषयरूपत्वादनित्यपृथिव्याः त्रैविध्योपन्यासोऽसङ्गत इत्यत आह ।....शरीरेन्द्रिययोरिति ॥ ३८ ॥ इति पृथिवीनिरूपणम् ॥

[मुक्तावली]

**का ॥ वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।**
**स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥**

**मु ॥ जलं निरूपयति । वर्णः शुक्ल इति । स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिसिद्धिः । यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं तथापि जन्यस्नेहत्वं तथा बोध्यम्**



(सुबोधिनी)

उद्देशानुसारेण जलनिरूपणार्थं मूलमवतारयति । .... जलं निरूपयतीति । जलत्वजातौ किं मानमित्यत आह । .... स्नेहसमवायिकारणतावच्छेदकतयेति । स्नेहस्य समवायिकारणं जलं स्नेहसमवायिकारणता जले, तथा च स्नेहसमवायिकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात्, दण्डनिष्ठ घटकारणतावत्, तादृशधर्मस्य एकत्वे जातित्वे लाघवमिति ज्ञानसहकृतात् किंचिद्धर्मावच्छिन्नत्व व्याप्यकारणतात्ववती स्नेहसमवायिकारणतेति परामर्शात् स्नेहसमवायिकारणता जलत्वरूपजात्यवच्छिन्नेत्यनुमिति जायते । तथा चानुमानेन जलत्वजातिसिद्धिः ।

शङ्कते — यद्यपीति । जलीयपरमाणुस्नेहस्य नित्यत्वेन द्व्यणुकादिगतस्नेहस्यानित्यत्वेन स्नेहत्वस्य नित्यानित्य स्नेहवृत्तितया स्नेहत्व न तावत् कार्यतावच्छेदकमेव भवतीति कथं स्नेहत्वावच्छिन्न समवायिकारणतावच्छेदकतया जलत्वजातिसिद्धिरित्याशयः । समाधत्ते ... तथापीति । नात्र स्नेहत्वं कार्यतावच्छेदकं तस्य नित्यानित्यस्नेहवृत्तितया कार्यतायाः अतिप्रसक्तत्वात् किंतु जन्यस्नेहत्वं कार्यतावच्छेदकं तथा च जन्यस्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिसिद्धिरित्याशयः ॥

[मुक्तावली]

**अथ परमाणौ जलत्वं न स्यात् तत्र जन्यस्नेहाभावात् तत्र च नित्यस्य स्वरूपयोग्यत्वे फलावश्यं भाव नियमादिति चेन्न । जन्यस्नेह जनकतावच्छेदकतया जन्यजलत्वजातेः सिद्धौ तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धिः ॥**

(सुबोधिनी)

शङ्कते --अथेति । जन्यस्नेहस्य परमाणुष्वभावात् जन्यस्नेह समवायिकारणतायाः द्व्यणुकादिनिष्ठत्वेनान्यूनानति प्रसक्तधर्मस्यैवावच्छेदकतया द्व्यणुकादिसाधारणधर्मस्यैव जन्यस्नेहसमवायिकारणतावच्छेदकतेति जन्यस्नेहसमवायिकारणतावच्छेदकतया जलत्वस्य सिद्धौ परमाणुषु जलत्वं न स्यादित्याशयः । परमाणूनां जन्यस्नेहप्रत्यकारणत्वेऽपि तत्स्वरूपयोग्यत्वमास्तामित्याशंक्य निराचष्टे ...तस्य चेति । स्वरूपयोग्यत्वे स्नेहसमवायिकारणतावच्छेदकवत्त्व इत्यर्थः तथा च स्नेहसमवायिकारणतावच्छेदकतया जलत्वमभ्युपगम्य तस्य जलत्वस्य परमाणुसाधारणत्वोपगमे कारणतावच्छेदकाक्रान्तस्य फलजनकत्वनियमेन परमाणुष्वपि स्नेहोत्पत्तिः स्यादतो न जन्यस्नेह समवायिकारणतावच्छेदकतया जलत्वजातिः सिद्ध्यतीत्याशयः । जलत्वजातिं साधयति । ...जन्यस्नेहजनकतावच्छेदकतयेति । तथा च जन्यस्नेहजनकता किंचिद्धर्मावच्छिन्ना कारणतात्वात्, दण्डनिष्ठघटकारणतावत् इत्यनुमानेन तादृशधर्मस्य जातित्वे लाघवमिति लाघवज्ञानसहकृतेन जन्यजलत्वजातिः सिद्ध्यतीत्याशयः । ननु जन्यजलत्वजातिः सिद्ध्यतु कथं जलत्वजातिसिद्धिरित्यत आह । ....तदवच्छिन्नेति । जन्यजलत्वावच्छिन्न जनकतावच्छेदकतयेति तदर्थः । तथा च द्व्यणुकरूपजन्यजलं प्रति परमाणूनां कारणतया जन्यजलत्वावच्छिन्न कारणता परमाणुसाधरणा भवतीति तादृशकारणतावच्छेदकतया जलत्व जातिः सिद्ध्यतीत्याशयः । अनुमानप्रकारस्तु पूर्ववदेव ॥

[मुक्तावली]

शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं वर्णश्शुक्लइति । ननु शुक्लरूपव



त लक्षणम् । अथ वा नैमित्तिकद्रवत्ववदवृत्ति रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्य जातिमत्त्वम् ॥

(सुबोधिनी)

वर्णः शुक्लइति वाक्यस्य न लक्षणपरत्वमपितु स्वरूपाख्यानपरत्वमित्याशयेन व्याचष्टे । .... शुक्लरूपमेवेति । तस्यलक्षणपरत्वमपि सम्भवतीत्याशयेनाह .... अथवेति । नैमित्तिकद्रवत्ववदवृत्तिः रूपवद्वृत्तिः द्रव्यत्वसाक्षाद्व्याप्या या जातिः जलत्वजातिः तादृशजातिमत्वस्य जले विद्यमानत्वाल्लक्षणसङ्गतिः । रूपवद्वृत्ति द्रव्यत्वसाक्षाद्व्याप्यपृथिवीत्वजातिमादाय पृथिव्यामतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववदवृत्तित्वं जातौ विशेषणं । तथाच पृथिवीत्वस्य नैमित्तिकद्रवत्ववद्घृतादि वृत्तित्वेन नातिप्रसङ्गः । नैमित्तिकद्रवत्ववदवृत्ति द्रव्यत्वसाक्षाद्व्याप्यवायुत्वजातिमादाय वाय्वावतिव्याप्तिवारणाय रूपवद्वृत्तीति । तथाच वायुत्वस्य रूपवदवृत्तित्वेन न वायुत्वमादायातिप्रसङ्गः । नैमित्तिकद्रवत्ववदवृत्ति रूपवद्वृत्ति पटत्वजातिमादाय पटेऽतिव्याप्तिवारणाय द्रव्यत्वसाक्षाद्व्याप्येति ॥ द्रव्यत्वसाक्षाद्व्याप्यत्वं च द्रव्यत्वव्याप्याव्याप्यत्वं पटत्वादिकन्तु द्रव्यत्वव्याप्यपृथिवीत्वव्याप्यत्वेन नद्रव्यत्वसाक्षाद्व्याप्यजातिरिति नपटत्वमादायातिप्रसङ्गः ॥

[मुक्तावली]

अभास्वरशुक्लेतररूपासमानाधिकरण रूपवद्वृत्ति द्रव्यत्व साक्षाद्व्याप्यजातिमत्वं वा तदर्थः ॥

(सुबोधिनी)

....अभास्वरेति । —तदर्थ इति । वर्णः शुक्ल इति वाक्यार्थ इत्यर्थः । प्रतिदलव्यावृत्तिः पूर्ववदेव । जलघटान्यतरत्वमादाय घटेऽतिव्याप्तिवारणायात्र पूर्वत्रच जातीति निवेशः । तथा चान्य

तरत्वे जातित्वा भावान्न घटादावतिप्रसङ्गः ॥

[मुक्तावली]

**रसस्पर्शाविति। जलस्य मधुर एव रसः। शीत एव स्पर्शः। तिक्तावृत्तिमधुरवद्वृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातिमत्वं तदर्थः॥**

(सुबोधिनी)

लक्षणान्तरमुपपादयितुं मूलमवतारयति। —रसस्पर्शाविति। मधुर एवेत्येवकारेण तिक्तरसादिव्यवच्छेदः। जलस्य मधुररसवत्त्वमात्रस्य लक्षणत्वे तस्य पृथिव्यामपि सत्वेन पृथिव्यामतिव्याप्तिरतो लक्षणमन्यथा परिष्करोति। —तिक्तावृत्तीत्यादिना। तिक्तावृत्तिः मधुरवद्वृत्तिः द्रव्यत्वसाक्षाद्व्याप्या या जातिः जलत्वजातिः तादृशजातिमत्वस्य जले विद्यमानत्वाल्लक्षणसङ्गतिः॥ मधुरवद्वृत्ति पृथिवीत्वमादाय पृथिव्यामतिव्याप्तिवारणाय तिक्तावृत्तीति। तथाच पृथिवीत्वस्य तिक्तवद्वृत्तित्वेन न पृथिवीत्वमादायातिप्रसङ्गः। तिक्तावृत्तिद्रव्यत्वसाक्षाद्व्याप्यतेजस्त्व मादाय तेजसि अतिव्याप्तिवारणाय मधुरवद्वृत्तीति। तथा च तेजस्त्वस्य मधुरवदवृत्तित्वेन न तेजस्त्व मादाय तेजस्यतिव्याप्तिः। गुडत्वादिजातिमादाय गुडेऽतिव्याप्तिवारणाय द्रव्यत्वसाक्षाद्व्याप्येति। द्रव्यत्वव्याप्याव्याप्येति तदर्थः। तथाच गुडत्वस्य, द्रव्यत्वव्याप्यपृथिवीत्वव्याप्यत्वेन न गुडत्वमादायातिप्रसङ्गः। जलगुडान्यतरत्वमादाय गुडेऽतिव्याप्तिवारणाय जातीति॥

[मुक्तावली]

**ननु शुक्लरूपमेवेति कुतः कालिन्दीजलादौ नीलिमोपलब्धेरिति चेन्न॥ नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासंभवात्। कालिन्दीजले नीलत्व प्रतीतिस्त्वाश्रयौपाधिकी। अत एव वियति विक्षेपे धवलिमोपलब्धिः॥**



(सुबोधिनी)

वर्णः शुक्ल इति प्रथमलक्षणस्यासंभवमाशङ्कते। ....नन्विति। स्पष्टोऽर्थः॥ समाधत्ते॥ ....नीलजनकतावच्छेदिकाया इति। स्पष्टोऽर्थः॥

[मुक्तावली]

**अथ जले माधुर्ये किं मानम्, न हि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते। न च नारिकेलजलादौ माधुर्यमुपलभ्यत एवेति वाच्यम्। तस्याश्रयौपाधिकत्वात् अन्यथा जम्बीरजलादावाम्लादिरसोपलब्धेराम्लादिमत्वमपि स्यादिति चेन्न। हरीतक्यादिभक्षणस्य जलरसव्यंजकत्वात्। न च हरीतक्यामेव जलोष्मसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यम्। कल्पनागौरवात्। पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जले नाम्लादिकम्। जम्बीररसादौ त्वाश्रयौपाधिकी तथा प्रतीतिः॥**

(सुबोधिनी)

तिक्तावृत्ति मधुरवद्वृत्ति द्रव्यत्वसाक्षाद्व्याप्य जातिमत्वमिति द्वितीयलक्षणस्यासंभवमाशंक्य निराकरोति। अथ जल इत्यादिना स्पष्टोऽर्थः। मूले रसस्पर्शौ जले मधुरशीतलौ इत्यनेन शीतस्पर्शवत्वमपि जलस्य लक्षणमित्यपि बोध्यम्॥ तत्रापि उत्पन्नविनष्टजलेऽव्याप्तिवारणाय शीतस्पर्शवद्वृत्ति द्रव्यत्वव्याप्य जातिमत्वं विवक्षणीयम्॥ शेषं पूर्ववत्॥

[मुक्तावली]

**एवं जन्यशीतस्पर्शजनकतावच्छेदकं जन्यजलसंयोगजनकतावच्छेदकं जलत्वं बोध्यम्॥**

(सुबोधिनी)

जलत्वजातावनुमानांतरमपि दर्शयति ... एवमिति । जन्यशीतस्पर्शजनकता किंचिद्धर्मावच्छिन्ना कारणतात्वात् दण्डनिष्ठघटकारणतावत् । तादृशधर्मस्य जातित्वे लाघवमिति लाघवज्ञानसहकारेण जन्यजलत्वजातिः सिद्ध्यति । तादृशजन्यजलत्वावच्छिन्न समवायिकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् इत्यनुमानेन तादृशधर्मस्य जातित्वे लाघवमिति लाघवज्ञानसहकारेण जलत्वजातिसिद्धिर्बोध्या

[मुक्तावली]

घृष्टचन्दनादौतु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशिततरसलिलस्यैव। तेजः संयोगाज्जले उष्णप्रतीतिरौपाधिकी स्फुटैव तत्र पाकासंभवात् ॥

(सुबोधिनी)

शीतस्पर्शवत्वस्य घृष्टचंदनादौ सत्वेनतृतीयलक्षणस्यातिव्याप्तिरित्याशङ्कां निराकरोति .... घृष्टचन्दनादौत्विति ॥ स्वाश्रयसंयुक्तत्वसंबन्धेन घृष्टचंदनांतर्वर्तिशीततरसलिलस्पर्शस्यैव घृष्टचंदने प्रत्यक्षं सम्भवति नतु चंदने शीतस्पर्श इति नातिप्रसङ्ग इतिभावः । उष्णजले शीतस्पर्शाभावादव्याप्तिरित्यत आह — तेजः संयोगादिति ॥ जलमुष्णमिति प्रतीतिः स्वाश्रयसंयुक्तत्व संबंधेन तेजोगतोष्ण स्पर्शमादायोपपद्यते नतु उष्णस्पर्शः जलनिष्ठः तेजः संयोगसत्वे तदुपलब्धेः तेजः संयोगाभावे तदनुपलब्धेरित्याशयः ॥ ननु जले पाकमाहिम्ना उष्णस्पर्शो जायतामित्यत आह — तत्र पाकासंभवादिति ॥ रूपादिचतुष्टयस्य पृथिव्यामेव पाकजन्यत्वेन जलादौ पाकानभ्युपगमेन जले उष्णस्पर्शासम्भवेन



अव्याप्तिशंका दूरतो निरस्तेतिभावः ॥

[मुक्तावली]

स्नेहस्तत्रेति । घृतादावपि तदन्तर्वर्ति जलस्यैव स्नेहः जलस्य स्नेहसमवायिकारणत्वात् । तेन जलएव स्नेहइति मंतव्यम् ॥

(सुबोधिनी)

— स्नेह स्तत्रेति ॥ स्नेहवत्वं जलस्य लक्षणमिति पर्यवासितम् ॥ ननु स्नेहवत्वस्योत्पन्नविनष्टजले ऽ सत्वादुत्पन्नविनष्टजले ऽव्याप्तिरिति चेन्न । स्नेहसमानाधिकरण द्रव्यत्वव्याप्यजातिमत्वस्य विवक्षितत्वात् । घृतादावपि स्नेहस्य सत्वेनातिव्याप्तिरित्याशंकां परिहरति । ...घृतादावपीति ॥ तथा च घृते यः स्नेहो दृश्यते स घृतान्तर्वर्तिजलस्यैव न तु घृतनिष्ठ इति नातिप्रसङ्ग इत्याशयः ॥

(मुक्तावली)

द्रवत्वमिति । सांसिद्धिकद्रवत्वं जातिविशेषः प्रत्यक्षसिद्धः तदवच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः । तैलादावपि जलस्यैव द्रवत्वं स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ।

(सुबोधिनी)

.... द्रवत्वमितीति । सांसिद्धिकद्रवत्ववत्वं जलस्य लक्षणमित्याशयः ननु सांसिद्धिकद्रवत्वस्योत्पन्नविनष्टजले ऽ सत्वादव्याप्तिरिति चेन्न ॥ सांसिद्धिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्य जातिमत्वस्य विवक्षितत्वात् तादृशजलत्वजातिमादाय सर्वत्रलक्षणसमन्वयात् । किं तावत्सांसिद्धिकद्रवत्वत्व मित्यत आह । ... सांसिद्धिकद्रवत्वत्वमिति । जलत्वजातौ प्रमाणमप्युपन्यस्यति ....तदवच्छिन्नेति ॥ सांसिद्धिकद्रवत्वत्वावच्छिन्न समवायिकारणतावच्छेदकं तदेव जलत्वमेव; तथा च जन्यसांसिद्धिकद्रवत्वत्वावच्छिन्न समवायिकारणतावच्छेदकतया

जन्यजलत्वं, तदवच्छिन्न जनकतावच्छेदकतया जलत्वजातिः सिद्ध्यतीत्याशयः। सांसिद्धिकद्रवत्वस्य तैलादावपि सत्त्वेन पृथिवीरूप तैलेऽतिव्याप्तिरित्याशङ्कायापरिहारायाह। —तैलादावपीति। तथा च तैलादौ दृश्यमानं यत्सांसिद्धिकद्रवत्वंतत्तु तदन्तर्वर्तिजलस्यैव नतु तैलनिष्ठमिति नातिप्रसङ्ग इति भावः॥ तैलादौ जलस्य सत्वे कथं तैले दाहानुकूल्यमित्यत आह।....स्नेहप्रकर्षेणेति। वक्ष्यतीति। स्नेहनिरुपणप्रस्ताव इति शेषः ॥३९॥

(मुक्तावली)

का ॥ नित्यतादि प्रथमवत्किन्तु देहमयोनिजम् ।
इन्द्रियं रसनं सिन्धुर्हिमादिर्विषयो मतः ॥ ४० ॥

मु॥ प्रथमवदिति! पृथिव्या इवेत्यर्थः। तथा हि जलं द्विविधं नित्यमनित्यं च। परमाणुरूपं नित्यं द्व्यणुकादि सर्वमनित्यमवयवसमवेतं च। अनित्यमपि त्रिविधं शरीरेन्द्रियविषयभेदात्। पृथिवीतो यो विशेषस्तमाह....किन्त्विति। देहमयोनिजं अयोनिजमेवेत्यर्थः॥ जलीयं शरीरमयोनिजं वरुणलोके प्रसिद्धं ॥

सुबोधिनी

— प्रथमवदीतीति। प्रथमशब्दार्थमुपपादयति .... पृथिव्या इति शेषः सुगमः ॥

मुक्तावली

इन्द्रियमिति ॥ जलीयमित्यर्थः॥ तथा हि रसनं जलीयं गंधाद्यव्यंजकत्वे सति रसव्यंजकत्वात् सक्तुरसाभिव्यंजकोदकवत् रसनेन्द्रियसन्निकर्षे व्याभिचारवारणाय द्रव्यत्वं देयम्॥

(सुबोधिनी)

.... इन्द्रियमितीति। रसनेन्द्रियस्य जलीयत्वेऽनुमानंदर्शयति ....तथाहीति। रसनेन्द्रियं, जलीयं, गन्धाद्यव्यंजकत्वे सति रसव्यंजकत्वात् सक्तुरसाभिव्यंजकोदकवदिति दृष्टान्तः॥ जलीयत्वव्याप्य गन्धाद्यव्यंजकत्वविशिष्टरसव्यंजकत्ववद्रसनमिति परामर्शात् रसनेन्द्रियं जलीयमित्यनुमितिर्जायत इत्यनुमानप्रमाणेन रसनेन्द्रियस्य जलीयत्व सिद्धिरित्याशयः॥ जलीयत्वाभाववति गुडादौ रसाभिव्यंजकत्वसत्वा व्याभिचारः स्यादिति गन्धाद्यव्यंजकत्वनिवेशः॥ जलीयत्वाभाववति कालादौ गन्धाद्यव्यंजकत्वसत्वाव्यभिचारइति रसाभिव्यंजकत्वनिवेशः॥ जलीयत्वाभाववति रसनेन्द्रियसन्निकर्षे व्यभिचारोपन्यासपुरस्सरं विशेषणान्तरं हेतौ प्रक्षिपति .... रसनेन्द्रिय सान्निकर्षइति॥ द्रव्यत्वं देयमिति॥ तथा च रसनेन्द्रियसन्निकर्षे द्रव्यत्वाभावान्न व्यभिचारइत्याशयः॥

[मुक्तावली]

विषयं दर्शयति॥ सिन्धुरिति॥ सिंधुः समुद्रः, हिमं तुषारः आदिपदात्सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः॥

न च हिमकरकयोः काठिनत्वात्पार्थिवत्वमिति वाच्यम॥ ऊष्मणाविलीनस्य तस्य जलत्वस्य प्रत्यक्षासिद्धत्वात् यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानोपादेयत्वसिद्धेः॥ अदृष्टविशेषेण द्रवत्वप्रतिरोधात् करकायाः काठिन्यप्रत्ययस्य भ्रान्तित्वात्॥

(सुबोधिनी)

... विषयं दर्शयतीति ॥ सिन्धुशब्दार्थमुपपादयति। ....सिन्धुरिति। हिमशब्दार्थमुपपादयति —हिमामिति। आदिपदार्थमुपपादयति।...आदिपदादिति। शङ्कते।....न चेति। वाच्यमिति परेणान्वयः। यत्र यत्र काठिन्यं तत्र पृथिवीत्वमिति व्याप्त्या करकादीनां काठिन्यवत्वेन पृथिवीत्वमेव न जलत्वमित्याशयः॥ समा

धते ॥ -- ऊष्मणेति । ऊष्मणाविलीनस्य तस्य करकस्य जलत्व-
मनुभूयत इति करके जलत्वमस्त्येवेति भावः । ऊष्मणाविलीने
जलत्वमास्तां करके तु पृथिवीत्वमेवेत्यत आह । — यद्द्रव्यमिति ।
यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति जलस्य करक
ध्वंसजन्यत्वेन करकोपादानोपादेयत्वं संभवतीति उपादेयस्य जलत्वे
उपादानस्यापि जलत्वमभ्युपगन्तव्यमिति करके जलत्वसिद्धिः ।
ननु करकायाः जलत्वे (जलस्य) सांसिद्धिकद्रवत्ववत्वमपि स्यादित्यत
आह ॥ .... अदृष्टविशेषणेति । दुरदृष्टेनेत्यर्थः । द्रवत्वप्रतिरोधा
दिति सांसिद्धिकद्रवत्वप्रतिबन्धादित्यर्थः ॥ ननु करकायाःजलत्वे मृदु
त्वमेवानुभूयतां कथं काठिन्यमनुभूयत इत्यत आह ···· करकाया
इति ॥ तथा च भ्रान्तिप्रतीति ने विषयसाधिकेति भावः ॥ ४० ॥

इति जलनिरूपणम्

[मुक्तावली]

**का ॥ उष्णस्पर्शः तेजसस्तु स्याद्रूपं शुक्लभास्वरम् ।**
**नैमित्तिकं द्रवत्वंतु नित्यतादि च पूर्ववत् ॥ ४१ ॥**

मु ॥ तेजो निरूपयति ॥ उष्ण इति ॥ उष्णत्वं स्पर्शनिष्ठो जा
तिविशेषः प्रत्यक्षसिद्धः ॥ इत्थं च जन्योष्णस्पर्शकारणतावच्छेदकं ते
जस्त्वं जातिविशेषः ॥ तस्य परमाणुवृत्तित्वं तु जलस्येवानुसंधेयम् ॥
नचोष्णस्पर्शवत्वं चन्द्रकिरणादावव्याप्तमिति वाच्यम् ॥ तत्राप्युष्ण
स्य सत्वात् ॥ किन्तु तदन्तः पाति जलस्पर्शेनाभिभवादग्रहः ॥

(सुबोधिनी)

क्रमप्राप्तं तेजो निरूपयितुं मूलमवतारयति ॥ ... तेजो निरूपय
तीति ॥ उष्णत्वं जातिविशेषो वा अन्यद्वेति शङ्कायामाह । — उ
ष्णत्वमिति । इत्थं चेति ॥ उष्णत्वस्य जातिविशेषरूपत्वे सतीत्य



र्थः ॥ जन्योष्णस्पर्शे समवायिकारणतावच्छेदकतया जन्यतेजस्त्व-
स्य सिद्धत्वेऽपि कथं तेजस्त्वसिद्धिरित्यत आह ॥ ....तस्येति ।
जलस्येवेति । यथा जन्यजलत्वावच्छिन्न जनकतावच्छेदकतया जल
त्वजातिः सिद्धा एवमेव जन्यतेजस्त्वावच्छिन्न जनकतावच्छेदकतया
तेजस्त्वसिद्धिर्बोध्येत्यर्थः ॥ अनुमानप्रयोगस्तु ;जन्योष्णस्पर्शसमवायि
कारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् दण्डनिष्ठघटकारण
तावत् तादृशधर्मस्य जातित्वे एकत्वे लाघवमिति लाघवज्ञानाज्जन्य
तेजस्त्वं सिद्ध्यति तादृशजन्यतेजस्त्वावच्छिन्न समवायिकारणता किं
चिद्धर्मावच्छिन्ना कारणतात्वात् , तादृशधर्मस्य जातित्वे एकत्वे
लाघवमिति लाघवज्ञानसहकारेण तेजस्त्वजातिः सिद्ध्यतीत्याशयः ।
एतावता तेजसस्तूष्णस्पर्शवत्वं लक्षणमिति सिद्धं तादृशलक्षण
स्याव्याप्तिमाशङ्कते .... न चेति । वाच्यमिति परेणान्वयः ॥ चन्द्र
स्य तेजोविशेषरूपत्वेन तत्संबन्धिकिरणानामपि तेजोरूपतया लक्ष्य
त्वेन तत्रोष्णस्पर्शाभावादव्याप्तिरित्याशयः । अव्याप्तिं परिहरति ।
.... तत्रापीति । चन्द्रकिरणेष्वपीत्यर्थः । उष्णस्य उष्णस्पर्शस्येत्यर्थः ।
ननु चन्द्रकिरणेषूष्णस्पर्शसत्वे कथं तदनुपलब्धिरित्यत आह ।
.... किन्त्विति । चन्द्रकिरणान्तः पातिजलगतशीतस्पर्शेनोष्णस्प
र्शस्याभिभूतत्वेनोष्णस्पर्शस्याग्रहः न तूष्णस्पर्शाभावादित्याशयः ॥
पूर्ववदत्रापि उष्णस्पर्शसमानाधिकरण द्रव्यत्वव्याप्यजातिमत्वं बो
ध्यम्, तेनोत्पन्नविनष्टतेजसि नाव्याप्तिः ॥

[मुक्तावली]

**एवं रत्नकिरणादौ च पार्थिवस्पर्शेनाभिभवात् चक्षुरादौ चानु**
**द्भूतत्वादग्रहः ॥**

(सुबोधिनी)

....एवमिति। यथा चन्द्रकिरणादौ जलस्पर्शेनाभिभवादुष्णस्पर्शस्याग्रहः एवमेव रत्नानां तेजोरूपत्वेऽपि तत्किरणादौ पार्थिवस्पर्शेनाभिभवादुष्णस्पर्शस्याग्रह इत्यर्थः। ननु चक्षुरिन्द्रियस्य तेजोरूपत्वे तद्गतोष्णस्पर्शस्य प्रत्यक्षं स्यादित्यत आह। —चक्षुरादाविति। चक्षुरादिगतोष्णस्पर्शस्यानुद्भूतत्वेन उद्भूतस्पर्शस्यैव प्रत्यक्षप्रयोजकतया न चक्षुरादिगतोष्णस्पर्शप्रत्यक्षं संभवतीत्याशयः॥

[मुक्तावली]

रूपमित्यादि॥ वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवात् शुक्लरूपाग्रहः॥ अथ तद्रूपाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेन्न। अन्यदीयरूपेणैव धर्मिणो ग्रहसंभवात्॥ शङ्खस्यैव पित्तपीतिम्ना॥ वह्नेस्तु शुक्लरूपं नाभिभूतं किंतु वह्नीयं [redacted]शुक्लत्वमाभिभूतमित्यन्ये॥

(सुबोधिनी)

—रूपमित्यादीति। भास्वरशुक्लरूपवत्त्वं तेजसो लक्षणमिति सिद्धम्। तादृशभास्वरशुक्लरूपवत्त्वस्य वैश्वानरे मरकतकिरणादावसत्त्वादव्याप्तिरित्याशङ्कां परिहरति। ...वैश्वानर इत्यादिना। वैश्वानरे मरकतकिरणादौ भास्वरशुक्लरूपस्य सत्वेऽपि तत्र पार्थिवभागस्याधिकतया विद्यमानत्वेन पार्थिवरूपेणाभिभूततया भास्वरशुक्लरूपस्याग्रह इति भास्वररूपसत्वे विवादाभावेन नाव्याप्तिरित्याशयः। शङ्कते। —अथेति। ननु द्रव्यचाक्षुषप्रत्यक्षं प्रति तद्गतरूपविषयकप्रत्यक्षात्मकप्रमायाः कारणतया वैश्वानरे मरकतकिरणादौ च विद्यमानभास्वरशुक्लरूपविषयकप्रत्यक्षात्मकप्रमाया असत्वे वैश्वानरमरकतविषयकप्रत्यक्षं न स्यादित्याशयः। समाधत्ते। —अन्यदीय



रूपेणैवेति। द्रव्यचाक्षुषं प्रति द्रव्यविशेष्यक रूपप्रकारकप्रत्यक्षात्मकप्रमात्वेन न कारणत्वम्। तादृशप्रमात्वापेक्षया भ्रमप्रमासाधारणप्रत्यक्षत्वात्मकव्यापकधर्मपुरःसरेण कारणत्वसंभवे. व्याप्यधर्मपुरःसरेण कारणत्वस्यान्यथासिद्धत्वेन तादृशधर्मपुरःसरेण कारणत्वसंभवात् पृथिवीरूपप्रकारकवैश्वानरादिविशेष्यकप्रत्यक्षस्य कारणस्य सत्वेन वैश्वानरादिप्रत्यक्षानुपपत्त्यभावादित्याशयः। अन्यदीयरूपेणान्यप्रत्यक्षसंभवे दृष्टान्तमुपपादयति ... शङ्खस्येवेति। मतान्तरमुपपादयति। ....वह्नेस्त्विति। तथा च विषयतासंबन्धेन जायमानद्रव्यचाक्षुषं प्रत्युद्भूतरूपस्य कारणतया तत्रोद्भूतरूपसत्वेनान वैश्वानरादिप्रत्यक्षेऽनुपपत्तिः, अपितु तद्गतशुक्लत्वस्याभिभूतत्वेन न तस्य प्रत्यक्षत्वमित्याशयः। ननु भास्वरशुक्लरूपस्य पृथिव्यामपि सत्वेन पृथिव्यामतिव्याप्तिः, उत्पन्नविनष्टतेजस्यविद्यमानत्वेनाव्याप्तिश्चेति चेन्न। पृथिव्यवृत्तिभास्वरशुक्लरूपवद्वृत्तिजातिमत्वस्य विवक्षितत्वात्॥

[मुक्तावली]

नैमित्तिकमिति। सुवर्णादिरूपे तेजसि तत्सत्वात्,

नच नैमित्तिकद्रवत्वं दहनादावव्याप्तं घृतादावतिव्याप्तं चेति वाच्यम्। पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातिमत्वस्य विवक्षितत्वात्। पूर्ववदिति जलस्येवेत्यर्थः। तथा हि तत् द्विविधं नित्यमनित्यंच नित्यं परमाणुरूपं तदन्यमनित्यमवयविच। तच्च त्रिधा शरीरेन्द्रियविषयभेदात् शरीरमयोनिजमेव तच्च सूर्यलोके प्रसिद्धम्॥ ४१॥

(सुबोधिनी)

....नैमित्तिकमितीति॥ नैमित्तिकद्रवत्वं तेजसि कुत्र वर्त

त इत्याह — सुवर्णादिरूप इति । सुवर्णस्य तेजोरूपत्वेन तेजोरू
पसुवर्णे नैमित्तिकद्रवत्वमस्तीत्यर्थः । तेजसो नैमित्तिकद्रवत्ववत्त्वस्य
लक्षणत्वे ऽव्याप्तिमाशङ्कते ।नचेति वाच्यमिति परेणान्वयः । नैमि
त्तिकद्रवत्ववत्त्वस्य वह्नावसत्वेन वह्नावव्याप्तिः, नैमित्तिकद्रवत्ववत्वस्य
घृतादौसत्वेन पृथिवीरूपे घृतादावतिव्याप्तिरित्यर्थः । अव्याप्त्यतिव्या
प्ती निरसकरोति — पृथिव्य वृत्तीति । पृथिव्यवृत्तिः नैमित्तिकद्रवत्वव
द्वृत्तिः द्रव्यत्वसाक्षाद्व्याप्या या जातिः तद्दशजातिमत्त्वं तदर्थ.
तथा च तादृशतेजस्त्वजातिमत्त्वस्य वह्नौ विद्यमानत्वान्नाव्याप्तिः, ता
दृशवह्निमत्वस्य घृतादावसत्वान्नातिव्याप्तिरित्याशयः । जातौ पृथिव्यवृ
त्तित्वंघृतादावव्याप्तिवारकतया निविष्टम् । पृथिव्यवृत्तिजलत्वजातिमादाय
जले ऽतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववद्वृत्तीति । जलतेजोन्यतरत्व
मादाय जले ऽतिव्याप्तिवारणाय जातीति । द्रव्यत्व साक्षाद्व्याप्येत्य
सार्थक्यं मृग्यम् .... पूर्ववदितीति । एतदारभ्य सूर्यलोके प्रसिद्ध
मित्यन्तं स्पष्टोर्थः ॥ ४१ ॥

[मुक्तावली]

का ॥ इन्द्रियं नयनं वह्निः स्वर्णादि विषयोमतः ।

मु ॥ अत्र यो विशेषस्तमाह । इन्द्रियमिति ।

ननु चक्षुषस्तैजसत्वे किंमानमिति चेत् चक्षुस्तैजसं परकीय
स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् । प्रदीपस्य
स्वीयस्पर्शव्यंजकत्वादत्र दृष्टान्ते ऽव्याप्तिवारणाय प्रथमं परकीये
ति । घटादेः स्वीयरूपव्यंजकत्व व्यभिचारवारणाय द्वितीयं परकीये
ति । अथवा प्रभायाः दृष्टान्तत्वसम्भवादाद्यं परकीयेति नदेयं ।
चक्षुः सन्निकर्षे व्यभिचारवारणाय द्रव्यत्वंदेयम् ॥



(सुबोधिनी)

तेजसि विशेषमुपपादयति — अत्रेति । इन्द्रियमितीति । चक्षु
रिन्द्रियस्य तेजोरूपत्वे प्रमाणं दर्शयितुं शङ्कते —नन्विति ।
चक्षुषस्तेजोरूपत्वे ऽनुमानं प्रमाणयति ।....चक्षुस्तैजसमिति । चक्षु
स्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् ,
तैजसत्वव्याप्यपरकीय स्पर्शाद्यव्यञ्जकत्वविशिष्ट परकीयरूपव्यञ्जक
त्ववच्चक्षुरिति परामर्शा चक्षुः तैजस मित्यनुमिति जायते
अत्र दृष्टान्त मुपपादयति ... प्रदीपवदिति । प्रदीपस्तु
परकीयस्पर्शाद्यव्यञ्जकः परकीयरूपव्यञ्जकश्च भवतीति योग्यो दृ
ष्टान्तः । परकीयस्पर्शाद्यव्यञ्जकत्वे सतीत्यत्र परकीयेति पदसार्थ-
क्यमुपपादयति — प्रदीपस्येति । प्रदीपे स्वीयस्पर्शव्यंजकत्वस्यै
व सत्वेन स्पर्शाद्यव्यंजकत्वाभावात्तद्घटितहेतोरसत्वात् , हेतुर्भागा
सिद्धोऽतः परकीयेति विशेषणं, तथा च प्रदीपस्य स्वीयस्पर्शव्यं
जकत्वे ऽपि परकीयस्पर्शाद्यव्यञ्जकत्वान्न भागासिद्धिरित्याशयः ।
अव्याप्तिवारणायेत्यत्र अव्याप्तिशब्दार्थः भागासिद्धिः । परकीयरूप
व्यञ्जकत्वादित्यत्र परकीयपदस्य सार्थक्य मुपपादयति । —घटादेरिति ।
तैजसत्वाभाववति घटे परकीयस्पर्शाद्यव्यञ्जकत्वस्य स्वीयरूपव्यञ्जक
त्वस्य च सत्वेन हेतोर्व्यभिचारः ; अतः परकीयेति । तथा च
घटादीनां स्वीयरूपव्यञ्जकत्वे ऽपि परकीयरूपव्यञ्जकत्वाभावान्न व्य
भिचार इत्याशयः । लाघवमनुसृत्याह । — अथवेति । प्रभाया इति ।
प्रदीपस्य न दृष्टान्तत्वमपि तु प्रभायाः तथा च प्रभायाः स्वस्य परकी
यस्य वा स्पर्शाद्यव्यञ्जकत्वान्न भागासिद्धिरतः प्रथमं परकीयेति वि
शेषणं न निवेशनीयम् । तैजसत्वाभाववति चक्षुःसंयोगे स्पर्शाद्यव्यञ्ज
कत्वे सति परकीयरूपव्यंजकत्वसत्वाद्व्यभिचारः अतो हेतौ द्रव्यत्वे

सतीति निवेशनीयं तथा च संयोगे द्रव्यत्वाभावान्न व्यभिचार इ-
त्याशयः ॥ एवञ्च किं फलितं; चक्षुरिन्द्रियं, तैजसं द्रव्यत्वे सति
स्पर्शाद्यव्यंजकत्वे सति परकीयरूपव्यंजकत्वात्, इत्यनुमानेन चक्षु
रिन्द्रियस्य तैजसत्वसिद्धिः ॥

[मुक्तावली]

विषयं दर्शयति । ...वह्नीति । ननु सुवर्णस्य तैजसत्वे किं मा
नमिति चेन्न ॥ सुवर्णं तैजसं असति प्रतिबन्धकेऽत्यन्तानलसं
योगे सत्यप्यनुच्छिद्यमानद्रवत्वात् यन्नैवं तन्नैवं यथा पृथिवीति । न चा
प्रयोजक ॥ पृथिवीद्रवत्वस्य जलद्रवत्वस्य चात्यन्ताग्निसंयोगनाश्
यत्वात् ॥ ननु पीतिमगुरुत्वाश्रयस्यापि तदानीं द्रुतत्वात्तेन व्यभि-
चार इति चेन्न ॥ जलमध्यस्थमषीक्षोदवत्तस्यादृतत्वात् ॥ अपरे तु
पीतिमाश्रयस्यात्यन्ताग्निसंयोगेऽपि पूर्वरूपापरावृत्तिदर्शनात्तत्प्रतिब-
न्धकं विजातीयद्रवद्रव्यं कल्प्यते ॥ तथा हि अत्यन्ताग्निसंयोगी पी-
तिमगुरुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्रव्यान्तरसंयुक्तः अत्य
न्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात् जलम
ध्यस्थपीतपटवत् ॥ तस्यच पृथिवीजलभिन्नस्यतैजसत्वनियमात् ॥

(सुबोधिनी)

विषयं दर्शयतीति । .... शङ्कते । —नन्विति । सुवर्णस्य तै
जसत्वे प्रमाणं नास्तीत्यर्थः । इदमुपलक्षणं, सुवर्णमतैजसं गुरु-
त्वात् हरिद्रावदित्यनुमानेनातैजसत्वं, सुवर्णं पार्थिवं पीतत्वादित्यनु-
मानेन पार्थिवत्वं च सुवर्णस्य सिद्ध्यतीति बोध्यम् । सुवर्णस्य
तैजसत्वं साधयति । ....सुवर्णं तैजसमिति । सुवर्णस्य पक्षत्वं,
तैजसत्वस्य साध्यत्वं, असति प्रतिबन्धकेऽत्यन्तानलसंयोगे सत्यनु
च्छिद्यमानद्रवत्वाधिकरणत्वादिति हेतुः । ननु किमत्र पक्षतावच्छे



दकं, न तावत्सुवर्णपदवाच्यत्वं सुवर्णशब्दस्य पीतद्रव्येऽपि धर्म-
शास्त्रेषु प्रयोगदर्शनेनसुवर्णापदवाच्ये पीतद्रव्ये तैजसत्वस्यासत्वेन
बाधप्रसङ्गात् । नापि पीतद्रव्यत्वं निरुक्तरीत्या बाधापत्तेः । तैज
ससुवर्णत्वस्य न पक्षतावच्छेदकत्वं ;अनुमानात्प्राक् सुवर्णे तैजसत्वा
सिद्ध्या आश्रयासिद्धिप्रसङ्गात । किं तु अत्यन्तानलसंयोगे सत्यनु
च्छिद्यमानद्रवत्वाधिकरणत्वस्य पक्षतावच्छेदकत्वं बोध्यम् ।

ननु पक्षतावच्छेदकहेतोरैक्येन सिद्धसाधनरूपदोष इति चेन्न ।पक्ष
तावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतास्थले सामानाधिकरण्येन साध्य
सिद्धेरनुमित्यप्रतिबन्धकतया प्रकृते अत्यन्तानलसंयोगे सत्यनुच्छि
द्यमानद्रवत्वाधिकरणत्वावच्छेदेनैव तैजसत्वस्य साध्यत्वेन तत्सामा
नाधिकरण्येन साध्यसिद्धेरवच्छेदकावच्छेदेन तैजसत्वानुमित्यप्रतिब
न्धकत्वात् ॥ एवं चात्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणं
तैजसं असति प्रतिबन्धकेऽत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वा
धिकरणत्वादित्यनुमानेन सुवर्णस्य तैजसत्वंसिद्ध्यतीत्याशयः ॥ तैज
सत्वाभाववति जलमध्यस्थघृतादौ अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्र
वत्वाधिकरणत्वस्य व्यभिचार इति तद्वारणायासतिप्रतिबन्धके सती-
ति ॥ तथा च जलमध्यस्थघृतादौ द्रवत्वनाशप्रतिबन्धकजलस्यैव स
त्वेन असति प्रतिबन्धके इत्यादिहेतोरभावान्न व्यभिचारः ॥ तैज
सत्वाभाववति पात्रस्थघृतादौ असति प्रतिबन्धकेनुच्छिद्यमानद्रवत्वा
धिकरणत्वस्य सत्वेन व्यभिचार इति अत्यन्तानलसंयोगे सतीति ॥
तथा च असति प्रतिबन्धके पात्रस्थघृतादावत्यन्तानलसंयोगे सत्यु,
च्छिद्यमानद्रवत्वाधिकरणत्वस्यैव सत्वेन न व्यभिचारः । ननु अनु
च्छिद्यमानद्रवत्वादित्यस्य उच्छिद्यमानद्रवत्वानधिकरणत्वादित्यर्थकतया
तैजसत्वाभाववति गगनेऽसति प्रतिबन्धके अत्यन्तानलसंयोगे सत्युच्छि

धमानद्रवत्वानधिकरणत्वस्य सत्वेन हेतुरयं व्यभिचारीति चेन्न ॥ अनुच्छिद्यमानद्रवत्वादित्यस्यानुच्छिद्यमानद्रवत्वाधिकरणत्वादित्यर्थकत्वेन गगनस्य कस्यापि द्रवत्वस्यानधिकरणत्वाद्व्यभिचाराप्रसक्तेः शंकते .... नचेति । हेतुरस्तु साध्यं मास्त्विति व्यभिचारशंका निवर्तकानुकूलतर्को नास्तीत्यर्थः । अनुकूलतर्कमेवोपपादयति —पृथिवीद्रवत्वस्येति । अत्यंताग्निसंयोगेति । असति प्रतिबंधके सतीतिपूरणीयम् । तथा चासति प्रतिबन्धकेऽत्यन्ताग्निसंयोगस्य पृथिवीद्रवत्वनाशं जन्यजलद्रवत्वनाशं प्रति च कारणत्वेन सुवर्णस्यातैजसत्वेपृथिवीरूपत्वे जन्यजलरूपत्वे वा असति प्रतिबन्धकेऽत्यन्ताग्निसंयोगे सति सुवर्णगतद्रवत्वनाशोऽपि स्यादतः असति प्रतिबन्धकेऽत्यन्तानलसंयोगे सत्यपि सुवर्णगतद्रवत्वनाशादर्शनेन सुवर्णस्य पृथिवीत्वं नवा जलत्वं द्रवत्वाधिकरणत्वेन न वाय्वादिरूपत्वमिति निरुक्तहेतुः सुवर्णस्य तैजसत्वसाधको भवत्येवेत्याशयः ।

इदमुपलक्षणं, सुवर्णस्यातैजसत्वे अग्नेरपत्यम् प्रथमंहिरण्यं इत्याद्यागमानुपपत्तिश्च ॥ असति प्रतिबन्धक इत्यदिहेतोः स्वरूपासिद्धिं माशङ्कते । ... नन्विति । व्यभिचार इति । स्वरूपासिद्धीरित्यर्थः । यदा सूवर्णं दृतं तदैव तद्गतपीतिमगुरुत्वाश्रयपदार्थो ऽपिदृत इति तादृशपीतिमगुरुत्वाश्रयपदार्थ एव अत्यन्तानलसंयोगे सत्यपि सुवर्णद्रवत्वनाशं प्रति प्रतिबन्धकःअत. सुवर्णे प्रतिबन्धकाभावविशिष्टात्यन्तानलसंयोगविशिष्टानुच्छिद्यमानद्रवत्वाधिकरणत्वाभावात्स्वरूपासिद्धिरिति भावः । स्वरूपासिद्धिं परिहारति । .... जलमध्यस्थमषीक्षोदवदिति । क्षोदो नाम चूर्णं इत्यर्थः । यथा जलमध्यस्थमषिचूर्णो ऽद्रुतः एवं सुवर्णमध्यस्थपीतिमद्द्रव्यं न द्रुतं तथा च द्रव्यान्तरद्रवत्वनाशं प्रति द्रवत्वशून्यद्रव्यान्तरस्याप्रतिबंधकतया पीतिमद्द्रव्यस्याद्रुतत्वेन द्रवत्वशू-



न्यतया तस्य सुवर्णद्रवत्वनाशं प्रत्यप्रतिबंधकत्वेन प्रतिबंधकाभावविशिष्टात्यंतानलसंयोगविशिष्टानुच्छिद्यमानद्रवत्वाधिकरणत्वं सुवर्णे वर्तत इति न स्वरूपासिद्धिरतो निरुक्तानुमानेन सुवर्णस्य तैजसत्वं सिद्धमित्याशयः ।

मतान्तरमुपन्यस्यति —अपरेत्विति । यत्र यत्र पीतरूपवत्वं तत्र पृथिवीत्वमिति व्याप्त्या पीतिमाश्रयस्य पृथिवीत्वसिद्धौ पृथिवीत्वाश्रयनिष्ठपूर्वरूपनाशं प्रत्यत्यन्ताग्निसंयोगस्य कारणत्वेन अत्यन्ताग्निसंयोगस्य सत्वेऽपि पीतिमद्द्रव्यगतपूर्वरूपापरावृत्त्यदर्शनेन तत्प्रातिबन्धकं द्रवद्द्रव्यान्तरं तत्र वर्तत इत्यनुमेयमित्यर्थः । तादृशानुमानप्रकारमेवोपपादयति .... तथाहीति । अत्यन्ताग्निसंयोगी पीतिमगुरुत्वाश्रयः पक्षः, विजातीयरूप प्रतिबंधक द्रवद्द्रव्यांतर संयुक्तत्वं साध्यं, अत्यन्ताग्निसंयोगविशिष्टपूर्वरूपविजातीयरूपानधिकरणत्वादिति हेतुः, जलमध्यस्थपीतपटवदिति दृष्टान्तः । तथाच निरुक्तानुमानेन विजातीयरूपप्रतिबन्धकं यद्द्रवद्द्रव्यान्तर सिद्धं तदेव सुवर्णं तस्य न पृथिवीत्वं पृथिवीगतपीतरूपनाशं प्रति पृथिव्या अप्रतिबन्धकत्वात्, न जलत्वं सांसिद्धिकद्रवत्वानधिकरणत्वादिति पृथिवीजलभिन्नस्य रूपवतो द्रव्यस्य तेजस्त्वसिद्धिरित्याशयः ॥

इति तेजोनिरूपणम्

[ मुक्तावली ]

का ॥ अपाकजोऽनुष्णाशीत स्पर्शस्तु पवने मतः ॥ ४२ ॥

मु ॥ वायुं निरूपयति । अपाकज इति । अनुष्णशीतस्पर्शस्य पृथिव्यामपि सत्वादुक्तमपाकज इति । अपाकजस्पर्शस्य जलादावपि सत्वादुक्तमनुष्णाशीतेति । एतेन वायवीयो विजातीयस्पर्शो दर्शितः ॥ तज्जनकतावच्छेदकं वायुत्वमिति भावः ॥ ४२ ॥

(सुबोधिनी)

उद्देशानुसारेण वायु निरूपयतीत्याह .... वायुंनिरूपयतीति। अपाकजइतीति। अपाकजानुष्णाशीत स्पर्शवत्त्वं वायोर्लक्षणमित्याशयः। अपाकजपदस्य सार्थक्यमुपपादयति .... अनुष्णाशीतस्पर्शस्येति। तथाचा नुष्णाशीत स्पर्शवत्वस्य पृथिव्यामपि सत्वेन पृथिव्यामतिव्याप्ति रतस्तन्निवेशः। तथाच पृथिव्यां विद्यमानस्पर्शस्य पाकजत्वेनापाकजस्पर्शवत्वस्य पृथिव्यामसत्वेन नातिप्रसङ्ग इतिभावः। अनुष्णाशीतेत्यस्य प्रयोजनमुपपादयति — अपाकजस्पर्शस्येति। जलनिष्ठस्पर्शस्या पाकजत्वेन अपाकजस्पर्शवत्वस्य जलेपि सत्वा दतिव्याप्ति रतो नुष्णाशीतेति। तथाच जलनिष्ठस्पर्शस्य शीतस्पर्शत्वेन अनुष्णाशीतस्पर्शस्य जले ऽ सत्वान्नातिप्रसङ्ग इत्याशयः॥ अत्रापि उत्पन्नविनष्टवाया वव्याप्तिवारणाय अपाकजानुष्णाशीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्वं विवक्षणीयम्॥ वायुत्वजातौ प्रमाणं दर्शयति .... एतेनेति। तथाच विजातीयस्पर्शजनकतावच्छेदकतया जन्यवायुत्वसिद्धिः जन्यवायुजनकतावच्छेदकतया वायुत्वजातिः सिद्ध्यती त्याशयः॥ ४२

[मुक्तावली]

का॥ तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः।

मु॥ एष वायुः॥ स्पर्शादिलिङ्गकः॥ वायुर्हि स्पर्शशब्दधृतिकंपैरनुमीयते विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कंपनेन च वायोरनुमानात॥ यथा च वायुर्न प्रत्यक्षस्तथाग्रे वक्ष्यते॥

(सुबोधिनी)

स्पर्शादिलिङ्गक इति॥ स्पर्शादीत्यत्रादिशब्दार्थमुपपादयति॥



स्पर्शशब्देत्यादिना॥ स्पर्शलिङ्गकानुमानप्रकारस्तु, यो ऽयं रूपवद्द्रव्यासमवेतस्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत् इत्यनुमानेन पृथिव्यादिबाधेन वायुसिद्धिः॥ पृथिवीस्पर्शे क्वाचिदाश्रितत्वस्य सिद्धत्वेन सिद्धसाधनवारणाय रूपवद्द्रव्यासमवेतत्वस्य पक्षतावच्छेदककोटौ निवेशः॥ तथा च एतादृशानुमानात्प्राक् रूपवद्द्रव्यासमवेतस्पर्शस्यासिद्धत्वेन न सिद्धसाधनं॥

शब्दलिङ्गकानुमानप्रकारस्तु, असति रूपवद्द्रव्याभिघाते योंय पर्णादिषु शब्दसंतानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः, अविभज्यमानावयवद्रव्यसम्बंधिशब्दसंतानत्वात्, दन्डाभिहतभेरीशब्दसन्तानवदित्यनुमानेन वायुसिद्धिः। पृथिव्याद्यभिघातसंयोगजन्यशब्दे स्पर्शवद्वेगवत्पृथिव्यादि द्रव्यसंयोगजन्यत्वस्य सिद्धत्वेन सिद्धसाधनरूपदोषवारणाय असति रूपवद्द्रव्याभिघात इति। तथाच पृथिव्यादिसंयोगस्य रूपवद्द्रव्याभिघातत्वेन न सिद्धसाधनरूपदोषः स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यत्वाभाववति विभागजशब्दे अवयवद्रव्यसम्बंधिशब्दसंतानत्वस्य सत्वेन व्यभिचारः स्यादिति हेतावविभज्यमानेति विशेषणं। अत्रयद्यपि साध्यकुक्षौ स्पर्शवदिति विशेषणं व्यर्थं वेगवद्द्रव्यसंयोगस्यैव शब्दजनकत्वात्, तथापि उक्तानुमानेनैव वायोः स्पर्शस्यापि सिद्धिः सम्भविष्यतीति तदुपात्तम्। साध्यकुक्षौ व्यर्थविशेषणस्य प्रविष्टत्वे ऽपि क्षत्यभावात्॥

धृतिलिंगकानुमानप्रकारस्तु। नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिः, स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका, अस्मदाद्यनाधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवदिति। जलादिगततृणादौ स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुकत्वस्य सिद्धत्वेन सिद्धसाधनरूपदोष इति नभसीति, स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुकत्वाभाववति प्रयत्नवदात्मसंयोगहेतुकधृत्यादौ द्रव्य

धृतित्वस्य सत्वेन व्यभिचारवारणायास्मदादीति हेतौ विशेषणम्। कर्मलिङ्गकानुमानप्रकारस्तु, रूपवद्द्रव्याभिघातमन्तरेण तृणादिष्ठं यत्कर्म तत् स्पर्शवद्वेगवद्द्रव्याभिघातसंयोगजन्यं, विजातीयकर्मत्वात्, नदीपूराहतकाशादिकर्मवत् इत्यनुमानेन वायुः सिध्यतीत्याशयः। वायोः प्रत्यक्षत्वसंभवे किमित्यनुमानेनेत्यत आह। -- यथा चेति अग्रे वक्ष्यत इति आत्मनिरूपणावसर इत्यर्थः ॥

[मुक्तावली]

**का ॥ पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥४२॥**

**मु ॥ पूर्ववदिति ॥** वायुर्द्विविधो नित्योऽनित्यश्च परमाणुरूपो नित्यस्तदन्योऽनित्योऽवयवसमवेतश्च॥ सोऽपि त्रिविधः शरीरेन्द्रियविषयभेदात् ॥ तत्र शरीरमयोनिजं पिशाचादीनां परन्तु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टंभादुपभोगक्षमत्वे जलादीनां प्राधान्याज्जलीयत्वादिकमिति ॥

(सुबोधिनी)

...पूर्ववदितीति॥ वायुर्द्विविध इत्यादि स्पष्टोर्थः ॥

[मुक्तावली]

देहव्यापीति। शरीरव्यापकंस्पर्शग्राहकमिन्द्रियं त्वक् तच्च वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यंजकत्वात् अङ्गसङ्गिसलिल शैत्याभिव्यंजकव्यजनपवनवत् ॥ ४२॥

(सुबोधिनी)

त्वगिन्द्रियलक्षण मुपपादयति॥ .... स्पर्शग्राहकमिति॥ स्पर्शस्य ग्राहकं स्पर्शग्राहकं षष्ट्याः विषयत्वमर्थः ग्रहधातोःप्रत्यक्षमर्थः ॥ ण्वुल्प्रत्ययस्य जनकत्वमर्थः, तथाच स्पर्शविषयकप्रत्यक्षजनकत्वेसतीन्द्रियत्वं त्वागिन्द्रियस्य लक्षणं। इदमुष्ण मिदं शीतमित्याकारकप्रत्य



क्षजनकत्वस्य इन्द्रियत्वस्य त्वगिन्द्रिये सत्वाल्लक्षणसङ्गतिः। प्रत्यक्षे विषयस्य कारणत्वेन स्पर्शविषयकप्रत्यक्षजनकत्वस्य स्पर्शे सत्वात्स्पर्शेऽतिप्रसङ्ग इति इन्द्रियत्वनिवेशः। इन्द्रियत्वस्य चक्षुरादौसत्वादतिव्याप्तिरिति स्पर्शविषयकप्रत्यक्षजनकत्वनिवेशः। त्वगिन्द्रियस्य वायवीयत्वेऽनुमानंप्रामाणयति ....तच्चेत्यादिना। त्वगिन्द्रियं वायवीयं रूपाद्यव्यंजकत्वे सति स्पर्शाभिव्यंजकत्वात्, अङ्गसाङ्गिसलिल शैत्याभिव्यंजकव्यजनपवनवदित्यनुमानेन त्वगिन्द्रियस्य वायवीयत्वं सिद्ध्यतीत्याशयः। वायवीयत्वाभाववति प्रदीपे स्पर्शाभिव्यंजकत्वस्यसत्वात् व्यभिचार इति रूपाद्यव्यंजकत्वनिवेशः, तथाच प्रदिपस्य रूपव्यंजकत्वान्न व्यभिचारः। वायवीयत्वाभाववति आकाशे रूपाद्यव्यंजकत्वसत्वा व्यभिचार इति स्पर्शाभिव्यंजकत्वनिवेशः, तथाचाकाशे रूपाद्यव्यंजकत्वस्य सत्वेपिस्पर्शाभिव्यंजकत्वाभावान्न व्यभिचारः॥ ४३॥

[मुक्तावली]

**का ॥ प्राणादिस्तु महावायु पर्यन्तोविषयोमतः ॥**

मु ॥ विषयं दर्शयति। प्राणादिरिति। यद्यप्यनित्यो वायुश्चतुर्विधःतस्य चतुर्धा विधा प्राणादिरित्युमक्ताकरे। तथापि संक्षेपादत्र त्रैविध्यमुक्तं। प्राणस्त्वेक एव हृदादि नानास्थानवशान्मुख निर्गमनादिनानाक्रियावशाच्चनानासंज्ञां लभत इति ॥

इति वायुनिरूपणम् ॥

(सुबोधिनी)

विषयं दर्शयति। शङ्कते — यद्यपीति। शरीरेन्द्रियविषयप्राणभेदादित्याशयः। चतुर्थस्य प्राणवायोः विषयरूपत्वे प्रमाणं दर्शयति। .... आकरइति। भाष्यइत्यर्थः। समाधत्ते। — तथापीति। प्राणः कति विध इत्यत आह। — प्राणस्त्विति। प्राणस्यैकत्वे कथं प्रा

णापानादि व्यवहार इत्यतआह .... हृदादीति । तथाच "हृदिप्राणो
गुदेऽपानः समानो नाभिसंस्थितः । उदानः कठदेशेतु व्यानःस
र्व शरीरग",, इत्यादिना प्राणस्यैकत्वेऽपि तत्तत्स्थानास्थितत्वेन मु
खनिर्गमनादि नानाक्रियावशाच्च प्राणापानादिसंज्ञांलभतइत्यर्थः ॥

मुक्तावली

**का ॥ आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥**

मु ॥ आकाशं निरूपयति आकाशस्येति । आकाश
कालदिशामेकैकव्यक्ति त्वादाकाशत्वादिकं नजातिः किन्त्वाकाशत्वं
शब्दाश्रयत्वं । वैशेषिक इति कथनंतु विशेषगुणान्तरव्यवच्छेदाय
एतेन प्रमाणमपि दर्शितम् । तथाहि शब्दो विशेषगुणश्चक्षुर्ग्रहणा
योग्यबहिरिन्द्रियग्राह्य जातिमत्वात्स्पर्शवत्,, शब्दो द्रव्यसमवे
तो गुणत्वात् संयोगवत् इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे
सिद्धे शब्दो न स्पर्शवद्विशेषगुणोऽग्निसंयोगासमवायिकारणकत्वा
भावे सत्यकारणगुणपूर्वक प्रत्यक्षत्वात् । सुखवत् । पाकजरूप
दौ व्यभिचारवारणयसत्यन्तम । पटरूपादौ व्यभिचारवारणायाकार
णगुणपूर्वकेतिजलपरमाणुरूपादौव्यभिचारवारणाय प्रत्यक्षेति ॥

(सुबोधिनी)

—आकाशं निरूपयतीति । आकाशत्वकालत्व दित्त्वानां जा
तिभिन्नत्वमित्यत्र हेतुमुपपादयति । .... आकाशकालदिशामिति ।
तथाच व्यक्त्यभेदस्य जातिबाधकत्वेन आकाशत्वादीनां न जातित्वमि
त्याशयः । आकाशत्वस्य जातिभिन्नत्वे किं तावदाकाशत्वमित्यत
आह । — किंत्विति । शब्दाश्रयत्वं शब्दनिष्ठाधेयतानिरूपिता
धिकरणत्वं आकाशस्य लक्षणमित्याशयः ।

ननु शब्दनिष्टकालिकसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य



काले विद्यमानत्वात्कालेऽतिव्याप्तिरिति चेन्न । शब्दनिष्ठाधेयतायां
समवायसंबन्धावच्छिन्नत्वस्य विवक्षितत्वात्, तथाच कालिकसंबन्धा
वच्छिन्नशब्दनिष्ठाधेयतानिरूपिताधिकरणत्वस्य काले विद्यमानत्वेऽपि
समवायसंबन्धावच्छिन्नशब्दनिष्ठाधेयतानिरूपिताधिकरणत्वस्य का
लेऽसत्वान्नातिप्रसङ्गः । नन्ववमपि एकधर्मावच्छिन्नाधेयता एकैवे
ति न्यायेन जले समवायेन गुणोऽस्तीत्याकारकप्रतीतिसिद्धशब्द
निष्टसमवायसंबन्धावच्छिन्नगुणत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य
जले विद्यमानत्वाज्जलेऽतिव्याप्तिरिति चेन्न । शब्दत्वावच्छिन्नाधेयत्व
स्यविवक्षणीयत्वात् । तथाच गुणत्वावच्छिन्नशब्दनिष्ठाधेयतानिरूपिता
धिकरणत्वस्य जले सत्वेपि शब्दत्वावच्छिन्नाधेयतानिरूपिताधिकर
णत्वस्य जलेऽसत्वान्नातिप्रसङ्गः । वैशेषिक इति पदस्य सार्थक्य.
मुपपादयति । ... वैशेषिक इति कथनंत्विति । विशेषगुणान्तर
व्यवच्छेदाय, शब्दातिरिक्तविशेषगुणाभावायेति तदर्थः । तथा चा
काशे शब्द एव विशेषगुणः नान्यो विशेषगुण इति द्योतनाय मू
ले वैशेषिक इत्युक्तमिति भावः । .... एतेनेति । आकाशे शब्द
एव विशेषगुण इत्युपपादनेन आकाशरूपद्रव्यान्तराभ्युपगमे प्रमा
णं दर्शितमित्यर्थः ॥

आकाशस्य द्रव्यान्तरत्वं साधयितुं प्रथमतः शब्दस्य विशेषगुणत्वं
साधयति ....तथाहीति । शब्दो विशेषगुणः, चक्षुर्ग्रहणायोग्यबहि
रिन्द्रियग्राह्या या जातिः तादृशजातिमत्वात्, स्पर्शवत्, विशेषगुणत्व
व्याप्यचक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमांश्छब्दइति परामर्शाच्छब्दो
विशेषगुण इत्यनुमितिर्जायत इत्याशयः । अत्र विशेषगुणत्वाभावव
ति बाहिरिन्द्रिय ( चक्षुरिंद्रिय ) ग्राह्यसंख्यात्वजातिमत्वस्य सत्वेन
व्यभिचार इति चक्षुर्ग्रहणायोग्यत्वं जातौ विशेषणं । तथाच संख्या

त्वजातेः चक्षुग्रहणायोग्यतया न तादृशजाति मादायव्यभिचारः ।
विशेषगुणत्वाभाववति गुरुत्वे चक्षुर्ग्रहणायोग्यगुरुत्वत्वजातिमत्वस्य स
त्वाद्व्याभिचार इति बहिरिन्द्रियग्राह्येति । तथाच गुरुत्वस्यातीन्द्रियत्वेन
गुरुत्वत्वजातिरप्यतीन्द्रियेति न बहिरिन्द्रियग्राह्यजातिः गुरुत्वत्वजा
तिरतो न व्यभिचारः । विशेषगुणत्वाभाववति आत्मनि चक्षुर्ग्रहणा
योग्य मन इन्द्रियग्राह्यात्मत्वजातेः सत्वेन व्यभिचारइत्यत उक्तं ब
हिरिति । तथाचात्मनः बहिरिन्द्रियाग्राह्यत्वेनात्मत्वजातिरपि न ब
हिरिन्द्रियग्राह्येति न व्यभिचारः । विशेषगुणत्वाभाववति त्वगूष्मसं
योगे चक्षुर्ग्रहणायोग्यत्वगिन्द्रियग्राह्य त्वगूष्मसंयोगत्वरूपधर्मवत्वसत्वेन
व्यभिचार इति जातिरिति । तथाच त्वगूष्मसंयोगत्वस्य न जातित्वं
नवा संयोगत्वं चक्षुर्ग्रहणायोग्यमिति न व्यभिचारः ॥ एवं शब्दस्य
विशेषगुणत्वे सिद्धे तस्य द्रव्याश्रितत्वं साधयति । शब्द इत्यादि
ना । अत्र शब्दस्य पक्षत्वं द्रव्यसमवेतत्वस्य साध्यत्वं, गुणत्वादितिहे
तुः, द्रव्यसमवेतत्वव्याप्यगुणत्ववांश्छब्द इतिपरामर्शाच्छब्दो द्रव्य
समवेत इत्यनुमितिर्जायत इतिभावः ।
एवं शब्दस्य द्रव्यसमवेतत्वस्य सिद्धत्वेऽपि क्लृप्तपृथिव्यादिद्रव्य
समवेतत्वमेवा स्तां तावता कथमाकाशसिद्धि रित्याशंकां परिजि
हीर्षुः शब्दस्य क्लृप्तपृथिव्यादिद्रव्यसमवेतगुणाभिन्नत्वं साधयति ।
.... शब्द इति । अत्र शब्दस्य पक्षत्वं, स्पर्शवद्विशेषगुणभेदस्य
साध्यत्वं, अग्निसंयोगाकारणकत्वाभावे सत्यकारणगुणपूर्वकत्वे सति
प्रत्यक्षविषयत्वादिति हेतुः । अग्निसंयोगासमवायिकारणत्वं च पा
कजन्यत्वं पाकोनाम विजातीयतेजः संयोगः तथाच शब्दस्य वि
जातीयतेजःसंयोगाजन्यत्वेन शब्देऽग्निसंयोगासमवायि कारणकत्वाभा
वो वर्तते एवं कारणगुणपूर्वकत्वं च स्वसमवायि कारणगुणजन्यत्वं त



च्च तच्च पटादिरूपादिनिष्ठं, तथाहि स्वपदेन पटरूपग्रहणे स्वसम
वायिपटः, तत्कारणं तन्तुः, तद्गुणः श्वेतरूपादिः तज्जन्यं पट
रूपं भवति न ह्येवं शब्दः इति शब्दे कारणगुणपूर्वकत्वाभावो व
र्तते एवं प्रत्यक्षविषयत्वमपि वर्तत इति सामानाधिकरण्य सम्बन्धे
नाग्निसंयोगासमवायि कारणकत्वाभाव विशिष्टकारणगुणपूर्वकत्वाभा
वविशिष्टप्रत्यक्ष विषयत्वस्य शब्दे सत्वेन हेतुरयं न स्वरूपासिद्धः, त
थाच स्पर्शवद्विशेषगुणभेदव्याप्याग्निसंयोगासमवायिकारणकत्वाभावावि
शिष्टकारणगुणपूर्वकत्वाभावविशिष्टप्रत्यक्षविषयत्ववान् शब्द इति
परामर्शाच्छब्दः स्पर्शवद्विशेषगुणभिन्न इत्यनुमितिर्जायत इति भावः ।
हेतौ सत्यन्तस्य प्रयोजनमुपपादयति । — पाकजरूपादाविति ।
तथाच स्पर्शवद्विशेषगुणभेदाभाववति पाकजस्पर्शे कारणगुणपूर्वक
त्वाभावविशिष्टप्रत्यक्षविषयत्वस्य सत्वेन व्याभिचार इति सत्यन्तनिवे-
शः, तन्निवेशे पाकजस्पर्शस्याग्निसंयोगासमवायिकारणकत्वेन तदभा
वस्य तत्रासत्वान्न व्यभिचार इत्याशयः ।
अकारणगुणपूर्वकत्वदलस्य सार्थक्यमुपपादयति । पटरूपादविति ।
तथा च स्पर्शवद्विशेषगुणभेदाभाववति पटरूपादौ अग्निसंयोगासम-
वायिकारकत्वाभावविशिष्टप्रत्यक्षविषयत्वस्य सत्वेन व्यभिचार इति
कारणगुणपूर्वकत्वाभाव निवेशः । तथा च पटरूपस्य स्वसमवायिप
टकारणतन्तुगुणजन्यत्वेन पटे न कारणगुणपूर्वकत्वाभाव इति न व्य
भिचार इति भावः । प्रत्यक्षविषयत्वदलस्य प्रयोजन मुपपादयति ।
जलपरमाणुरूपादाविति । तथा च स्पर्शवद्विशेषगुणभेदाभाववति ज-
लपरमाणुरूपेऽग्निसंयोगासमवायिकारणकत्वाभावस्य कारणगुणपूर्वक
त्वाभावस्य सत्वेन व्यभिचार इति प्रत्यक्षविषयत्वनिवेशः एवञ्च
परमाणुरूपस्याप्रत्यक्षत्वेन न व्यभिचार इति भावः । एवञ्च किं फाली

तं। शब्दः स्पर्शवद्विशेषगुणभिन्नः पाकाजन्यत्वविशिष्टस्वसमवायि कारणगुणाजन्यत्वाविशिष्टप्रत्यक्षाविषयत्वादित्यनुमानेन स्पर्शवत्पृथिव्यप्तेजोवायुविशेषगुणभेदः शब्दे सिद्ध इति फलितम् ॥

[मुक्तावली]

शब्दो न दिक्कालमनोगुणः विशेषगुणत्वात्। नात्मविशेषगुणो बाहिरिन्द्रियग्राह्यत्वाद्रूपवत्। इत्थञ्च शब्दाधिकरणं नवमद्रव्यं गगनात्मकं सिद्ध्यतीति। न च वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम्। अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् ॥ ४४ ॥

(सुबोधिनी)

एवमनुमानेन शब्दे पृथिव्यप्तेजोवायुगुणभेदं व्यवस्थाप्य दिक्कालमनोगुणभेदमनुमानेन व्यवस्थापयति। शब्द इत्यादिना दिक्कालमनोगुणभेदव्याप्यविशेषगुणत्ववान् शब्द इत्याकारकपरामर्शाच्छब्दः दिक्कालमनोगुणाभिन्न इत्यनुमितिर्जायत इत्याशयः। एवमात्मविशेषगुणभेदमपि शब्दे साधयति। नात्मविशेषगुण इति। शब्दो आत्मविशेषगुणभिन्नः बाहिरिन्द्रियग्राह्यत्वात्, आत्मविशेषगुणभेदव्याप्यबाहिरिन्द्रियग्राह्यत्ववान् शब्द इत्यकारपरामर्शाच्छब्दो आत्मविशेषगुणभिन्न इत्यनुमितिर्जायत इति भावः ॥ फलितमुपपादयति। इत्थं चेति। निरुक्तदिशा शब्दस्य क्लृप्तपृथिव्यादिगुणाभिन्नत्वे सिद्धे सतीत्यर्थः। शब्दाधिकरणमिति। क्लृप्तपृथिव्याद्यवृत्तिशब्दात्मकगुणाधिकरणतया नवमं यद्द्रव्यं सिद्ध्यति तदेव गगनमित्याशयः, अनुमानप्रकारस्तु गगनं नवमद्रव्यं पृथिव्याद्यष्टद्रव्यावृत्तिशब्दात्मकगुणवत्त्वादित्यनुमानेन गगनस्य शब्दरूपहेतुना नवमद्रव्यत्वं सिद्ध्यतीत्याशयः। शङ्कते .... न चेति। वाच्यमिति परेणान्वयः। अस्याय



माशयः वायवीयावयवेषु सूक्ष्मशब्दानङ्गीकृत्य तज्जन्यः वायौ महच्छब्दो ऽङ्गीक्रियताम्। तथा च कारणगुणपूर्वकत्वस्यैव शब्दे विद्यमानतया अकारणगुणपूर्वकत्वाभावात् स्पर्शवद्विशेषगुणभेदसाधकत्वेन प्रयुक्तपूर्वोक्तहेतुः स्वरूपासिद्धः। एवञ्च शब्दाश्रयत्वेन न गगनस्य नवमद्रव्यस्य सिद्धिः वायोरेव शब्दाश्रयत्वाङ्गीकारादिति। निरुक्तहेतौ स्वरूपासिद्धिवारणाय शब्दस्य वायुगुणत्वं वारयति। अयावद्द्रव्यभावित्वेनेति ॥ शब्दःवायुविशेषगुणत्वाभाववान् अयावद्द्रव्यभावित्वात्; यो यो वायुविशेषगुणः सः यावद्द्रव्यभावी; अयन्तु शब्दो ऽयावद्द्रव्यभावीति न वायुविशेषगुण इत्याशयः। तथा च शब्दे कारणगुणपूर्वकत्वाभावात् न स्वरूपासिद्धिः पूर्वोक्तहेताविति भावः ॥ ४४ ॥

[मुक्तावली]

**का ॥ इन्द्रियन्तु भवेच्छ्रोत्रं एकः सन्नप्युपाधितः ।**

मु ॥ तत्र शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति। इन्द्रियमिति। नन्वाकाशं लाघवादेकं सिद्धम्, श्रोत्रन्तु पुरुषभेदेन भिन्नं तत्कथमाकाशं स्यादित्यत आह। एकः सन्नपीत्यादि आकाश एक एव सन्नुपाधेः कर्णशष्कुल्यादिभेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः ॥

(सुबोधिनी)

आकाशनिरूपणे शरीरविषययोरप्रदर्शनेन मूलस्य न्यूनत्वं स्यादित्यत आह। .... तत्रेति। नन्वित्यादि स्पष्टो ऽर्थः ॥

[मुक्तावली]

**का ॥ जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥**

मु ॥ कालं निरूपयति। जन्यानामिति। तत्र प्रमाणं दर्शि

यितुमाह । जगतामिति । तथाहि इदानीं घटइत्यादिप्रतीतिः । सूर्यपरिस्पन्दादिकं यदा विषयीकरोति तदा सूर्यपरिस्पन्दादिना घटादेः संबन्धो वाच्यः । स च संयोगादिर्न संभवतीति काल एव तत्संबन्धघटकः कल्प्यते । इत्थं च तस्याश्रयत्वमपि सम्यक् ॥ ४५ ॥

(सुबोधिनी)

....कालं निरूपयतीति । जन्यानामितीति । जन्यमात्रनिमित्तकारणत्वं कालस्य लक्षणमित्याशयः । ननु कार्यमात्रं प्रति ईश्वरादृष्टदिशामपि निमित्तकारणत्वेन तेष्वतिव्याप्तिरिति चेन्न । तत्तद्भिन्नत्वस्य निवेशनीयत्वात् । जगतामाश्रयो मत इति मूलस्य प्रयोजनमुपपादयति ।....तत्रेति । काल इत्यर्थः ॥ तादृशप्रमाणमेवोपन्यस्यति ॥ ....तथाहीत्यादिना ॥ इदानीं घटः, तदानीं घट इत्यादि प्रतीतिः घटादीनां कालसंबन्धं विना उपपादयितुं न शक्यते कालस्य नित्यत्वेनैकत्वेन च तत्संबन्धस्य सार्वत्रिकत्वेन इदानीं तदानीमितिप्रतीत्योर्वैलक्षण्यं नस्यादतः सूर्यपरिस्पन्दानां तादृशप्रतीतिविषयत्वमभ्युपगन्तव्यं, तथाच सूर्यपरिस्पन्दानां सूर्यनिष्ठत्वेन तेषां घटादीनां च समवायसंबन्धो न संभवतीति परिस्पन्दानां क्रियात्वेन तेषां द्रव्यस्यच संयोगो न संभवतीति स्वाश्रयकालसंबद्धतया सूर्यपरिस्पन्देषु घटादीनां निष्ठत्वं वाच्यम् । तथाच तादृशसंबन्धघटकतया घटाद्यधिकरणत्वेन कालोऽभ्युपगन्तव्य इत्याशयः। ...इत्थं चेति । कालस्यैवंविधत्वे ऽभ्युपगन्तव्यत्वे सतीत्यर्थः । तस्य कालस्य आश्रयत्वं सर्वाधारत्वं । युक्तं न्याय्यमित्यर्थः ॥ ४७ ॥

[मुक्तावली]

**का ॥ परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।**



मु ॥ प्रमाणान्तरं दर्शयति । परापरत्वेति । परत्वापरत्वबुद्धेरसाधारणं निमित्तं काल एव , परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः कालः कल्प्यत इति भावः ॥ नन्वेकस्य कालस्य सिद्धौ क्षणादिनमासवर्षादिसमयभेदो न स्यादत आह ॥ क्षणादिरिति ॥ कालस्त्वेकोऽप्युपाधिभेदात्क्षणादिव्यवहारविषयः ॥ उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा ॥ पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा , उत्तरसंयोगावच्छिन्नं कर्म वा । नचोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यम् ॥ कर्मान्तरसत्त्वादिति ॥ महाप्रलये क्षणादिव्यवहारो यद्यस्ति, तदाऽन्यतरध्वंसेनोपपादनीयः । दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति ॥

इति कालनिरूपणम्

(सुबोधिनी)

प्रमाणान्तरं दर्शयतीति । परत्वापरत्वबुद्धेरिति । कालकृतपरत्वापरत्वबुद्धेरित्यर्थः सा च बुद्धिरयमस्मात्परः; अयमस्मादपर इति । तादृशबुद्धेः कालोऽसाधारणं निमितं कारणमित्यर्थः । पर्यवसिताशयमाह .... परत्वापरत्वयोरिति । ज्येष्ठे कालकृतपरत्वं प्रत्यथिकासूर्यपरिस्पन्दावच्छिन्न काल संयोगस्यैवा समवायि कारणत्वेन तादृशपरत्वासमवायिकारणसंयोगाश्रयतया ऽतिरिक्तः कालः कल्पनीयइत्यर्थः

एवमेवकालकृतापरत्वासमवायिकारण संयोगाश्रयतयापि कालः सिद्ध्यतीति भावः .... नन्विति । क्षणादिरितीति । कालस्त्विति । कालस्यैकत्वेऽपि क्षणः, दिनं, पक्षः, मासः, ऋतुः, अयनं, वत्सर इत्यादिव्यवहारस्तु उपाधिभेदादुपपद्यत इति भावः। क्षणदिनादिव्यवहारप्रयोजकोपाधीः प्रदर्शयति ॥ उपाधिस्त्विति ॥

स्वजन्यविभागप्रागभावावच्छिन्नं कर्मेति ॥ स्वपदार्थः क्रिया ॥ अत्रेयं व्यवस्था आदौ क्रिया, क्रियातो विभागः, बिभागात्पूर्वदेशसंयोगनाशः, ततः उत्तरदेशसंयोगोत्पत्तिः, ततः द्रव्योत्पत्तिरिति। अत्र स्वपदेन क्रियाग्रहणे स्वजन्यो विभागः। तादृशविभागप्रागभावः विभागोत्पत्तेः प्राग्वर्तते क्रिया तु विभागोत्पत्त्यव्यवहितपूर्वभावीति ॥ एवञ्च विभागप्रागभावविशिष्टाक्रिया विभागाव्यवहितप्राक्क्षण एवेति साक्रिया एका उपाधिः। तृतीयक्षणे पूर्वसंयोगस्य ध्वंससंभवेऽपि विभागोत्पत्तिक्षणे पूर्वसंयोगस्य सत्वात्तादृशसंयोग विशिष्टविभागः विभागोत्पत्तिक्षण एव संभवतीति पूर्वसंयोगविशिष्टविभाग एका उपाधिः ॥ तृतीयक्षणे पूर्वसंयोगस्य ध्वंसस्य संभवेन तादृशतृतीयक्षणे उत्तरदेश संयोगप्रागभावस्यापि संभवात्। पूर्वदेशसंयोगनाशविशिष्टोत्तरदेशसंयोगप्रागभावः क्रियोत्पत्ति तृतीयक्षणे संभवतीति पूर्वदेशसंयोगनाशविशिष्टोत्तरदेशसंयोगप्रागभावः एका उपाधिः। द्रव्यारंभककर्मणः चतुर्थक्षणपर्यंतस्थायित्वेन चतुर्थक्षणे उत्तरदेशसंयोगस्य क्रियायाश्च संभवेन उत्तरदेशसंयोगविशिष्टक्रियाचतुर्थक्षण एव संभवतीति। उत्तरदेशसंयोगविशिष्टक्रिया वा एका उपाधि रित्याशयः ॥

| १ | २ | ३ | ४ |
|---|---|---|---|
| क्रिया | विभागः | पूर्वसंयोगनाशः | उत्तरसंयोगः |
| विभागप्राग भावः | पूर्वसंयोगप्राग भावः | उत्तरसंयोगप्राग भावः | पूर्वक्रिया |
| वि-प्राग-वि-क्रिया | पू-सं-प्रा-वि विभागः | उ-सं-प्रा-वि--पू-सं-ध्वंसः | उ-सं-वि क्रिया |
| एकाउपाधिः | द्वितीया | तृतीया | तुरीया |



शङ्कते... नचेति। वाच्यमिति परेणान्वयः। एकक्रियामादायैव निरुक्त क्षणादिव्यवहारपरिकल्पने उत्तरसंयोगोत्पत्यनन्तरं क्रियायाः नष्टत्वेन उत्तरदेशसंयोगोत्पत्यनन्तरं क्षणदिव्यवहारो नस्यादित्याशयः। समाधत्ते ... कर्मान्तरसत्त्वादिति। एकक्रियायाः नष्टत्वेऽपि क्रियान्तरस्य सम्भवेन तादृशक्रियान्तरमादायापि क्षणादिव्यवहारः सम्भवतीत्याशयः। महाप्रलये क्रियाया असम्भवेन तदानीं कथं क्षणादिव्यवहार इत्यतआह ... महाप्रलयइति। यद्यस्तीत्यादिना अस्वरसः सूचितः ॥ सच महाप्रलये जन्यभावस्यैव विनष्टत्वेन शरीराणा मसम्भवेन शरीरावच्छिन्नात्मनां असत्वात् कस्यक्षणादिव्यवहार उपपादनीयइति ॥ अनायत्या अगत्या ॥ निरुक्तरीत्या क्षणादिव्यवहारस्य सम्भवेऽपि कथं दिवसादिव्यवहार इत्यत आह— दिनादिव्यवहारस्त्विति ॥ इति कालनिरूपणम् ॥

[मुक्तावली]

का ॥ दूरान्तिकादि धीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥

मु ॥ दिशांनिरूपयति — दूरान्तिकेति ॥ दूरत्वमान्तिकत्वं च दैशिकं परत्वमपरत्वं बोध्यम् ॥ तद्बुद्धेरसाधारणं बीजं दिगेव ॥ दैशिकपरत्वापरत्वयोरसमवायि कारणसंयोगाश्रयतया दिक् सिद्ध्यतीति भावः ॥ ४६ ॥

(सुबोधिनी)

.... दिशंनिरूपयतीति ॥ दिगेवेत्यन्तं स्पष्टोऽर्थः — दैशकेति ॥ दैशिकपरत्वं प्रति अधिकसख्याक मूर्तद्रव्यावच्छिन्न दिक्संयोगस्यैवासमवायि कारणतया तदाश्रयतया, न्यूनसंख्याकमूर्तद्रव्यावच्छिन्नादिक्संयोगस्यापरत्वं प्रत्यसमवायि कारणतया तदाश्रयत्वेन च दिक्सिद्ध्यतीत्याशयः ॥ ४६ ॥

[ मुक्तावली ]

का ॥ उपाधिभेदादेकापि प्राच्यादि व्यपदेशभाक् ।

मु ॥ नन्वेकैव दिक् यदि, तदा प्राचीप्रतीच्यादि व्यवहारः कथमुपपद्यतइत्यत आह । उपाधीति ।

यत्पुरुषस्योदयगिरिसन्निहिता या दिक् सा तस्य प्राची । उदयगिरिव्यवहिता च प्रतीची । एवंतत्पुरुषीय सुमेरुसन्निहिता दिगुदीची ॥ तद्व्यवहितात्ववाची ॥ सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः इति नियमात् ॥

( सुबोधिनी )

नन्वित्यादि स्पष्टोऽर्थः ॥ इति दिङ्निरूणम्

[ मुक्तावली ]

का ॥ आत्मेन्द्रियाद्यधिष्ठाता ।

मु ॥ आत्मानं निरूपयति । आत्मेन्द्रियेति । आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्ध्यति । ईश्वरेऽपि सा जातिरस्त्येव, अदृष्टादिरूपकारणाभावात्तु न सुखदुःखाद्युत्पत्तिः, नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव इति नियमस्याप्रयोजकत्वात् । परेत्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात् । न च दशमद्रव्यत्वापत्तिः । ज्ञानवत्वेन विभजनादिति वदन्ति । इन्द्रियादिति । इन्द्रियाणां शरीरस्य चपरम्परया चैतन्यसंपादकः ॥

(सुबोधिनी)

क्रमप्राप्तमात्मानं निरूपयितुं मूलमवतारयति । आत्मानं निरूपयतीति । आत्मत्वस्य जातित्वे किं मानमित्यत आह ।....आत्मत्वजातिस्त्विति । सुखदुःखसमवायिकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् दण्डनिष्ठघटकारणतावत् इत्यनुमानेन तादृशधर्मस्य जातित्वे लाघवमिति ज्ञानसहकृतेनात्मत्वजातिः सिध्यतीति भावः । सा आत्मत्वजातिः जीवनिष्ठा वा जीवेश्वरोभयनिष्ठा वेति विचिकित्सायामाह । —ईश्वरेऽपीति । तथा चात्मत्वजातिः जीवेश्वरोभयनिष्ठेति तदर्थः । ईश्वरे सुखदुःख समवायिकारणतावच्छेदकात्मत्वजातिस्वीकारे ईश्वरेऽपि सुखदुःखाद्युत्पत्तिः स्या दित्यत आह — अदृष्टादीति । यथा घटंप्रति समवायिकारणभूताया: मृदः सत्वेऽपि निमित्तकारणस्यासत्वे घटो न जायते तथैव सुखादिकंप्रति समवायिकारणतावच्छेदकात्मत्वाश्रयेश्वरस्य सत्वेऽपि अदृष्टादिनिमित्तकारणाभावान्नेश्वरस्य सुखाद्युत्पत्तिरिति भावः । नित्यस्य स्वरूपयोग्यत्वे फलमवश्यमभ्युपगन्तव्यमित्यतआह । .... नित्यस्य स्वरूपयोग्यत्व इति । नित्यस्य कारणतावच्छेदकाश्रयत्व इत्यर्थः । नित्यस्य स्वरूपयोग्यत्वे फलमवश्यमभ्युपगन्तव्यमिति नियमोनाङ्गीकर्तव्यः अनुकूलतर्काभावा दित्याशयः ।

इदमत्रावधेयं, नित्यस्य स्वरूपयोग्यत्वे फलावश्यं भाव इति नियमस्याङ्गाकारेऽपि नश्वरे सुखाद्युत्पत्तिप्रसङ्गः । समवायिकारण सत्वेऽपि निमित्तकारणीभूतादृष्टाभावादिति पूर्वोक्तयुक्तेरिति केषांचिदाशयमुपपादयति । -- परेत्विति । तथा चेश्वरे सुखादिसमवायिकारणतावच्छेदकात्मत्वजात्यभावान्न सुखाद्युत्पत्तिप्रसङ्ग इति भावः । नन्वीश्वरे आत्मत्वाभावे पृथिव्यप्तेजोवाय्वाकाशकालादिगात्मेश्वरमनांसि दशद्रव्याण्येव संपद्यन्ते कथं नवद्रव्याणीति शंकते ।.... न चेति । समाधत्ते । ... ज्ञानवत्त्वेनेति । तथाच ज्ञानवत्वेन जीवेश्वरयो रेकीकरणान्न दशमद्रव्यत्वापत्तिरिति भावः । .... इन्द्रियादीतीति । इन्द्रियाणामिति । तथाच यस्य सत्वे

इन्द्रियाणां शरीरस्य च परंपरया, (अवच्छेदकतासंबन्धेन) ज्ञानवत्व
रूपचैतन्यसंपादकः स आत्मेत्यर्थः। एतेनात्मनः सत्त्वेऽहं सुखी दुः
खीति प्रत्यक्षं प्रमाणमिति दर्शितम् ॥

[मुक्तावली]

यद्यप्यात्मनि अहं सुखी दुःखीत्यादिप्रत्यक्षविषयत्वमस्त्येव त
थापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्न स्तत्प्रतीति
गोचर इति प्रतिपादयितुं नशक्यत इत्यतः प्रमाणान्तरं दर्शयति।
करणमिति । वास्यादीनां छिदादिकरणानां कर्तारमन्तरेण फला
नुपधानं दृष्टम्, एवं चक्षुरादीनां ज्ञानकरणाना मपि फलोपधा
नं कर्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्ता कल्प्यते ॥ ४७ ॥

(सुबोधिनी)

अहं सुखी दुःखीत्यादिप्रत्यक्षविषयो देह एव नात्मेति विप्र
तिपन्नं प्रति करणं हि सकर्तृकमित्युपन्यस्य मूलमवतारयति । य
द्यपीत्यादिना, यद्यदचेतनं तत्तच्चेतनाधिष्ठितं सदेव कार्यं करोति
न त्वन्यथेति सदृष्टान्तमुपन्यस्य करणादिभिन्नं कर्तारं साधयति।
—वास्यादीनामिति । आदिना रथादि परि ग्रहः । तथाच य
था वास्यादयोऽचेतनाः छेदनादिकरणभूताः पश्यतोहरादिचेत
नाधिष्ठता एव कार्यं कुर्वन्ति एवमेव ज्ञानकारणादीनि चक्षुरा
दीनि चेतनाधिष्ठितान्येव ज्ञानादिरूपकार्यकरणे समर्था भवन्ती
ति। न चक्षुरादीनां अहं सुखीत्यादिप्रत्यक्षविषयत्वं किन्तु तद
तिरिक्तात्मन एवेति चक्षुराद्यतिरिक्तात्मा सिद्ध्यतीति भावः ॥ ४७ ॥

[मुक्तावली]

अथ चार्वाकमत खंडनम्

का॥ शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः।



मु॥ ननु शरीरस्यैव कर्तृत्वमस्त्वत आह। शरीरस्येति। ननु
चैतन्यं ज्ञानादिकमेव मुक्तात्मनां त्वन्मत इव मृतशरीराणाम
पि तदभावे का क्षतिः। प्रमाणाभावेन ज्ञानाभावस्य सिद्धे
रिति चेत् ॥

(सुबोधिनी)

चार्वाकमत खण्डनम्

चार्वाकमतमुपन्यस्य दूषयति । नन्विति। चार्वाकाणामयमाशयः,
“भस्मीकृतस्य देहस्य पुनरागमनं कुतः। तस्मात्सर्वप्रयत्नेन ऋणं
कृत्वा घृतं पिबेत्„ इति न्यायमनुसृत्य प्रत्यक्षस्यैव प्रामाण्यम
भ्युपगम्य परोक्ष वेदप्रमाणसिद्धदेवादयो न सन्ति स्वर्गादयो न प्रमा
णासिद्धाः। एवञ्च प्रत्यक्षसिद्धशरीरादीनामेव। ज्ञानाधिकरणत्वमास्तामि
ति तन्मतं दूषयितुं मूलमवतारयति। शरीरस्येतीति। चार्वाकः
शङ्कते। ... नन्विति। यथा नैय्यायिकैः बन्धावस्थायामेवात्मनो
ज्ञानवत्त्वं मुक्तात्मनान्तु ज्ञानाभावोऽङ्गीकृतः एवमेवास्माभिरपि जी
वनावस्थायामेव ज्ञानं नमृतशरीरेषु, तदानीं ज्ञानकरणानां प्रमाणा
नामभावदिति भावः॥

[मुक्तावली]

न शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थविरे स्मरणानुपप
त्तेः शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात्।
न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पद्यत इ
तिवाच्यम्। अनन्तसंस्कारकल्पने गौरवात् ॥

(सुबोधिनी)

चार्वाकमतं परिहरति .... नेति । तत्र हेतुमुपपादयति। शरीरस्ये
त्यादिना। समवायेन जायमानस्मृतित्वावच्छिन्नं प्रति समवायेनानुभ

वस्य कारणत्वेन, शरीरस्यैव ज्ञानवत्त्वे बाल्यशरीरतो भिन्ने स्थविरशरीरे बाल्यशरीरेणानुभूतपदार्थस्मरणं न स्यात् समवायेनस्मृत्याश्रये स्थविरदेहे समवायेनानुभवस्याभावादित्याशयः ।

ननु बाल्ये विद्यमानशरीरतो नाभिन्नं स्थविरशरीरं तथा चानुभवस्मरणयोः सामानाधिकरण्यस्य सम्भवेन न स्मरणानुपपत्ति रित्यतआह .... शरीराणामिति । तथाच केषां चिदवयवानामपगमे शरीरस्य विनष्टत्वेन केषांचिदागमने शरीरस्योत्पन्नत्वेन स्थविरशरीरस्याधिकावयवत्वेन नूतनतया उत्पन्नत्वेन बाल्ये विद्यमानदेहतो भिन्नमेवेति स्मरणानुपपत्तेः तादवस्थ्यमित्याशयः । चार्वाकः शङ्कते — न चेति । वच्यामेति परेणान्वयः । तथाच स्वजन्यसंस्कारजन्यसंस्कारवत्वसंम्बन्धेन बाल्यशरीरनिष्ठानुभवस्य स्थविरदेहे सत्वान्न स्मरणानुपपत्तिरिति भावः । चार्वाकमतं परिहरति .... अनन्तेति । तथा ऽवयवोपचयापचयैः शरीराणां क्षणभेदेन नानात्वात् तत्तच्छरीरेषु अनन्तसंस्कारकल्पने गौरवादित्याशयः ॥

[ मुक्तावली ]

एवं शरीरस्य चैतन्येबालकस्य स्थन्यपाने प्रवृत्तिर्न स्यात् इष्टसाधनताज्ञानस्य तद्धेतुत्वात् तदानीमिष्टसाधनत्वानुभावकाभावात् । मन्मतेतु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः ॥

( सुबोधिनी )

फलमुखगौरवं न दोषाय भवतीत्यत आह । ....एवमिति । प्रवृत्तिर्नस्यादित्यत्र हेतुमुपपादयति । .... इष्टसाधनताज्ञानस्येति । .... तद्धेतुत्वादिति । प्रवृत्तिहेतुत्वादित्यर्थः । .... तदानीमिति । प्रवृत्त्यव्यवहितपूर्वक्षण इत्यर्थः । अस्यायमाशयः, आत्मनो नित्य



त्वे पूर्वजन्मनि क्षुन्निवृत्तिप्रयोजकतया स्थन्यं मदिष्टसाधनमित्यनुभवस्य संभवेन तादृशानुभवजन्यसंस्कारस्य विद्यमानत्वेन जन्मान्तरप्राप्तौ क्षुन्निवृत्तिप्रयोजकतया यत्स्थन्यं पूर्वजन्मन्यनुभूतं तद्विषयकेष्टसाधनत्वप्रकारकं स्मरणं पूर्वानुभवजन्यसंस्कारवशेन जायते । ततः ततः स्थन्यपानादौ प्रवृत्त्युपपद्यते । शरीरस्य चैतन्ये तस्यानित्यत्वेन आत्मनोप्यानित्यत्वं तथाचात्मनो जन्मपरंपराभावे पूर्वजन्मानुभवजन्यसंस्काराभावादिष्टसाधनताज्ञानानुपपत्त्या स्थन्यपानादौ प्रवृत्तिर्न स्यादिति । शरीरभिन्नात्मवादिनां मते कथं स्थन्यपानादौ प्रवृत्त्युपपत्तिरित्यत आह । — मन्मतेत्विति । तथा चात्मनोमन्मते नित्यत्वेन पूर्वजन्मन्यनुभूतेष्टसाधनत्वस्य तदानीं स्मरणसंभवेन न प्रवृत्त्यनुपपत्तिरित्याशयः ॥

[ मुक्तावली ]

न च जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम् । उद्बोधकाभावात् । अत्रत्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते । इत्थंच संसारस्यानादितया आत्मानोऽनादित्वसिद्धावनादिभावस्य नाशासंभवान्नित्यत्वं संभवतीति बोध्यम् ॥

इति चार्वाकमतखण्डनम् ॥

( सुबोधिनी )

शङ्कते । .... नचेति । वाच्यमिति परेणान्वयः । यथा स्थन्यपानप्रवर्तकं इष्टसाधनताज्ञानं पूर्वजन्मानुभवेन संस्कारद्वारा संजातमेवमेव पूर्वजन्मानुभूतव्यवायादिकमपि पूर्वानुभवेन संस्कारद्वारा स्मर्यतामित्याशयः ।

उक्ताशङ्कां परिहरति । ...उद्बोदकाभावादिति । तथाच उद्बुद्धसंस्कारस्यैव स्मरणप्रयोजकतया उद्बोधकाभावात् व्यवायसंस्कारस्यानु

द्बुद्धत्वेन न व्यवायादिस्मरणापत्तिरित्याशयः।
ननु स्थन्यपानप्रवृत्तिप्रयोजकेष्ट साधनस्मरण प्रयोजकतंस्कारस्योद्बोध
कं किमित्यत आह।.... अत्रत्विति। अनायत्या अगत्या। आत्म
नो नित्यत्वं साधयति ... इत्थंचेति। बालकस्य स्थन्यपानोद्दे
प्रवर्तकस्मरणप्रयोजकतया पूर्वजन्मीय संस्कारस्य सिद्धत्वे सतीत्य
र्थः। पूर्वजन्मनि स्थन्यपानप्रवर्तकतया तत्पूर्वजन्मीय संस्कारस्येति
तत्तत्संस्काराणां प्रवाहतोऽनादित्वं वा अनाद्येकसंस्कारस्य वाभ्युपग
न्तव्यतया तादृशसंस्काराश्रयतया आत्मनो प्यनादित्वं सिद्धं, त
थाचानादि प्रागभावस्यानित्यत्वेऽपि अनादिभावरूपात्मनो नाशा
सम्भवेनात्मनो नित्यत्वम् सिद्धमित्याशयः॥

इतिचार्वाकमतखन्डनम्॥

अथ इन्द्रियात्मत्ववादिमतखण्डनम॥

[मुक्तावळी]

का॥ तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः॥ ४८॥
मु॥ ननु चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वं चास्तु
विरोधे साधकाभावादत आह। तथात्वमिति। तथात्वं चैतन्यं।
उपघाते नाशे सति। अर्थाच्चक्षुरादीनामेव। कथं स्मृतिः पूर्वं च
क्षुषा सक्षात्कृतानां चक्षुरभावे स्मरणं न स्यात् अनुभवितुरभावात्
अन्येनानुभूतस्यान्येन स्मरणासंभवात् अनुभवस्मरणयोः सामाना
धिकरण्येन कार्यकारणभावादिति भावः॥ ४८॥

(सुबोधिनी)

अथ इन्द्रियात्मत्ववादि मतखण्डनम्॥

— ननु चक्षुरादीनामेवेति। इन्द्रियात्मत्ववादिनामयमाशयः; इन्द्रिया
ण्येवात्मा तेषामेवज्ञानादिकं प्रति करणत्वं कर्तृत्वं च, करणत्वं च व्या



पारवत्वे सति असाधारणकारणत्वं चक्षुरादीनां इन्द्रियार्थसन्निकर्ष
रूपव्यापारवत्वस्य चाक्षुषादिज्ञानकारणत्वस्य च सत्वादिन्द्रियाणां कर
णत्वं, इन्द्रियातिरिक्तात्मनोऽनङ्गीकारात् इन्द्रियाणामेव कर्तृत्वमित।
नन्वेकस्यैव कर्तृत्वे कारणत्वे अयं कर्ता, इदं कारणमिति कर्तृक
रणव्यवहारभेदो न स्यादित्यत आह.... विरोधे साधकाभावादिति। कर्तृ
त्वकरणत्वयो रेकाधिकरणावृत्तित्वे हेतुर्नास्तीत्यर्थः॥ तथाच कर्तृ
त्वकरणत्वरूपोपाधिभेदात् कर्तृकरणव्यवहारभेदोपपत्तौ तयोर्विरोधे
प्रमाणं नास्तीत्याशयः। तद्दूषयितुं मूलमवतारयति। —तथात्वमिती
ति। तच्छब्दार्थमुपपादयति —तथात्वं चैतन्यमिति। उपघातश
ब्दार्थमुपपादयति —उपाघाते नाशे सतीति। केषां नाश इत्यत
आह। —अर्थादिति। कथं स्मृतिरित्यस्याशयं वर्णयति। पूर्वं च
क्षुषेत्यादिना। तत्र हेतुमुपपादयति.... अनुभवितुरभावादिति। तथा
च चक्षुरिन्द्रियस्यात्मत्वे तस्य नाशे सति चक्षुषा अनुभूतस्य
पदार्थस्य कथं स्मृतिः; अनुभवितुः चक्षुरिन्द्रियस्याभावादित्याशयः।
चक्षुरिन्द्रियेणानुभूतस्य त्वगिन्द्रियेण स्मर्यतामित्यत आह।... अन्येना
नुभूतस्येति। अत्रायमाशयः। चैत्रेणानुभूतस्य मैत्रस्य स्मरणापत्तिवारणाय
समवायेन जायमानस्मृतित्वावच्छिन्नं प्रति समवायेनानुभवस्य स्वज
न्यसंस्कारद्वारा कारणत्वं वाच्यं तथा च चक्षुरिन्द्रियजन्यानुभवस्य च
क्षुषि विद्यमानत्वेन तत्रैव स्मरणं जायते न त्वन्यत्रेति कथं त्वगि
न्द्रियेण चक्षुषानुभूतपदार्थस्य स्मृतिर्जायते। अत इन्द्रियाणामुप
घाते कथं स्मृतिरिति सुष्ठूक्तं। तथा चेदिन्द्रियाणां उपघाते स्मृ
त्यनुपपत्त्या इन्द्रियाणां चैतन्यं न संभवतीत्याशयः॥ ४८॥

इति इन्द्रियात्मवादि मतखंडनम्॥

[ मुक्तावली ]

मन आत्मत्ववादिमतखण्डनम्।

का॥ मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्।

मु॥ ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह। मनोऽपीति। न तथा न चेतनं। ज्ञानादीति। मनसोऽणुत्वात्प्रत्यक्षे महत्वस्य हेतुत्वात् मनसि ज्ञानसुखादिसत्वे तत्प्रत्यक्षानुपपत्तिरित्यर्थः। यथाच मनसो ऽणुत्वं तथाग्रे वक्ष्यते॥

(सुबोधिनी)

मन आत्मत्ववादिमतखण्डनम्

मनस आत्मत्ववादिमतमुपन्यस्य तत्खण्डयितुं मूलमवतारयति। नन्वित्यादिना। मनस आत्मत्वे यो लाभस्तं प्रदर्शयितुमाह। ....नित्यस्येति। तथाच चक्षुरादीन्द्रियाणामनित्यत्वेन तेषां नाशे स्मरणानुपपत्तिरूपो यो दोषः प्रदर्शितः स च मनसो आत्मत्वे न संभवति तस्य नित्यत्वादित्याशयः। तच्छब्दस्य पूर्वपरामर्शकत्वेन पूर्वस्मिन् तथात्वं चेदिन्द्रियाणामित्यत्र मूले चैतन्यस्यैवोक्तत्वेन मनोऽपि न तथा ज्ञानाद्यनध्यक्षमित्यत्रापि तथेति शब्देन चैतन्यस्य ग्रहणं स्यात्, तथा च मनः चैतन्यभिन्नमित्यर्थो लभ्येत तथाच मनसः चैतन्याभिन्नत्वेऽपि चेतनरूपमास्त्वित्याशङ्का स्यादत आह। ....न तथा न चेतनमिति। तथाच मनः चेतनाभिन्नमित्यर्थो लभ्यते। तत्र हेतुमुपपादयितुं मूलमवतारयति। —ज्ञानादीति॥ मनसः आत्मत्वे तस्यैव ज्ञानादिमत्वेन तस्याणुत्वात्तन्निष्ठज्ञानादिप्रत्यक्षं न स्यादित्याशयः। मनसोऽणुत्वेऽपि तन्निष्ठज्ञानादिप्रत्यक्षं जायतामित्यत आह॥ ....प्रत्यक्षेमहत्वस्येति॥ तथाच विषय-



तासंबन्धेन जायमानगुणादिप्रत्यक्षे सामानाधिकरण्यसंबन्धेन महत्वस्य कारणतया ज्ञानाद्याश्रये मनसि महत्वाभावात् ज्ञानादिप्रत्यक्षं न स्यादित्याशयः। ननु मनसो महत्त्वमेवास्तामित्यत आह। —यथा चेति। अयौगपद्याद्ज्ञानानां तस्याणुत्वमिहेष्यते, इत्यत्राग्रे यथा मनसोऽणुत्वं तथा वक्ष्यत इत्यर्थः॥

इति मन आत्मत्ववादिमतखण्डनम्॥

[ मुक्तावली ]

अथ बौद्धमतखण्डनम्॥

नन्वस्तु विज्ञानमेवात्मा तस्य स्वतः प्रकाशरूपत्वाच्चेतनत्वं। ज्ञानसुखादिकन्तु तस्यैवाकारविशेषः। तस्यापि भावत्वादेव क्षणिकत्वं। पूर्वपूर्वविज्ञानस्योत्तरोत्तरविज्ञानहेतुत्वात्, सुषुप्त्यवस्थायामप्यालयविज्ञानधारा निराबाधैव, मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेत्॥

(सुबोधिनी)

अथ बौद्धमतखण्डनम्॥

सुगताचार्यस्य चत्वारः शिष्याः सौत्रान्तिकवैभाषिकयोगाचार्यमाध्यमिकाश्चेति, तेषु सौत्रान्तिकेन बाह्याभ्यन्तरपदार्था अभ्युपगताः तेषामक्षिगम्यत्वमप्यभ्युपगतम्, यद्यपि वैभाषिकेनापि बाह्याभ्यन्तरपदार्था अभ्युपगताः, तथाऽपि तेषां नाक्षिगम्यत्वं किन्तु अनुमानगम्यत्वमिति सौत्रान्तिकवैभाषिकयोर्भेदः योगाचार्याणामयमाशयः। रूपविज्ञानवेदनासंज्ञासंस्कारा इति पञ्चस्कन्धाः, तत्र सविषयकेन्द्रियाणि रूपस्कन्धः १ विज्ञानस्कन्धो द्विविधः प्रवृत्तिविज्ञानमालयविज्ञानं चेति, तयोः अयं घट इति प्रवृत्तिविज्ञानं, अहं जा

नाभीत्यालयविज्ञानं आलयविज्ञानप्रवाह एवात्मेति २ सुखदुःखाद्यनुभवो वेदनास्कन्धः ३, ब्राह्मणो गौरश्व इति नामविशिष्टसविकल्पकप्रत्ययः संज्ञास्कन्धः ४ रागद्वेषमोहधर्माधर्माः संस्कारस्कन्धः ५ इति। सर्ववैनाशिकोमाध्यमिकः। सुगताचार्यशिष्याणां मध्ये योगाचार्यस्यैव मतं युक्तिबहुलमिति निरस्यति। —नन्वित्यादिना। विज्ञानस्य चेतनत्वे हेतुमुपपादयति।....तस्य स्वतः प्रकाशरूपादिति। ननु योगाचार्यमते विज्ञानातिरिक्तज्ञानसुखादीनां कुत्रान्तर्भाव इत्यत आह ... ज्ञानंसुखादिकंत्विति। तथाचं योगाचार्यमते सर्वस्यापि विज्ञानरूपत्वेन विज्ञानातिरिक्तपदार्थाभावात् ज्ञानसुखादिकं सर्वमपि विज्ञानरूपमेवेत्याशयः। यद्यद्भावरूपं तत्तत्क्षणिकमिति व्याप्त्या विज्ञानस्य क्षणिकत्वं साधयति ... तस्यापीति॥ तथा च तदभ्युपगतविज्ञानं क्षणिकमेवेति भावः।

ननु योगाचार्याणां मते विज्ञानानां क्षणिकत्वाभ्युपगमेन आलयविज्ञानस्यापि क्षणिकत्वेन सुषुप्तौ विज्ञानोत्पादकसामग्र्यभावाद्ज्ञानानुत्पत्या सुषुप्तावात्मा न स्यादित्यत आह .... पूर्वपूर्वविज्ञानस्येति॥ तथाच पूर्वपूर्वविज्ञानस्यैवोत्तरोत्तरविज्ञानहेतुत्वेन सुषुप्त्यव्यवहितपूर्वक्षणोत्पन्नविज्ञानस्यैव सुषुप्तिप्रथमक्षणोत्पन्नविज्ञानहेतुत्वं तस्य तदुत्तरक्षणोत्पन्नविज्ञानहेतुत्वं,तस्य तदुत्तरक्षणोत्पन्नविज्ञानहेतुत्वं एवं सुषुप्तावपि आलयविज्ञानधारा निराबाधैवेति सुषुप्तावपि आत्मनो नानुपपत्तिरिति भावः॥ ननु योगाचार्यमते आलयविज्ञानस्यापि क्षणिकत्वेन तस्यैवात्मतया तदाश्रित संस्कारस्यापि क्षणिकत्वेन कालान्तरे स्मरणहेतोः संस्कारस्याभावेन कथं पूर्वानुभूत पदार्थस्मरणमित्यत आह — मृगमदवासनावासितवसनइवेति। तथाच यथा कस्तूरिकागतगन्धविशेषस्य तदावरणतया निक्षिप्तपटे संक्रांतिरेवमेव पूर्वपूर्व विज्ञानज



न्यसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तिरभ्युपगम्यते। एवंसति संस्काररूपकारणस्य सत्वेन न स्मरणानुपपत्तिरिति भावः॥

इति बौद्धमत परिष्कारः

[मुक्तावली]

अथ बौद्धमत विमर्शनम्।

न। तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः। यत्किंचिद्विषयकत्वे विनिगमनाविरहः। सुषुप्तावपि विषयावभासप्रसङ्गाच्च। ज्ञानस्य सविषयकत्वात्॥

(सुबोधिनी)

बौद्धमतं निरस्यति।....नेति। क्षणिकविज्ञानस्य जगद्विषयकत्वं वा यत्किंचिद्विषयकत्वं वा इति विकल्प्य आद्यपक्षे दोषमुपपादयति। ...तस्य जगद्विषयकत्व इति। तथाच वस्तुत्व व्यापक विषयताकज्ञानवत्त्वस्यैव सर्वज्ञत्वरूपत्वेन क्षणिकविज्ञानस्य जगद्विषयकत्वे (वस्तुत्वव्यापकविषयताकत्वे) आलयविज्ञानरूपजीवस्य सर्वज्ञत्वापत्तिरित्याशयः॥

क्षणिकविज्ञानस्य यत्किञ्चिद्वस्तुविषयकत्व रूपद्वितीयपक्षे दोषमुपपादयति। —यत्किञ्चिद्विषयकत्व इति। क्षणिकविज्ञानस्य यत्किञ्चिद्विषयकत्वे घटविषयकत्वं वा, पटविषयकत्वं वा, घटविषयकत्वे कथं पटविषयकत्वं न संभवति, पटविषयकत्वमेवास्तामित्युक्तौ कुतो न घटविषयकत्वं, उभयविषयकत्वे कथं न दण्डविषयकत्वं, घटपटदण्डविषयकत्वाभ्युपगमे, कुड्यादिविषयकत्वमपि स्यात्, एवञ्च विनिगमनाविरहात्सर्वविषयकत्वं वा, निर्विषयकत्वं वा क्षणिकविज्ञानस्य सम्भवे तदुभयमप्यनिष्टमेव, क्षणिकविज्ञानं यत्किञ्चिद्विषयकमिति वदतां सौगतानां मतविरोधश्च स्यादित्याशयः॥ आत्मरूपाल

यविज्ञानस्य सविषयकत्वे दोषमुपपादयति । ... सुषुप्तावपीति तथा च सुषुप्तावपि आलयविज्ञानरूपात्मनः सत्वेन तस्य सविषयकत्वे घटपटादिरूपविषयकत्वेन सुषुप्तावपि घटपटादिरूपविषयावभासप्रसक्तिः, न चेष्टापत्तिः, जाग्रत्सुषुप्त्यो रवैलक्षण्यप्रसक्तेरित्याशयः । ननु केनालयविज्ञानस्य सविषयकत्वमभ्युपगतामित्यत आह । .... ज्ञानस्येति । तथा च ज्ञानस्य निर्विषयकत्वे जाग्रदवस्थायामपि घटपटादिभानं न स्यदिति अवश्यं ज्ञानस्य सविषयत्वमभ्युपगन्तव्यं । एवंसत्युक्तदोषप्रसङ्गो दुर्वारएवेति भावः ॥

[मुक्तावली]

तदानीं निराकारा चित्संततिरनुवर्तत इति चेन्न । तस्याः प्रकाशत्वे प्रमाणाभावात् । अन्यथा घटादीनामपि ज्ञानत्वापत्तिः । न चेष्टापत्तिः, विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यम् । घटादेरनुभूयमानस्यापलापितुमशक्यत्वात् ॥

(सुबोधिनी)

जाग्रदवस्थायामेव विषयस्य भानात् सुषुप्त्यवस्थायां विषयस्याभानात् जाग्रदवस्थायां ज्ञानस्य सविषयकत्वेऽपि सुषुप्त्यवस्थायां निर्विषया चित्संततिरास्तामित्याशङ्कते — तदानीमिति । सुषुप्तावित्यर्थः । तथाच जाग्रदवस्थायामालयविज्ञानस्य सविषयकत्वेन तदानीं घटादीनां भानं सुषुप्त्यवस्थायां निर्विषयकत्वेन घटादीनामभानमित्युभयमप्युपपद्यतं एवेति भावः । तदानीमित्याद्याशङ्कां निराकरोति । .... तस्या इति । चित्संततेरित्यर्थः । प्रकाशत्वे ज्ञानत्वे । तथाच ज्ञानत्वस्य विषयिताव्याप्यत्वेन निर्विषयाचित्संततौ व्यापकविषयित्वाभावे व्याप्यज्ञानत्वाभावेपि सिद्ध एवेति भावः । निराकार चित्सन्ततौ ज्ञानत्वाभावे हेतुमुपपादयति । .... प्रमाणाभावादिति । व्यापकविषयिताभावेऽपि निराकारचित्संततेः ज्ञानत्वे प्रमाणाभावादित्यर्थः । प्रमाणाभावेऽपि ज्ञानत्वमास्तामित्यत आह ... अन्यथेति । प्रमाणाभावेऽपि निराकाराचित्संतेः ज्ञानत्वस्वीकार इत्यर्थः । — घटादीनामिति । तथाच विषयताशून्याचित्संततेः प्रमाणाभावेऽपि ज्ञानत्वस्वीकारे विषयिताशून्यघटपटादीनामपि ज्ञानत्वं स्यदित्याशयः । योगाचार्यमते विज्ञानव्यतिरिक्तवस्तुनोऽभावाद्घटादीनां ज्ञानत्वमिष्टमेवेति शङ्कते । .... नचेत्यादिना । वाच्यमितिपरेणान्वयः । नचेत्याद्याशङ्कां निराकरोति । .... घटादेरिति । तथाच अनुभवविषयस्य घटादेः ज्ञानत्वस्वीकारे विषयविषयिणोरभेदाद्विषयविषयिभावो न स्यादतो घटादीनां न ज्ञानत्वमिति भावः ॥



[मुक्तावली]

आकारविशेष एवायं विज्ञानस्येति चेन्न । किमयमाकारोऽतिरिच्यते विज्ञानात्, तर्हि समायातं विज्ञानव्यतिरिकेन । नातिरिच्यते चेत्तर्हि समूहालम्बने नीलाकारोऽपि पीताकारः स्यात् स्वरूपतो विज्ञानस्याविशेषात् ॥

(सुबोधिनी)

शङ्कते — आकारविशेष इति । तथाच ज्ञानाकारविशेषरूपस्य घटादेः ज्ञानत्वस्वीकारेऽपि नक्षतिरिति भावः ।

निरुक्ताशङ्कां निराकरोति .... नेति । किमयमिति । तथाच विज्ञानव्यतिरिक्ताकारस्य सिद्धत्वेन ज्ञानातिरिक्ते ज्ञानत्वाभ्युपगमो विरुद्धः स्यादितिभावः । आकारस्य विज्ञानानतिरिक्तत्वे दोषमुपपादयति ... नातिरिच्यतइति । तथाच नीलपीताविति संसूहासम्बने नीलाकारस्य पीताकारस्य च विज्ञानानतिरिक्तत्वेन विज्ञानस्य भेदाभावात् नीलाकारपीताकारयोः (नलिपातयोः) अभेदः स्यादितिभावः

नीलाकारपीताकारयोः (नीलपीतयोः) विज्ञानानतिरिक्तत्वेऽपि वि ज्ञानगतविशेषमादाय तयोर्भेद मुपपद्यत इत्यत आह — स्वरूपत इति । विषयगतभेदं विना विषयिणो विज्ञानस्य भेदाभावादित्य र्थः । तथाच विज्ञानस्याविशेषात् विज्ञानाकारयोश्च नीलाकारपीता कारयोश्च (नीलपीतयोश्च) भेदाभावात्तयो रभेदप्रसक्तिरिति पर्यव सिताशयः

[मुक्तावली]

अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न । नीलत्वादी नां विरुद्धानामेकस्मिन्नसमावेशात् । इतरथा विरोधावधारण स्यैव दुरुपपादत्वात् ॥

(सुबोधिनी)

नीलाकारपीताकारयोर्भेदेऽपि अपारमार्थिकनीलत्वपीतत्वयोः पारमार्थिक विज्ञानस्वरूपत्वासंभवात्, नीलत्वापीतत्वभेदेन नील पीतयोर्भेदः संभवती त्याशयेन शङ्कते ।....अपोहरूप इति । अपारमार्थिकस्वरूप इति तदर्थः । अपोहरूप इत्याद्याशंकां निरस्यति —नेति । नीलत्वादीनामिति । नीलत्वपीतत्वयो रसमानाधिकरणयोरेकत्र समवेशासंभवेन तत्पुरः सरेणापि नी लपीतयोर्भेदो न संभवतीत्याशयः । नीलत्वपीतत्वयोरेकत्र समा वेशे दोषमुपपादयति —इतरथेति । तथाच नीलत्वपीतत्वयोः सामानाधिकरण्यनिश्चयस्यैव संभवे न तयोरसामानाधिकरण्यरूप विरोधनिश्चयो न स्यादित्याशयः ॥

[मुक्तावली]

न वा वासनासंक्रमः संभवति । मातृपुत्रयोरपि वासनासं क्रमप्रसङ्गात् ॥



(सुबोधिनी)

समूहालंबने न नीलाकारः न वा पीताकारोऽभ्युपगम्यते किंतु चित्राकार एव इत्युक्तौ न पूर्वोक्तदोष इति मनसि कृत्वा मुख्यतया वासनासंक्रमं दूषयति ।...न वा वासना संक्रम इति । मातृपुत्रयोरपीति । तथाच यथा पूर्वविज्ञानेन जनितस्य संस्कारस्योत्तरविज्ञाने संक्रांतिः ततः स्मरणं तथैव मात्रनुभवजन्यसंस्कारस्यापि गर्भस्थपुत्रे संक्रांतिः स्यात्ततः मात्रानुभूतपदार्थस्मरणं पुत्रस्य स्यादिति भावः ॥

[मुक्तावली]

नचोपादानोपादेयभावो नियामक इति वाच्यम् । वासनायाः संक्रमासंभवात् । उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेन्न । तदु त्पादकाभावात्, चितामेवोत्पादकत्वे संस्कारानन्त्यप्रसङ्गः ॥

(सुबोधिनी)

—न चेति । वाच्यमिति परेणान्वयः । ननु किं तावदत्रोपादा नत्वं, समवायिकारणत्वं वा १, स्वकारणत्वे सति स्वोत्पत्तिकालीनोत्प त्तिकध्वंसप्रतियोगित्वं वा २, स्वभिन्नासमवेतत्वे सति स्वकारणत्वं वा ३, नाद्यः, भिन्नकालीनयोः विज्ञानव्यक्त्यो रुपादानोपादे यभावानुपपत्तेः । न द्वितीयः, योगाचार्यमते सर्वेषामपि क्षणि कत्वेन मातृपुत्रयोरपि क्षणिकतया पुत्रोत्पत्तिकालीनोत्पत्तिकध्वंस प्रतियोगित्वस्य पुत्रकारणत्वस्य च मातरि सत्वेन मातुरपि पु त्रोपादानत्वप्रसङ्गात् । न तृतीयः पक्षः कारणीभूत पूर्वघट व्यक्तेः स्वभिन्न (उत्तरघटव्यक्ति) भिन्नकपालेषु समवेततया स्वभि न्नासमवेतत्वाभावात् उत्तरघटव्यक्तिं प्रति पूर्वघटव्यक्तेरुपादान त्वानुपपत्तेः । नचेष्टापत्तिः, तन्मते उत्तरोत्तरघटादिव्यक्तिं प्रति पू र्वपूर्वघटादिव्यक्तीनामुपादानत्वाङ्गीकारादिति चेन्न । असहकृतत्वे स ति

कारणत्वस्योपादानत्वात्। तथा च पुत्रं प्रति मातुः कारणत्वे शुक्रशोणितरूपकारणान्तरस्यापेक्षा वर्तत इति मातुः शुक्रशोणितसहकृतत्वेन न मातुरुपादानत्वमतो न मात्रानुभूतस्य गर्भस्थपुत्रस्य स्मरणापत्तिः उपादानेनानुभूतस्यैव उपादेयस्य स्मरणसंभवादित्याशयः।

न चेत्याद्याशंकां निराकरोति .... वासनाया इति । तथाच वासनाया अपि तन्मते क्षणिकत्वेन उत्तरविज्ञाने संक्रमासम्भवात्, द्वि: क्षणाद्यवस्थायिनामेव संक्रमस्य दृष्टत्वादित्याशयः॥

संक्रमशब्दार्थ मन्यथोपपाद्य शंकते .... उत्तरास्मिन्निति । तथाच पूर्वास्मिन्विद्यमानस्योत्तरास्मिन्सक्रान्तिने संक्रमणशब्दार्थः किंतु उत्तरविज्ञाने उत्पत्तिरेव संक्रमः, तथाच वासनायाः क्षणिकत्वेऽपि न क्षतिरित्याशयः। निरुक्ताशंकां परिहरति .... तदुत्पादकाभावादिति। उत्तरविज्ञानेजायमानंसस्कारकारणाभावादित्यर्थः । तथाच कारणाभावादुत्तरविज्ञने संस्कारो न जायत इत्याशयः।

उत्तरविज्ञने संस्कारोत्पादकसामग्री मुपपाद्य शंकते .... चितामेवेति। पूर्वपूर्व विज्ञानानामेवोत्तरोत्तरविज्ञानेषु संस्कारजनकत्वेन न निरुक्तसंक्रामानुपपत्तिरित्याशयः। निरुक्ताशंका मपाकरोति .... संस्कारानन्त्यप्रसङ्ग इति । तथाच पूर्वविज्ञानेन उत्तरविज्ञाने संस्कारस्योत्पन्नत्वे तादृशसंस्कारस्यापि क्षणिकत्वेन तदुत्तरविज्ञाने तदसम्भवे न पुनः तादृशविज्ञानेन तदुत्तरविज्ञाने संस्कारस्योत्पत्तिः एवं तदुत्तरविज्ञाने पूर्वविज्ञानेन संस्कारस्योत्पत्तिरिति विज्ञानानन्त्येन संस्काराणामप्यानन्त्यप्रसक्ति रिति भावः॥

[मुक्तावली]

क्षणिकविज्ञानेष्वतिशयविशेषः कल्प्यत इति चेन्न। मानाभावात्, कल्पनागौरवात्॥



(सुबोधिनी)

शङ्कते — क्षणिकविज्ञानेष्विति। तथाच यादृशविज्ञानोत्तरं यादृशस्मृतिर्जायते तादृशस्मृतिप्रयोजक संस्कारजनकशक्तिविशेषः पूर्वविज्ञाने कल्प्यते। एवञ्च न संस्कारानन्त्यप्रसक्तिरिति भावः। निरुक्ताशङ्कां निराकरोति ।.... मानाभावादिति। तादृशशक्तिकल्पने प्रमाणाभावादित्यर्थः । .... कल्पनागौरवादिति । प्रमाणाभावेऽपि तादृशशक्तिकल्पने कल्पनागौरवमित्याशयः॥

इति बौद्धमतविमर्शनम्॥

[मुक्तावली]

कुर्वद्रूपत्ववादिमतखण्डनम्

एतेन क्षणिकशरीरेष्वेव चैतन्यं प्रत्युक्तं, गौरवातिशये मानाभावाच्च। बीजादावपि सहकारिसमवधानासमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वाकल्पनात्॥

इति कुर्वद्रूपत्ववादिमतखण्डनम्॥

(सुबोधिनी)

कुर्वद्रूपत्ववादिनां मतमाशङ्क्य निराकरोति । — एतेनेति । वक्ष्यमाणयुक्त्येत्यर्थः । कुर्वद्रूपत्ववादिनामयमाशयः‘ कुसूलस्थबीजादंकुरोत्पत्तेरसंभवात् क्षेत्रस्थबीजादंकुरोत्पत्तिदर्शनेन अंकुरत्वावच्छिन्नं प्रति कुर्वद्रूपत्वेन कारणत्वमङ्गीकर्तव्यं। कुर्वद्रूपत्वञ्च फलोपधायकक्षणिकबीजमात्रवृत्ति बीजत्वव्याप्यजातिविशेषः सच जातिविशेषोऽकुरजनकतावच्छेदकतया सिद्धः । तथाच कुसूलस्थबीजेषु तादृशजातेरभावान्न कुसूलस्थबीजादंकुरोत्पत्तिप्रसङ्गः । क्षेत्रस्थबीजेषु तादृशजातेः सत्वेन अंकुरोत्पत्तिरुपपद्यते। एवमेव शरीराणामेव चैतन्यं तेषां क्षणिकत्वेऽपि उत्तरोत्तरशरीरगतवासनोत्पाद (संस्कारोत्पाद)

प्रयोजकतावच्छेदक कुर्वद्रूपत्वरूपजातिविशेषस्वीकारात् क्षणिकोत्तर शरीरेषु निरुक्तजात्याश्रय पूर्वशरीरात्संस्कारो जायते तादृशसंस्कारेण स्मृत्युपपत्तिरिति क्षणिकशरीराणामेव चैतन्यमिति । क्षणिकशरीराणां चैतन्यानङ्गीकारे हेतुमुपपादयति । — गौरवादिति । क्षणिकशरीराणां चैतन्यवत्त्वमभ्युपगम्य तादृशशरीरेषु पूर्वपूर्वशरीराणामुत्तरोत्तर शरीरगतसंस्कारोत्पादप्रयोजकतावच्छेदकजातिमभ्युपगम्य उत्तरोत्तरशरीरेषु संस्कारोत्पत्त्यङ्गीकारे अनन्तसंस्कारतत्प्रागभावतद्ध्वंसकल्पने गौरवमिति भावः । फलमुखगौरवं नादोषायेत्यत आह । ...आतिशये मानाभावाच्चेति । एतादृशजातिविशेषकल्पने प्रमाणाभावादित्यर्थः ।

ननु अङ्कुरोत्पादप्रयोजकतावच्छेदकतया तादृशजातिविशेषोऽङ्गीक्रियतामित्यत आह । — बीजादावपीति । तथाच जलसेकादिरूपसहकारिकारणान्तरसमवधानेनैव क्षेत्रस्थ बीजेभ्योऽङ्कुरोत्पत्तिः कुसूलस्थबीजेषु सहकारिकारणानुपधानेन कुसूलस्थबीजेभ्यो नांकुरोत्पत्तिरित्यनेनैव सामञ्जस्ये क्षेत्रस्थबीजेषु कुर्वद्रूपत्व कल्पनं व्यर्थमित्याशयः ॥

इदमत्रावधेयं कुर्वद्रूपत्ववादिनां मते यत्सत् तत्क्षणिकमिति व्याप्त्या निखिलपदार्थानां क्षणिकत्वमभ्युपगतं तन्न सङ्गच्छते स एवायं घट इति प्रत्यभिज्ञया पूर्वकालीन घटस्योत्तरकालीनघटस्य चाभेदावधारणात् ।

नच पूर्वकालीन घटवृत्तिजातीयत्वमेतत्कालीने घटे भासत इति वाच्यम् । जातेरपि तन्मते क्षणिकत्वाभ्युपगमादिति ॥

इतिकुर्वद्रूपत्ववादि मतखण्डनम् ।



[ मुक्तावली ]

## अथ वेदान्तिमत विमर्शनम् ।

अस्तु तर्हि क्षणिकविज्ञाने गौरवात् नित्यविज्ञानमेवात्मा ,'आविनाशी वारेऽयमात्मा', "सत्यं ज्ञानमनन्तं ब्रह्म,, इत्यादिश्रुतेश्चेति चेत् ॥

( सुबोधिनी )

## अथ वेदान्तिमत विमर्शनं ।

वेदान्ती शङ्कते — अस्तु तर्हीति । क्षणिकविज्ञानस्यात्मत्वे गौरवस्य जागरूकतया नित्यविज्ञानमेवात्मा तस्य च नित्यत्वेन अनुभूतघटादीनां संस्कारो यावत्स्मरणं तावदनुवर्तत इति न संस्कारानन्त्यकल्पनादिप्रयुक्तगौरमिति भावः
आत्मनोनित्यत्वे श्रुतिं प्रमाणयति .... अविनाशीवेति । मैत्रेयीं प्रति याज्ञवल्क्येनोपदिष्टं अरे मैत्रेयि अयमात्मा अविनाशी नित्य इत्यर्थः । आत्मनो नित्यत्वमुपपाद्य विज्ञानस्वरूपत्व मुपपादयति ...सत्यंज्ञानमिति । तथाच श्रुतिप्रमाणेन आत्मनो नित्यत्वं विज्ञानरूपत्वं सिद्धमिति भावः ॥

[ मुक्तावळी ]

न । तस्य सविषयत्वासंभवस्य दर्शितत्वात्, निर्विषयस्य ज्ञानत्वे मानाभावात्, सविषयकत्वस्याप्यननुभवादतो विज्ञानादभिन्नो नित्य आत्मेति सिद्धम् ॥

(सुबोधिनी)

वेदान्तिमतं परिहरति । .... नेति । ...तस्येति । क्षणिकविज्ञानस्य जगद्विषयकत्वं वा यत्किंचिद्विषयकत्वं वेति विकल्प्य उभयथापि न संभवतीति प्रदर्शितं, तथा च प्रकृतेपि नित्यविज्ञानस्य

जगद्विषयकत्वं वा १, यत्किञ्चिद्विषयकत्वं वा, २, जगद्विषयकत्वे जीवस्य सर्वज्ञत्वापत्तिः, यत्किञ्चिद्विषयकत्वे विनिगमनाविरहेण घटपटादिनिखिलवस्तुविषयकत्वं वा निर्विषयकत्वं वा स्यादित्याशयः।

--निर्विषयस्येति। तथा च सुषुप्तौ ज्ञानस्य सविषयकत्वं वा निर्विषयकत्वं वा सविषयकत्वे सुषुप्तावपि विषयभानप्रसक्त्या सुषुप्त्यभावप्रसक्तिः। निर्विषयत्वे निर्विषयस्य ज्ञानत्वे प्रमाणाभावेन सुषुप्तौ आत्मन अभावप्रसक्तिरित्याशयः। पर्यवासताशयमुपपादयति। —अत इति। तथा च विज्ञानादिव्यतिरिक्तः आत्माऽभ्युपगन्तव्य इति भावः।

[मुक्तावळी]

"सत्यं ज्ञानमि,,ति ब्रह्मपरं, जीवे तु नोपयुज्यते, ज्ञानाज्ञानसुखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः, अन्यथा बन्धमोक्षव्यवस्थानुपपत्तेः। योपीश्वराभेदबोधको वेदः सोऽपि तदभेदेन तदीयत्वं प्रतिपादयंस्तीति तदभेदभावनमेव यतितव्यमिति वदति। अत एव "सर्वे आत्मानः समर्पिताः,, इति शृयते॥

(सुबोधिनी)

आत्मनो ज्ञानभिन्नत्वे सत्यं ज्ञानमितिश्रुतेः कावा गतिरित्यत आह। .... सत्यमिति। तथा च सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र सत्यादिशब्दनां स्वसमभिव्याहृतब्रह्मशब्देन सामानाधिकरण्यस्योपपादनीयतया ज्ञानं ब्रह्मेत्यर्थो लभ्यते एवञ्च सत्यं ज्ञानमिति श्रुतिः ब्रह्मपरैव, नतु जीवपरेति भावः।

ननु जीवाना मीश्वराभिन्नत्वेन सत्यमित्यादि श्रुतिः ब्रह्मपरैव नतु जीवपरेत्यभिधानमसङ्गतमित्यत आह .... ज्ञानाज्ञानसुखित्वादिभिरिति। आदिना दुःखित्वादिपरिग्रहः। तथाच कस्यचिद्ज्ञानं, कस्यचिदज्ञानं, कस्याचिद्दुःखित्वं कस्यचित्सुखित्वमिति ज्ञानादिभिः जीवानामेव भेदसिद्धौ जीवेश्वरयोः भेदः सुतरां सिद्ध एवेति भावः॥

जीवेश्वरयोरभेदस्वीकारे दोषमपिदर्शयति .... अन्यथेति। जीवेश्वरयोरभेदाङ्गीकार इत्यर्थः। तथा च जीवस्येश्वररूपत्वेन ईश्वरस्य नित्यमुक्ततया जीवस्यापि नित्यमुक्तत्वेन कस्यचिद्बन्धः कस्याचिन्मोक्ष इति व्यवस्था न स्यादिति भावः।

इदमुपलक्षणं। जीवानामीश्वराभिन्नत्वे सर्वदा जीवानां मुक्तत्वेन संसारः कस्य, संसाराभावे कुतः शास्त्राध्ययनमिति विचारणीयम्॥

जीवेश्वरयोर्भेदस्वीकारे जीवेश्वरयोरभेदबोधक "तत्त्वमसि,, इत्यादिश्रुतीनां का गतिरित्यत आह। — योऽपीति॥

[मुक्तावळी]

मोक्षदशायामज्ञाननिवृत्तावभेदो जायत इत्यपि न। भेदस्य नित्यत्वेन नाशासंभवात्। भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव। न च द्वित्वमपि नश्यतीति वाच्यम्। तव निर्धर्मिके ब्रह्मणि सत्यत्वाभावेऽपि सत्यस्वरूपं तदितिवत् द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात्। मिथ्यात्वाभावोऽधिकरणात्मक तत्र सत्यत्वमिति चेत्, एकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमित्यप्युच्यताम्। प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इति वदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात्। योऽपि तदानीमभेदप्रतिपादको वेदः सोपि निर्दुःखत्वादिना साम्यं प्रतिपादयति संपदाधिक्ये पुरोहितोयं राजा संवृत्त इति वत्। अत एव "निरञ्जनः परमं साम्यमुपैतीति,, शृयते॥

(सुबोधिनी

मोक्षदशायां जीवानां ईश्वरेणाभेदो जायत इति वदतामेकदेशिना मत मुपन्यस्यति — मोक्षदशायामिति।। एकदे

शिनां मतं निरस्यति ।— भेदस्येति । भेदस्यानित्यत्वमभ्युपगम्या
पि निरुक्तमतमपाकरोति । .... भेदनाशेऽपीति । एकदेशी शङ्क
ते । .... नचेति । बाध्यमिति परेणान्वयः । तथाच व्यक्तिद्व
यगतभेदनाशे द्वित्वमपि नश्यति एवं सति मोक्षदशायां जीवेश्व
रयोरभेद उपपद्यत इति भावः । नचेत्याद्याशङ्कां परिहरति ।
... तत्रेति । नन्वीश्वरानिष्ठानिर्धर्मिकत्वं स्वाभिन्नधर्मशून्यत्वं सत्य
त्वञ्च मिथ्यात्वाभाव एव अभावस्याधिकरणात्मकत्वेन ईश्वरनिष्ठ
मिथ्यात्वाभावरूपसत्यत्वमीश्वररूप मेवेति नानुपपत्तिरिति शंकते ।
... मिथ्यात्वाभाव इति । मिथ्यात्वाभाव इत्याद्याशंकां परिहरति ।
... एकत्वाभाव इति । ननु कथमेकत्वाधिकरणे तदभावरूपाद्वित्व
मत आह । .... प्रत्येकमिति । तथाच पृथिवी जलयोर्नगन्ध
इति वत् जीवेश्वरयोर्नैकत्वमिति प्रतीतेर्जागरूकतया एकत्वाधिकर
णे एकत्वाभावोऽपि वर्तत एवेति भावः ॥

इदमत्रावधेयं । व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशवृत्ति
निष्ठप्रतियोगिताकात्यन्ताभावोऽङ्गीकृतो नवेति विचारणीयम् ॥

ननु मोक्षदशायां जीवेश्वरयोरभेदोत्पत्ति प्रतिपादिकायाः "ब्रह्मवि
द्ब्रह्मैव भवती„ ति श्रुतेः कागतिरित्यत आह । — योऽपीति ।
जीवस्य मोक्षदशायां ईश्वरसाम्ये श्रुतिं प्रमाणयति । — अत
एवेति ॥

[ मुक्तावली ]

ईश्वरोऽपि न ज्ञानसुखात्मा किन्तु ज्ञानाद्याश्रयः "नित्यं वि
ज्ञानमानन्दं ब्रह्म„ इत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः "यःस
र्वज्ञः स सर्ववित्„ इत्याद्यनुरोधात् । आनन्दमित्यस्याप्यानन्द
वदित्यर्थः । अर्श आदित्वान्मत्वर्थीयच्प्रत्ययः । अन्यथा पुंलिङ्ग



पत्तेः । आनन्दोऽपि दुःखाभावे उपचर्यते भाराद्यपगमे सु
खी संवृत्तोऽहमिति वत् । अस्तु वा तस्मिन्नानन्दो न त्वसावानन्दः
असुखमिति श्रुतेः„ । न विद्यते सुखं यस्येति कुतो नार्थ इति
चेन्न । क्लिष्टकल्पनापत्तेः प्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच्प्र
त्ययविरोधाच्चेति संक्षेपः ॥

(सुबोधिनी

ईश्वरोपीत्याद्यारभ्य असुखमिति श्रुतेरित्यन्तं स्पष्टार्थः ।शङ्कते ।
.. न विद्यत इति । सुखाभाववानित्यर्थः । कुतः कल्पनीय
इत्याशयः । निरुक्ताशंकां परिहरति । .... क्लिष्टकल्पना पत्तेरिति ।
बहुव्रीह्याश्रयणे लक्षणाकल्पनमेव क्लेश इति भावः ॥

ननु समानविभक्तिकसुखब्रह्मपदयोः सामानाधिकरण्यस्य वाच्य
तया नसुखमसुखमिति तत्पुरुषस्य त्वयाप्याश्रयणीयतया नञः
सर्वथाति लक्षणा अभ्युपगन्तव्येत्यत आह । .... प्रकरणविरोधा
दिति । प्रत्ययविरोधाच्चेति । आनन्दशब्दस्य नित्यपुंलिङ्गत्वेन म
त्वर्थीयाच् प्रत्ययं विना आनन्दमिति रूपस्यानुपपत्तेरिति भावः ॥

इति वेदान्तिमतविमर्शनम् ॥

[ मुक्तावली ]

सांख्य मतखण्डनम्

एतेन "प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः किन्तु
चेतनः„ कार्यकारणयोरभेदात् कार्यनाशे सति कार्यरूपतया त
स्याऽपि न स्यादित्यकारणत्वं तस्य । बुद्धिगतचैतन्याभिमाना
न्यथानुपपत्त्या तत्कल्पनम् । बुद्धिश्च प्रकृतेः परिणामः सैव मह
दन्तःकरणमित्युच्यते तत्सत्वासत्वाभ्यां पुरुषस्य संसारापवर्गौ ॥

(सुबोधिनी)

अथ सांख्यमतखण्डनम्

सांख्यमतखण्डनाय प्रथमतः तन्मतमुपन्यस्यति । ..., एतेनेति ।
वक्ष्यमाणयुक्त्येत्यर्थः । स्वतन्त्रप्रधानकारणवादिनां कापिलानामयमा
शयः । सत्वरजस्तमोगुणात्मिका प्रकृतिः, तेषांगुणानां यदा सा
म्येनावस्थितिः तदा प्रकृतिः प्रधानशब्देन व्यवह्रियते, तस्य गु
णवैषम्ये सृष्ट्यादयः, तादृशप्रधानं पुरुषनिरपेक्षं स्वतन्त्रमेव जग
त्स्रष्टृ, पुरुषस्तु पुष्करपलाशवन्निर्लिप्तः चेतनः केवलभोक्तैवेति
ननु पुरुषस्यैव कर्तृत्वमस्त्वित्यत आह । — कार्यकारणयोरिति ।
तथाच कार्यकारणयोरभेदात् पुरुषस्य जगत्कर्तृत्वे पुरुषस्य जग
तश्चाभेदेन प्रलयकाले जगतो नाशे घटपटादिनाशे वा तत्स्वरूप
पुरुषस्यापि नाशः स्यादिति पुरुषस्य कारणत्वमेव नास्तीत्याशयः ॥
नन्वकारणस्य पुष्करपलाशवन्निर्लिप्तस्य पुरुषस्य सत्वे किं प्र
माणमित्यत आह । ····बुद्धिगतेति । तथा च अचेतन रूपायां बुद्धौ
यो चैतन्यभ्रमः दृश्यते सचान्यत्रप्रसिद्धचैतन्यमादायैव समर्थनी
यः चेतनस्य पुरुषस्यानभ्युपगमे चैतन्यस्य प्रसिद्धिरेव न सं
भवतीति कथं बुद्धौ चैतन्यारोप इति बुद्धौ चेतन्यारोपार्थं चै
तन्याश्रयपुरुषकल्पनमिति भावः । बुद्धिर्नाम केत्यत आह । ....बु
द्धिश्चेति ॥ प्रकृतेः प्रधानस्य परिणामो बुद्धिरित्यर्थः ॥ तादृश
बुद्धेर्नामान्तरमपि दर्शयति —सैवेति ॥ पुरुषस्य कर्तृत्वाभावे पु
रुषे धर्माधर्मयोरुत्पत्त्यसंभवेन धर्माधर्माधीनसुखदुःखाद्युत्पत्त्यसं
भवात् दुःखध्वंसरूपमोक्षः पुरुषस्य न स्यादित्यत आह ॥ —तत्सत्व
सत्वाभ्यामिति ॥ बुद्धिसत्वे पुरुषस्य बन्धः, बुद्ध्यसत्वे मोक्ष
इत्यर्थः ॥



[मुक्तावली]

तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्ब
न्धः । पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात् ॥

(सुबोधिनी)

बुद्धितो ज्ञानस्य भेदमुपपादयति । .... तस्या एवेति । ननु
बुद्धेः कर्तृत्वे पुरुषस्य चेतनत्वे कथं पुरुषे कर्तृत्वाभिमानः कथं
वा बुद्धौ चेतनत्वाभिमान इत्यत आह । ...पुरुष इति । तथा
च बुद्धिपुरुषयोर्भेदाग्रहात पुरुषनिष्ठचैतन्यस्य बुद्धौ बुद्धिनिष्ठ
कर्तृत्वस्य पुरुषेऽभिमानः (भ्रमः) इति भावः

[मुक्तावली]

ममेदं कर्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया त
त्प्रतिबिंबादतात्विको दर्पणस्येव मुखोपरागः १ । इदमिति विष
योपरागः इन्द्रियप्रणालिकया परिणतिभेदस्तात्विको निश्वासाभिहत
दर्पणस्येव मालिनिमा २ । कर्तव्य मिति व्यापारांशः ३। तेनांशत्रयवती
बुद्धिः । तत्परिणामेन ज्ञानेन पुरुषस्यातात्विकः संबन्धः दर्पणस्य
मलिनिम्नेव मुखस्योपलब्धिरुच्यते । ज्ञानवत्सुखदुःखेच्छाद्वेष धर्मा
धर्मा अपि बुद्धेरेव । कृतिसामानाधिकरण्येन प्रतीतेः । नच बु
द्धिश्चेतना परिणामित्वादिति मतमपास्तम् ॥

(सुबोधिनी)

बुद्धितः ज्ञानस्य भेदप्रदर्शनार्थं बुद्धेरंशत्रयं दर्शयति — म
मेदमित्यादिना । तथाच दर्पणस्य मुखप्रतिबिंबान्मुखसंम्बन्धः
नतु साक्षान्मुखसंबन्धः इति यथा दर्पणस्य मुखसंबन्धः
अतात्विकः एवमेव ममेदं कर्तव्यमिति पुरुषसंम्बंधः बुद्धेः स्वच्छतया
तत्र पुरुषस्य प्रतिबिंबितत्वेन भेदाग्रहात् बुद्धिपुरुषयो रेकत्वाभि

मानः पुरुषोपराग अतात्विक इति भावः ॥ द्वितीयांश मुपपादयति — इदमिति । तत्र दृष्टान्तमुपपादयति .... निश्वासाभिहत इति । तथाच निश्वासाभिहत दर्पणस्य मालिन्यं यथा तात्विकं तथैव इन्द्रि यद्वारा विषयाकारेण बुद्धेः परिणततया विषयाकाराकारित बुद्धि परिणामरूपविषयसंबंधस्य बुद्धिवनिष्टत्वेन [illegible]ः विषयसंम्बन्धः तात्विकइति भावः ॥

तृतीयांशमुपपादयति -- कर्तव्यामिति । बुद्धेः निरुक्तांशत्रयवैशि ष्टयमुपपादयति .... तेनेति । पर्यवसिताशयमुपपादयति ... तत्प रिणामेनेति । तथाच पृष्ठलग्नमालिन्येन यथा दर्पणे अतात्विकः मु खोपलब्धिः तथैव बुद्धिपरिणामभूतेन ज्ञानेन पुरुषस्या तात्विकः सं म्बन्ध इतिभावः । ज्ञानादीनां बुद्धिपरिणामरूपत्वे ज्ञानादयः क स्य धर्मा इत्यत आह । ...ज्ञानसुखेति । ज्ञानादीनां बुद्धिधर्मत्वे हे तुमुपपादयति । कृतिसमानाधिकरण्येनेति । तथाच कृतेः बुद्धि निष्ठतया तत्सामानाधिकरण्येन प्रतीयमानज्ञानादीनामपि बुद्धिधर्म त्वमेवेत्याशयः ॥ बुद्धेश्चेतनाभिन्नत्वं साधयति .... नच बुद्धिरि त्यादिना ॥

[ मुक्तावली ]

कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेः तद्भिन्ने मानाभावाच्च । चेतनोऽहं करोमीति चैतन्यांशे भ्रम इति चेत्, कृत्यंशेऽपि किं नेष्यते अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावो ऽनित्यत्वे तत्पूर्वमसंसारापत्तिः ॥

(सुबोधिनी)

सांख्यमतं परिहरिति । ... कृत्यदृष्टभोगानामिवेति । तथाच यथा कृत्यदृष्टभोगानां सामानाधिकरण्यप्रतीतिः एवमेव चैतन्यस्या



पि कृत्यादिभिः सामानाधिकरण्यप्रतीतेः चैतन्याश्रयपुरुषनिष्ठगु णा एव कृत्यादयः न तु बुद्धिगतगुणा इति कर्तैव चेतनः, कर्तृ भिन्ने चेतने प्रमाणं नास्तीत्याशयः । ....शङ्कते चेतन इति । तथा च कर्तृत्वाश्रयो न चेतनः जन्यधर्माश्रयत्वादित्यनुमानेन चेतने कर्तृत्वबाधेन चेतनोहं करोमीति प्रतीतिः चैतन्यांशे भ्रम इत्य ङ्गीकार्यः । एवञ्च कृत्याश्रयीभूता बुद्धिरेवेत्याशयः । उक्ताशङ्कां परिहरिति .... कृत्यंशेपीति । बुद्धिः कर्तृत्वाभाववती जन्यधर्माश्र यत्वादित्यनुमानेन बुद्धेः कर्तृत्वबाधेन बुद्धेः कर्तृत्वावगाहिप्रती तिरेव कृत्यंश एव भ्रम इति कृतिः चेतननिष्ठैवेति भावः ॥ .... अन्यथेति । कर्तृचेतनयोर्भेदाङ्गीकार इत्यर्थः । — बुद्धेर्नित्यत्व इति । तथा च कर्तृचेतनयो र्भेदाङ्गीकारे चेतनस्य बुद्धिसत्वासत्वा भ्यावेव बन्धमोक्षयोर्वाच्यतया बुद्धेर्नित्यत्वे नित्यस्य नाशासंभवे न पुरुषस्य सर्वदा बन्ध एव स्यदिति भावः । बन्धनिवृत्तये बु द्धेरनित्यत्वकल्पने दोषमुपपादयति — अनित्यत्व इति । बुद्धेर नित्यत्वे अनित्यत्वभावस्य जन्यतया तदुत्पत्तेः प्राक् तदसत्वेन बुद्ध्यु त्पत्तेः प्राक् पुरुषस्य संसारो न स्यादिति भावः । इदमुपलक्षणम् । बुद्धेरनित्यत्वपक्षे बुद्ध्युत्पत्तेः प्राक् पुरुषस्यादृष्टादिकारणाभावात् कदापि संसारो न स्यदिति ॥

[मुक्तावली]

नन्वचेतनायाः प्रकृतेः कार्यत्वात् बुद्धेरचेतनत्वं कार्यकार णयोस्तादात्म्यादिति चेन्न । असिद्धेः, कर्तुः जन्यत्वे मानाभावात् वीतरागजन्मादर्शनादनादित्वम् । अनादिर्नाशासंभवान्नित्यत्वम् , त त्किं प्रकृत्यादिकल्पनेन ॥

(सुबोधिनी)

शङ्कते .... नन्विति। यथा मृद्घटयोः कार्यकारणयो स्तादात्म्यमे वमेव बुद्धेः प्रकृतिकार्यत्वेनाचेतनत्वमित्यर्थः। उक्ताशङ्कां परिहरति .... असिद्धेरिति। बुद्धेः प्रकृतिकार्यत्वासिद्धेरित्यर्थः। यत्र यत्र कर्तृत्वं तत्र जन्यत्वमितिव्याप्त्या बुद्धेर्जन्यत्वे परिशेषात्प्रकृतिजन्यत्वं स्यादित्यतआह .... कर्तुरिति। कर्तृत्वस्य जन्यत्वव्याप्यत्वे अनुकूलत र्काभावादित्याशयः अपि तु यत्र कर्तृत्वं तत्रानादित्वमिति व्याप्तिप्रति पादकन्यायसूत्रमपि वर्ततइति सूत्रमपि दर्शयति .... वीतरागेति। इच्छापूर्वकजन्मदर्शनादित्यर्थः॥ अनादेरिति। भावस्येत्यादिः। त थाचानादिभावस्य नाशासम्भवेन कर्तुर्नित्यत्वमितिभावः॥ पर्यवसि ताशयमुपपादयति — तत्किमिति।

[मुक्तावली]

नच "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहंकार विमूढात्मा कर्ताहमिति मन्यते,, इत्यनेन विरोधइति वाच्यम्। प्रकृ तेरदृष्टस्यैव गुणै रदृष्टजन्यैरिच्छादिभिः, कर्ताहमेवेत्यस्य तदर्थत्वात्। "तत्रैवंसति कर्तारमात्मानं केवलंतुयः" इत्यादि वदताभगवता प्रकटीकृ तोयमुपरिष्टादित्याशय इतिसंक्षेपः॥

(सुबोधिनी)

शङ्कते .... नचेति वाच्यमितिपरेणान्वयः। स्पष्टोर्थः॥ समाध त्ते — प्रकृतेरिति। स्पष्टोर्थः॥

इतिसांख्यमतखण्डनम्॥

[मुक्तावली]

**का॥ धर्मा धर्माश्रयोध्यक्षो विशेष गुणयोगतः॥४९॥**
**प्रवृत्त्याद्यनुमेयोयं रथगत्येव सारथिः।**



मु॥ धर्माधर्मेति। आत्मेत्यनुषज्यते शरीरस्य तदाश्रयत्वे देहांतरकृ तकर्मणां देहांतरे भोगानुपपत्तेः। विशेषेति योग्यविशेषगुणस्य ज्ञानसु खादेः सम्बन्धेनात्मनः प्रत्यक्षत्वं सम्भवति न त्वन्यथाऽहं जानेऽहं करोमीत्यादि प्रतीतेः॥ ४९॥

आत्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते प्रवृत्तिरत्र चेष्टा ज्ञानेच्छ प्रयत्नादीनां देहेऽभावस्योक्तप्रायत्वात् चेष्टायाश्च प्रयत्नसाध्यत्वा चेष्ट या प्रयत्नवानात्माऽनुमीयत इति भावः॥

(सुबोधिनी)

— धर्माधर्मेतीति। आत्मेत्याद्यारभ्य आत्मानुमीयत इति भावइत्यं तं स्पष्टोर्थः॥

[मुक्तावली]

**का॥ अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः॥५०॥**

मु॥ अहङ्कारस्येति। अहङ्कारोऽहमिति प्रत्ययस्तस्या श्रयो विष य आत्मा न शरीरादिरिति। मन इति। मनोभिन्नेन्द्रियजन्यप्रत्यक्ष विषयो मानसप्रत्यक्षविषयश्चेत्यर्थः। रूपाद्यभावेनेन्द्रियान्तरायो- ग्यत्वात्॥ ५०॥

(सुबोधिनी)

अहंकारस्येतीति। अहंकारशब्दार्थ मुपपादयति।—अहंकार इति प्रत्यक्ष इति। ज्ञानमित्यर्थः तच्च प्रत्यक्षात्मकं आश्रयशब्दस्य अधि करणे प्रसिद्धतया अहमिति प्रत्यक्षाधिकरण मात्मेत्यर्थो लभ्यते त- थाच आत्मनः सद्भावे प्रत्यक्षप्रमाणं न संभवतीत्याशंका जायेतेति तादृशाशंकानिवृत्त्यर्थ माश्रयपदस्य विषयार्थकत्व मुपपादयति। आ श्रयो विषय इति। एतेनात्मनः सद्भावे प्रत्यक्षप्रमाणं दर्शितम्। अहमिति प्रतीतिविषयत्वं शरीरादीना मेवास्तामित्यत आह॥ .... ने.

ति। मन इतीति॥ मनोमात्रस्य गोचर इत्यत्र मात्रशब्दार्थ मुपपाद यति। —मनोभिन्नेन्द्रियेति। आत्मनः मनोभिन्नेन्द्रियजन्यप्रत्यक्षा विषयत्वे हेतुमुपन्यस्यति॥ —रूपाद्यभावेनेति॥ अत्रायमाशयः; ब. हिरिन्द्रियजन्यद्रव्यविषयक लैकिकसाक्षात्कारत्वावच्छिन्नं प्रति महत्त्व समानाधिकरणोद्भूतरूपस्य कारणत्वेन आत्मनि उद्भूतरूपाभा वान्न ह्यात्मनो बहिरिन्द्रिय जन्यप्रत्यक्षविषयत्वमिति॥

[मुक्तावली]

का॥ विभुर्बुध्यादिगुणवान्।

मु॥ विभुरिति॥ विभुत्वं परममहत्परिमाणवत्त्वं, तच्च पूर्वमुक्त मपि स्पष्टार्थ मुक्तम्॥ बुद्ध्यादीति॥ बुद्धिसुखदुःखेच्छादयः चतुर्दशगुणाः पूर्वोक्ताः वेदितव्याः॥

(सुबोधिनी)

विभुरितीति॥ विभुत्वमित्यादि उक्तमित्यन्तं स्पष्टोऽर्थः॥ बु. द्धिसुखदुःखेच्छादय इति॥ आदिना द्वेषप्रयत्नसंख्यापरिमाणपृथ. क्त्वसंयोगविभागभावनाख्यसंस्कारधर्माधर्माणां ग्रहणं बोध्यम्॥

[मुक्तावली]

का॥ बुद्धिस्तु द्विविधा मता।
अनुभूतिः स्मृतिश्च स्यादनुभूति श्चतुर्विधा॥ ५१

मु॥ अत्रैव प्रसंगाद्बुद्धेः कतिपयं प्रपंचं दर्शयति॥ बुद्धिस्त्विति द्वैविध्यं व्युत्पादयति – अनुभूतिरिति॥ अनुभूतिश्चतुर्विधेति॥ एतासां चतसृणां करणानि चत्वारि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि,, इति न्यायसूत्रोक्तानि वेदितव्यानि॥ ५१॥

(सुबोधिनी)

अत्रैवेत्यादि स्पष्टोर्थः॥



[मुक्तावली]

का॥ प्रत्यक्षमप्यनुमिति स्तथोपमितिशब्दजे॥

मु॥ प्रत्यक्षमिति॥ इन्द्रियजन्यं ज्ञानं प्रत्यक्षं॥ यद्यपि मनोरूपेन्द्रि यजन्यं सर्वमेव ज्ञानम्, तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने कारणत्वं तत्प्रत्यक्षमिति विवक्षितम्, ईश्वरप्रत्यक्षन्तु न लक्ष्यम् "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्य मव्यभिचारिव्यवसायात्मकं प्रत्यक्षं,, इतिसूत्रे तथैवोक्तत्वात्॥

(सुबोधिनी)

अनुभूतिश्चतुर्विधेत्यादिना अनुभवस्य यच्चातुर्विध्यं प्रतिज्ञातं त देव मूले प्रदर्शयति॥ प्रत्यक्षमपीति॥ प्रत्यक्षं, अनुमितिः; उपमितिः, शाब्दबोध इत्यनुभवश्चतुर्विध इत्याशयः॥ तत्र प्रत्यक्षात्मकज्ञानस्य लक्षणमुपपादयति॥ इन्द्रियजन्यमिति॥ इन्द्रियजन्यत्वे सति ज्ञानत्वं प्रत्यक्षस्य लक्षणं, चक्षुरादीन्द्रियजन्यत्वस्य ज्ञानत्वास्य च अयं घट इत्याद्याकारकप्रत्यक्षे विद्यमानत्वाल्लक्षणसंगतिः॥ ध्वंसं प्रति प्रतियोगिनः कारणत्वेन चक्षुरिन्द्रियध्वंसे चक्षुरिन्द्रियजन्यत्वस्य सत्त्वेनातिप्रसंग इति ज्ञानत्वनिवेशः, तथा च ध्वंसे ज्ञानत्वाभावान्नातिप्रसंगः॥ ज्ञानत्वस्यानुमित्यादौ सत्त्वेनातिप्रसंग इतीन्द्रिय जन्यत्वनिवेशः॥ .... शंकते। यद्यपीति॥ अतज्जन्यस्यैव ज्ञानस्याभावादितिन्यायेन निखिलज्ञानानां मन इन्द्रियजन्यत्वेन अनुमित्यदिषु मनइन्द्रियजन्यत्वस्य ज्ञानत्वस्यच सत्त्वेनातिप्रसंग इत्याशयः॥ समाधत्ते॥ —तथापीति॥ अस्यायमाशयः, इन्द्रियजन्यत्वं चेदिन्द्रियनिष्ठजनकतानिरूपितजन्यतावत्त्वं तत्रेन्द्रियनिष्ठजनकतायां इन्द्रियत्वावच्छिन्नत्वविशेषणं निवेशनीयं तथा च ज्ञानसामान्यं प्रति मनसः मनस्त्वेनैव कारणत्वं नत्विन्द्रियत्वेनेति इन्द्रियत्व

च्छिन्नाजनकतानिरूपितजन्यत्वस्य ज्ञानादिष्वसत्त्वान्नातिप्रसङ्ग इति ॥ नन्वीश्वरप्रत्यक्ष इन्द्रियजन्यत्वाभावादव्याप्तिरित्यत आह ॥ .... ईश्वरप्रत्यक्षेत्विति । तथा च तस्यालक्ष्यतया न तत्राव्याप्तिरिति भावः ॥ निरुक्तप्रत्यक्षसामान्य लक्षणे सूत्रं प्रमाणयति ॥ इन्द्रियार्थेति ॥

[मुक्तावली]

अथ वा ज्ञानाकरणकं ज्ञानं प्रत्यक्षं, इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् । अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य शब्दबोधे पदज्ञानस्य स्मरणेऽनुभवस्य च हेतुत्वान्न तत्र तत्रातिव्याप्तिः ॥

(सुबोधिनी)

ईश्वरप्रत्यक्षमपि प्रत्यक्षसामान्यलक्षणलक्ष्यमेवेत्याशयेन प्रत्यक्षस्य लक्षणान्तरमुपपादयति — अथवेत्यादिना । निरुक्तलक्षणस्येश्वरप्रत्यक्षेऽपि सत्त्वान्नाव्याप्तिरित्याशयं प्रकटयति । इदमिति । ज्ञानं करणं येषां तानि ज्ञानकरणकानि तद्भिन्नं ज्ञानाकरणकमिति । ज्ञानकरणकज्ञानानि प्रतिपादयति । — अनुमितावि ति तथाचानुमितेः व्याप्तिज्ञानकरणकत्वेन; उपमितेः सादृश्यज्ञानकरणकत्वेन; शाब्दबोधस्य शब्दज्ञानकरणकत्वेन, स्मृतेरनुभावज्ञानकरणकत्वेन च अनुमित्युपमितिशब्दज्ञानस्मृतयः ज्ञानकरणकाः तद्भिन्नत्वस्य ज्ञानत्वस्य च इन्द्रियजन्यप्रत्यक्षे ईश्वरप्रत्यक्षेच सत्वाल्लक्षणसमन्वय अनुमित्यादावसत्त्वन्नातिव्याप्तिरिति भावः

[मुक्तावली]

परामर्शजन्यं ज्ञानमनुतिः । यद्यपि परामर्शप्रत्यक्षादिकं परामर्शजन्यं तथापि परामर्शजन्यं हेत्वविषयकं यद्ज्ञानं तदेवानुमितिः । न च कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम् । तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ॥



(सुबोधिनी)

अनुमितेर्लक्षणमुपपादयति .... परामर्शजन्यमिति । परामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणमित्यर्थः । शङ्कते । —यद्यपीति । प्रत्यक्षे विषयस्य कारणत्वेन परामर्शजन्यत्वस्य वह्निव्याप्यधूमवान्पर्वत इति परामर्शवानहमिति प्रत्यक्षे सत्त्वात्तत्रातिव्याप्तिरित्याशयः । निरुक्तातिव्याप्तिं वारयति । ....तथापीति । परामर्शजन्यत्वे सति हेत्वविषयकत्वे सति ज्ञानत्वं अनुमितेर्लक्षणं तथा च परामर्शविषयकप्रत्यक्षे हेत्वविषयकत्वाभावान्नातिव्याप्तिरिति भावः । ध्वंसं प्रति प्रतियोगिनः कारणत्वेन परामर्शध्वंसेऽतिव्याप्तिवारणाय ज्ञानत्वनिवेशः । तथाच ध्वंसे ज्ञानत्वाभावान्नातिप्रसङ्गः । प्रत्यक्षादावतिव्याप्तिवारणाय परामर्शजन्यत्वनिवेशः । अव्याप्तिमुपन्यस्यति । .... न चेति । वाच्यमिति परेणान्वयः । कादाचित्कहेतुकानुमितिस्थले हेतुं धर्मितावच्छेदकीकृत्यैवानुमितेर्जायमानत्वेन तादृशानुमितौ हेत्वविषयकत्वाभावादव्याप्तिरित्याशयः । समाधत्ते — तादृशज्ञानवृत्तीति । परामर्शजन्यं हेत्वविषयकं यद्ज्ञानं तद्वृत्तिर्याअनुभवत्वव्यप्याजातिः तादृशजातिमत्त्वस्य निरुक्तलक्षणार्थतया तादृशानुमितित्वजातिमत्वस्य कादाचित्कहेतुकानुमितावपि सत्वेनाव्याप्त्यभावादित्याशयः

[मुक्तावली]

अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः । एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः । पदज्ञानकरणकं ज्ञानं शाब्दबोधः । वस्तुतो यां कांचिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तित्वे सति यां कांचित्प्रत्यक्षव्यक्तिमादाय तद्वृत्तिजातिमत्त्वमनुमितित्वम् । एवं यांकिंचित्प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्तित्वे सति यांकांचिदनुमितिव्यक्तिमादाय तद्वृत्तिजातिमत्त्वं प्रत्यक्षत्वं वाच्यमिति (प्रत्यक्षादिकं वाच्यमिति

(सुबोधिनी)

लाघवमनुसृत्याह — अथवेति । उपमितेर्लक्षणमुपपादयति ....एवमिति । शाब्दबोधस्य लक्षणमुपन्यस्यति — पदज्ञानकरणकमिति । अतिलाघवमनुसृत्याह — वस्तुतस्त्विति । अनुमित्यात्मकतव्यक्तिसमवेतप्रत्यक्षात्मक यत्किंचिद्व्यक्त्यवृत्तिर्या जातिः तादृशजातिमत्त्वमनुमितेर्लक्षणमिति तदर्थः । तादृशी जातिरनुमितित्वजातिः तादृशजातिमत्त्वस्यानुमितौ सत्वाल्लक्षणसङ्गतिः ।

ननु तव्द्यक्तिसमवेतत्वविशिष्टानुमितित्वात्मकजातिमत्त्वस्य इतरानुमितिष्वसत्वादव्याप्तिरिति चेन्न । अनुमित्यात्मकतव्यक्तिसमवेतत्वस्योपलक्षणतया लक्षणघटकत्वात् । एवमनुमितिलक्षणवत्प्रत्यक्षलक्षणमपि परिष्करोति — एवमिति । प्रत्यक्षात्मकतव्यक्तिसमवेता अनुमित्यात्मकयत्किंचिद्व्यक्त्यवृत्तिर्या जातिः तादृशजतिमत्वं प्रत्यक्षस्य लक्षणमित्यर्थः । अत्रापि पूर्ववदव्याप्तिवारणाय प्रत्यक्षात्मक यत्किंचिद्व्यक्तिसमवेतत्वस्योपलक्षणतया लक्षणे भानमभ्युपगन्तव्यम् । अनुमितिलक्षणे प्रत्यक्षलक्षणे चानुभवत्वजातिमादायातिव्याप्तिवारणायावत्यन्तनिवेशः ॥ क्वचित्पुस्तकेषु प्रत्यक्षादिकं वाच्यमिति पाठो दृश्यते तत्र प्रत्यक्षपदं प्रत्यक्षत्वपरं बोध्यम् । आदिपदादेवोपमितिशब्दबोधयोरपि लक्षणं बोध्यमित्यर्थः ॥ तथा हि उपमित्यात्मकयत्किंचिद्व्यक्तिवृत्तिः अनुमित्यात्मकयत्किंचिद्व्यक्त्यवृत्तिर्या जातिस्तादृशजातिमत्त्वमुपमितेर्लक्षणम् एवमेव शाब्दबोधस्यापि लक्षणं बोध्यम् ॥

[मुक्तावली]

का ॥ घ्राणजादिप्रभेदेन प्रत्यक्ष षड्विधं मतम् । ५२ ।

मु ॥ जन्यप्रत्यक्षं विभजिते । घ्राणजादीति ॥ घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम् । न चेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वं, जन्यप्रत्यक्षस्यैव निरूपणीयत्वादुक्तसूत्रानुसारात् ॥ ५२ ॥



(सुबोधिनी)

जन्यप्रत्यक्षं विभजत इति । ....घ्राणजादीति । तदेव स्पुटयति घ्राणजमित्यादिना । शेषः सुगमः ॥ उक्तसूत्रानुसारादिति । इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादिसूत्रानुसारादित्यर्थः । तथाच तादृशसूत्रेण जन्यप्रत्यक्षस्यैवोक्तत्वेन तस्यैव विभागः प्रदर्शित इति भावः ॥

[मुक्तावली]

का ॥ घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।

मु ॥ गोचर इति । ग्राह्य इत्यर्थः । गन्धत्वादिरित्यादिपदात्सुरभित्वादिपरिग्रहः । गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा गन्धाग्रहणे तु घ्राणस्यासामर्थ्यमिति बोध्यम् ॥

(सुबोधिनी)

घ्राणस्य गोचरो गन्ध इत्यत्र गोचरपदस्य विषयार्थकतया घ्राणविशयो गन्ध इत्यर्थो लभ्यते स चासंगतः घ्राणस्य निर्विषयत्वादित्यत आह । — गोचर इति ग्राह्य इत्यर्थ इति । तथाच गोचरइत्यस्य प्रत्यक्षविषय इत्यर्थकतया तदेकदेशप्रत्यक्षे घ्राणस्येति षठ्यन्तार्थ घ्राणसंबन्धित्वस्यान्वय इति तादृशसंबन्धस्य जन्यतारूपत्वेन घ्राणेन्द्रियजन्यप्रत्यक्षविषयो गन्ध इत्यर्थो लभ्यत इति न काप्यनुपपत्तिरिति भावः । गन्धत्वादिरपीत्यत्रादिपदार्थमुपपादयति । सुरभित्वादिपरिग्रह इति । सुरभित्वादिरित्यत्रादिपदेनासुरभित्वपरिग्रहः । तत्र हेतुमुपपादयति गन्धस्यप्रत्यक्षत्वादिति । तथाच येनेन्द्रियेण याव्यक्तिर्गृह्यते तेनेन्द्रियेण तन्निष्ठाजातिरपि गृह्यत इति न्यायेन घ्राणेन्द्रियेणगन्ध

त्वादिजातिरपि गृह्यत इति भावः। इदमुपलक्षणम। येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनेन्द्रियेण तन्निष्ठा जातिः तदभावश्च गृह्यत इति न्यायेन घ्राणेन्द्रियेण गन्धाभावोऽपि गृह्यत इति बोध्यम्॥ कादाचिद्घ्राणेन्द्रियेण गन्धो न गृह्यते तत्कथमित्यत आह। —गन्धाग्रहणेत्विति॥

[मुक्तावली]

का॥ तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः॥५३॥

मु॥तथा रस इति। रसत्वादिसहित इत्यर्थः। तथा शब्दोऽपि शब्दत्वादिसहितः। गन्धो रसश्चोद्भूतो बोध्यः॥ ५३॥

(सुबोधिनी)

तथा रस इतीति — शेषः सुगमः। रसस्य रसनेन्द्रियजन्यप्रत्यक्षविषयत्वे गन्धस्य घ्राणेन्द्रियजन्यप्रत्यक्ष विषयत्वे च परमाणुगंधरसौ गृह्येतामित्यत आह .... गन्धोरसश्चेति। तथा चोद्भूतगन्धस्य उद्भूतरसस्यच प्रत्यक्षत्वविषयत्वोपगमेन परमाणुगन्धरसयोरनुद्भूतत्वेन नतयोः प्रत्यक्षत्वापत्तिरिति भावः॥

[मुक्तावली]

का॥ उद्भूतरूपं नयनस्य गोचरो
द्रव्याणि तद्वंति पृथक्त्वसंख्ये।
विभागसंयोग परापरत्व
स्नेह द्रवत्वं परिमाणयुक्तम् ५४
क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम्
गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः ५५

मु॥ उद्भूतरूपमिति। ग्रीष्मोष्मादावनुद्भूतरूपमिति न तत्प्रत्यक्षम्। तद्वंति उद्भूतरूपवन्ति ...योग्येति। पृथक्त्वादिकमपि सामान्यवृत्तितया बोध्यम्। तादृशं योग्यव्यक्तिवृत्तिं। चक्षुर्योग्यत्वमेव कथं तदाह। गृह्णातीति। आलोकसंयोगः उद्भूतरूपंच चाक्षुषप्रत्यक्षे कारणम्। तत्र द्रव्यचाक्षुषं प्रति तयोः समवायिसम्बन्धेन कारणत्वम्। द्रव्यसमवेतरूपादिप्रत्यक्ष स्वाश्रय समवायिसम्बन्धेन। द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेति॥ ५४ ॥ ५५

(सुबोधिनी)

चक्षुषा के पदार्थाः गृह्यन्त इत्यत आह। ....मूले उद्भूतरूपमिति। उद्भूतपदस्य प्रयोजनमुपपादयति मुक्तावल्यां ग्रीष्मोष्मादाविति॥ आदिना तप्तासिकतगतावह्निपरिग्रहः। तथाच ग्रीष्मोष्मादिगतरूपस्यानुद्भूतत्वेन न प्रत्यक्षत्वं, किन्तु उद्भूतरूपस्यैव चाक्षुषप्रत्यक्षविषयत्वमिति भावः। मूलस्थतद्वन्तीत्यस्यार्थ मुपपादयति। .... तद्वन्तीति। तथाचेद्भूतरूपवद्द्रव्यं चक्षुषा गृह्यत इति भावः। चक्षुरिन्द्रियजन्यलौकप्रत्यक्षत्वावच्छिन्नं प्रत्यालोकिकसंयोगस्य उद्भूतरूपस्य च कारणत्वेन अन्धकारस्थघटादीनां अनुद्भूतरूपवद्द्रव्याणां च न प्रत्यक्षत्वमित्याशयेनोपपादयति। ....आलोकसंयोग उद्भूतरूपं चेति। कथं वा कार्यकारणभाव इत्यत आह। ...तत्र द्रव्यचाक्षुषं प्रतीति। तथाच विषयतासंबन्धेन जायमानद्रव्यचाक्षुषत्वावच्छिन्नं प्रति आलोकसंयोगोद्भूतरूपयोः समवायसंबन्धेन कारणत्वं; तथाहि अयं घट इति प्रत्यक्षे घटो विषयः तादृशप्रत्यक्षविषयता घटे वर्तते, एवंच विषयतासम्बंधेनायं घटइति प्रत्यक्षं घटे जायते तस्मिन् घटे आलोकसंयोगः उद्भूतरूपं च समवायेन विद्येते इति तयोस्तादृशप्रत्यक्षं प्रति समवायेन कारणत्वं सुस्थमेवेति ·निरुक्तकार्यकारणभावः सुस्थः॥ द्रव्यसमवेतरूपादिप्रत्यक्ष इति॥ तथाच इदं नीलरूपमिति प्रत्यक्षे रूपं विष

यः विषयता रूपे विषयतासंबन्धेन रूपे तादृशप्रत्यक्षं वर्तते, आलोकसंयोगः उद्भूतरूपंच स्वाश्रयसमवायसंबन्धेनोद्भूतरूपे वर्तते स्वपदेनतदुभयग्रहणे स्वाश्रयः घटादिकं तत्समवायस्य नीलरूपे सत्वात् ॥ एवञ्च विषयतासंबन्धेन जायमानद्रव्यसमवेतविषयकचाक्षुषत्वावच्छिन्नं प्रति स्वाश्रयसमवायसंबन्धेन आलोकसंयोगस्य उद्भूतरूपस्य च कारणत्वमित्याशयः ॥ ....द्रव्यसमवेतसमवेतस्येति । विषयतासंबन्धेन जायमानद्रव्यसमवेतसमवेतरूपत्वादिप्रत्यक्षं प्रति स्वाश्रयसमवेतसंमवायसबन्धेनालोकसंयोगः उद्भूतरूपं च कारणं स्वपदेन तदुभयग्रहणे स्वाश्रयो द्रव्यं तत्समवेतं रूपादिकं, तत्समवायस्य रूपत्वादिषु सत्वादित्याशयः ॥ ५४ ॥ ५५ ॥

[मुक्तावली]

का ॥ उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः
रूपान्यच्चक्षुषो योग्यं रूपमात्रपि कारणम् ॥ ५६ ॥

मु ॥ उद्भूतेति । उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः । सोऽपि उद्भूतस्पर्शोऽपि स्पर्शत्वादि सहितः । रूपान्यदिति । रूपभिन्नं रूपत्वादीभिन्नं यच्चक्षुषोयोग्यं तत् त्वगिन्द्रियस्यापि ग्राह्यं । तथाच पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या उक्ता एवं क्रियाजातयो योग्यवृत्तयः त्वचोग्राह्या इत्यर्थः । अत्रापि त्वगिंद्रियजन्यद्रव्यप्रत्यक्षेऽपि रूपं कारणम् । तथाच बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम् ॥

(सुबोधिनी)

एवं चक्षुरिंद्रियग्राह्यपदार्थानुपपाद्य त्वगिंद्रियग्राह्य पदार्थानुपपादयति मूले .... उद्भूतस्पर्शवद्द्रव्यमित्यादिना । तदेव स्पुटयति मुक्तावल्यां ...उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचर इति ॥



उद्भूतस्पर्शवद्द्रव्यं त्वगिंद्रियजन्यप्रत्यक्षविषयइत्यर्थः । मूलस्थतच्छब्दार्थमुपपादयति .... सोपीति । उद्भूतस्पर्शोऽपि त्वगिंद्रियजन्यप्रत्यक्षविषयइत्यर्थः । स्पर्शत्वादिजातीनामपि त्वगिंद्रियग्राह्यत्वेन तदकथनान्मूलस्य न्यूनत्वं स्यादिति तत्परिहरायाह —स्पर्शत्वादि साहितेति । आदिना उष्णस्पर्शत्वादि परिग्रहः । तथाच येनेंद्रियेण याव्यक्तिर्गृह्यते तेनेंद्रियेन तन्निष्ठा जातिरपि गृह्यत इति न्यायेन त्वगिंद्रियेण स्पर्शो गृह्यत इति तादृशत्वगिंद्रियेण स्पर्शत्वादिजातिरपि गृह्यत इति भावः ॥ -- रूपान्यदितीति । रूपभिन्नमिति । रूपभिन्नाः चक्षुरिन्द्रियजन्यप्रत्यक्षविषया ये पदार्थाः तेऽपि त्वगिंद्रियग्राह्या इत्यर्थः ॥

ननु रूपभिन्नस्य चक्षुरिंद्रियजन्यप्रत्यक्षविषयस्य त्वगिंद्रियग्राह्यत्वे रूपभिन्नस्य चक्षुर्ग्राह्यस्य रूपत्वस्यापि त्वगिंद्रियजन्यप्रत्यक्षविषयत्वापत्तिरित्यत आह ... रूपत्वादिभिन्नस्येति । आदिना रूपत्वव्याप्य शुक्लत्वादिजातीनां परिग्रहः । एवञ्च रूपरूपत्वशुक्लत्वाभिन्नाः चक्षुरिंद्रियग्राह्या पदार्थाः त्वगिंद्रियेणापि गृह्यन्त इत्यर्थः । के ते पदार्था इत्यत आह — तथाच पृथक्त्वसंख्यादय इति । उद्भूतरूपवद्द्रव्यं पृथक्त्वं संख्या विभागः संयोगः परत्वमपरत्वं स्नेहः द्रवत्वं परिमाणं तद्वद्द्रव्यं रूपत्वादिभिन्नां चक्षुर्ग्राह्यां जातिं समवायं चेत्येतान् योग्यवृत्तीन् पदार्थान् त्वक् गृह्णातीत्याशयः । चक्षुरिंद्रियजन्यप्रत्यक्षे कारणस्य रूपस्य त्वगिंद्रियजन्यप्रत्यक्षे कारणत्वमस्ति वा नवेत्यत आह .... मूले रूपमत्रापि कारणमिति । अत्रापीत्यस्यार्थ मुपपादयति मुक्तावल्यां ... अत्रापीति । तथाच त्वगिंद्रियजन्यप्रत्यक्षेऽपि रूपं कारणमित्यर्थः । तादृशकार्यकारणभावस्तु विषयनिष्ठप्रत्यासत्या पूर्ववद्बोध्यः ॥ बहिरिंद्रियेषु चक्षुरिंद्रियस्य त्व

गिंद्रियस्य च रूपवद्द्रव्यग्राह्यकत्वात् बहिरिंद्रियजन्यद्रव्यप्रत्यक्षं प्र
ति कस्यवा कारणत्वमित्यत आह — तथाचेति । एवञ्च बहिरिंद्रि
यजन्यलौकिक द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति उद्भूतरूपस्य कारण
त्वमित्यर्थः

[मुक्तावली]

नवीनास्तु बहिरिंद्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपं कारणं प्र
माणाभावात् किन्तुचाक्षुषप्रत्यक्षे रूपं, स्पार्शनप्रत्यक्षे स्पर्शः का
रणम्, अन्वयव्यतिरेकात् । बहिरिंद्रियजन्यद्रव्यप्रत्यक्षमात्रे किंका
रणमिति चेत्, न किंचित् आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं
वा प्रयोजकमस्तु । रूपस्य कारणत्वे लाघवमिति चेन्न । वायो
स्त्वागिंद्रियेणाग्रहणप्रसङ्गात्, इष्टापत्तिरिति चेत्, उद्भूतस्पर्श एव
लाघवात्कारणमस्तु, प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरित्यव किं न
स्यात्, तस्मात्प्रभां पश्यामीति वत वायुं स्पृशामीति प्रत्ययसंभ
वाद्वयोरपि प्रत्यक्षत्वं सम्भवत्येव बाहिरिंद्रियजन्यद्रव्यप्रत्यक्ष
मात्रे न रूपस्य नवा स्पर्शस्य हेतुत्वम्, वायुप्रभयोरेकत्वं गृह्य
तएव कचिद्द्वित्वादिकमपि, काचिम् संख्यापरिमाणग्रहो दोषा
दित्याहुः ॥ ५६ ॥

(सुबोधिनी)

बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणमित्युक्तं तत्र मतान्तरमु
पन्यस्यति ॥ — नवीनास्त्विति ॥ तत्र हेतुमुपपादयति ॥ —प्रमा
णाभावादिति ॥ ननु तर्हिरूपस्य कुत्र वा कारणत्वमित्यत आह ॥
— किन्त्विति ॥ स्पार्शनप्रत्यक्षइति । तत्र हेतुमुपपादयति ॥ —अ
न्वयव्यतिरेकादिति ॥ तथाच रूपसत्वे द्रव्यविषयकचाक्षुषोत्पत्या;
रूपाभावे द्रव्यविषयकचाक्षुषानुत्पत्या द्रव्यविषयकचाक्षुषत्वावच्छिन्नं



प्रति रूपस्य कारणत्वं, एवं स्पर्शसत्वे द्रव्यविषयकस्पार्शनोत्पत्या
स्पर्शाभावे द्रव्यविषयक स्पार्शनानुत्पत्या च अन्वय
व्यतिरेकाभ्यां द्रव्यविषयकस्पार्शनं प्रति स्पर्शस्य कारणत्वं
सिद्धमित्याशयः ॥ बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे कस्य वा कारण
त्वमिति शङ्कते ॥ .... बहिरिन्द्रियजन्येति । समाधत्ते ॥ न किंचि
दिति ॥ तथाच बाहिरिन्द्रियजन्यद्रव्यप्रत्यक्षस्य चक्षुरिन्द्रियेण त्वगि
न्द्रियेण वा जायमानत्वेन चक्षुरिन्द्रियजन्यद्रव्यप्रत्यक्षं प्रति रूपस्य
त्वागिन्द्रियजन्यद्रव्यप्रत्यक्षं प्रति स्पर्शस्य पृथक् कारणत्वात् । बहि
रिन्द्रियजन्यप्रत्यक्षसामान्यं प्रति न कस्यापि कारणत्वमित्याशयः ॥
ननु कार्याभावं प्रति कार्याभावस्य प्रयोजकतया द्रव्यचाक्षुषं प्रति
रूपस्य द्रव्यस्पार्शनं प्रति स्पर्शस्य पृथक्कारणत्वे गगनविषयकचा
क्षुषस्पार्शनप्रत्यक्षाभावं प्रति गगननिष्ठरूपाभावस्य स्पर्शाभावस्य च
द्वयोः प्रयोजकत्वमभ्युपगन्तव्यं तच्च गौरवं; तदपेक्षया बाहिरिन्द्रि
यजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपस्य कारणत्वमभ्युपगम्य त
दभावस्य गगनविषयक बहिरिन्दियजन्यप्रत्यक्षाभावप्रयोजकत्वमभ्यु
पगन्तव्यं लाघवादित्यत आह ॥ .... आत्मावृत्तीति ॥ तथाच आ
त्मावृत्ति शब्दभिन्नविशेषगुणवत्त्वं बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे कार
णं एवञ्च तदभावाच्च बाहिरिन्द्रियेण गगनविषयकप्रत्यक्षत्वापत्तिः
न वा लाघवहानिः एक रूपेणैव कार्यकारणभावस्य व्यवस्थापितत्वात्
इत्याशयः । शब्दाभिन्नविशेषगुणवत्वस्यात्मनि सत्त्वादात्मनः बहिरि
न्द्रियजन्यप्रत्यक्षत्वापत्ति रतो आत्मावृत्तीति । तथाचात्मावृत्तिवि
शेषगुणवत्वस्या त्मन्यभावात् नह्यात्मनो बहिरिन्द्रियजन्यप्रत्यक्षत्वापत्तिः
आकाशस्य बहिरिन्द्रियजन्यप्रत्यक्षत्वापत्तिवारणाय शब्दाभिन्नेति वि
शेषणं बोध्यम् । दिगादीनां बहिरिन्द्रियजन्यप्रत्यक्षत्वापत्तिवारणाय

विशेषेति । तथाच दिगादिषु विशेषगुणाभावान्न प्रत्यक्षत्वापत्तिः । शङ्कते । — रूपस्येति । तत्र हेतुमुपपादयति । .... लाघवामिति । तथाच बहिरिन्द्रियजन्यप्रत्यक्षत्वावच्छिन्नं प्रति आत्मावृत्तिशब्दभिन्न विशेषगुणत्वेन कारणत्वे कारणतावच्छेदकगौरवं रूपत्वेन कारणत्वे कारणतावच्छेदलाघवमिति रूपत्वेनैव कारणत्वमास्तामित्याशयः । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपस्याकारणत्वे हेतुमुपपादयति । .... वायोरित्यादिना । तथाच वायौ रूपाभावात् वायोः त्वगिन्द्रियजन्यप्रत्यक्षत्वं न स्यादतः बहिरिन्द्रियजन्यप्रत्यक्षं प्रति न रूपस्य कारणत्वमपितु आत्मावृत्तिशब्दाभिन्नविशेषगुणवत्त्वमेवेत्याशयः । शङ्कते । ... इष्टापत्तिरिति । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षं प्रति रूपस्यैव लाघवात्कारणत्वमस्तु वायोस्त्वगिन्द्रियेणा प्रत्यक्षत्व मिष्टमेवेति तदर्थः । प्रतिबन्द्या समाधत्ते । .... उद्भूतस्पर्श एवेति । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपस्यैव कारणत्वं नान्यस्येति विनिगमकाभावादुद्भूतस्पर्शस्यैव कारणत्वमस्त्वित्याशयः । उद्भूतरूपस्य कारणत्वे विनिगमकमुपपाद्य इष्टापत्त्या विनिगमकं निरस्यति । .... प्रभाया इत्यादिना । तथाच उद्भूतस्पर्शस्य बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे कारणत्वे उद्भूतस्पर्शाभावात्प्रभाया अप्रत्यक्षत्वापत्तिरित्यर्थः । रूपस्य कारणत्वे वायोरप्रत्यक्षं दोषः यथा इष्टापत्त्या परिहृतत्वं तथैव स्पर्शस्य कारणत्वे प्रभाया अपि अप्रत्यक्षत्वं इष्टापत्त्यापरिहरणीयमित्याशयः ॥

बहिरिन्द्रिय जन्यद्रव्यप्रत्यक्षंप्रति आत्मावृत्तिशब्दभिन्न विशेषगुणेन यो कार्यकारणभाव उपक्रान्तः तमुपसंहरति । —तस्मादिति । तथाच यथा प्रभां पश्यामीत्यनुभवेन प्रभाया अप्रत्यक्षत्वे इष्टापत्तिर्न संभवति, तथैव वायुं स्पृशामीत्यनुभवसत्त्वेन वायोरप्रत्यक्षत्वे इष्टपत्तिर्न संभवतीति बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे न रूपस्य न वा स्पर्शस्य वा कारणत्वं वायुस्पर्शयो रन्यतरस्या प्रत्यक्षत्व प्रसङ्गात्, किन्तु आत्मावृत्तिशब्दभिन्नविशेषगुणत्वेनैव बहिरिन्द्रिय जन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति कार्यकारणभाव इत्याशयः । वायोस्त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे दृष्टान्तपुरःसरं हेतुमुपपादयति । वायुप्रभयोरिति । अत्र प्रभोपादानं दृष्टान्तार्थं । तथाच येनेन्द्रियेण यद्गत संख्या गृह्यते तेनेन्द्रियेणतदापिगृह्यत इति नियमेन यथा इतो प्रभा एका तत्र तु प्रभाद्वयमिति प्रभागत संख्याग्रहेण प्रभायाश्चाक्षुषत्वमङ्गीकृत एवमेव इतो वायुरेकः तत्र तु वायुद्वयं प्रसरतीति वायुगतसंख्यायाः प्रत्यक्षत्वेन वायोरपि त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वं निर्विवादमेवेत्याशयः । ननु कदाचिद्वायुगतसंख्यादेः प्रत्यक्षत्वं नास्ति तत्कथमित्यत आह । ....क्वचित्संख्यापरिमाणाद्यग्रह इति ॥ ५६ ॥



[ मुक्तावली ]

**का ॥ त्वचो योगो मनसा ज्ञानकारणम् ।**

मु ॥ त्वचो योग इति । त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः । किं तत्र प्रमाणं ? सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननमिति ।

ननु सुषुप्तिकाले किं ज्ञानं भविष्यति, अनुभवरूपं स्मरणरूपं वा? नाद्यः, अनुभवसामग्र्यभावात् । तथाहि प्रत्यक्षे चक्षुरादिना मनःसंयोगस्य हेतुत्वात्तदभावादेव न चाक्षुषादिप्रत्यक्षम् । ज्ञानादेरभावादेव न मानसं प्रत्यक्षं, ज्ञानाद्यभावेच आत्मनोऽपि न प्रत्यक्षमिति । व्याप्तिज्ञानाभावादेव नानुमितिः, सादृश्यज्ञानाभावान्नोपमितिः, पदज्ञानाभावान्न शाब्दबोधः, इत्यनुभवसामग्र्य भावान्नानुभवः । उद्बोधकाभावाच्च न स्मरणम् ॥

(सुबोधिनी)

मूले त्वचो योगइति। त्वचः त्वगिन्द्रियस्य मनसा संयोगः
ज्ञानकारणम् जन्यज्ञानसामान्यं प्रति कारणमित्यर्थः। तदेवस्पुटयति
मुक्तावल्यां —त्वङ्मन.संयोगइति। ज्ञानसामान्य इति। अत्र जन्ये
ति पूरणीयं, अन्यथा- ईश्वरज्ञानस्याजन्यत्वेन ज्ञानसामान्यान्तर्गतई
श्वरज्ञानं प्रति त्वङ्मनःसंयोगस्याकारणत्वेन ज्ञानसामान्यं प्रति त्वङ्म
नःसंयोगस्य कारणमित्ययुक्तमुक्तं स्यात्। त्वङ्मनःसंयोगस्य
जन्यज्ञानसामान्यं प्रति कारणत्वे प्रमाणं पृच्छति। किं तत्र प्रमाण
मिति। तादृश प्रमाणमेवोपपादयति — सुषुप्तिकालइत्यादिना।
तथाच सुषुप्तिकाले त्वङ्मनःसंयोगस्याभावेन ज्ञानस्याजननात्
जाग्रति तत्सत्वेन ज्ञानस्य जननादन्वयव्यतिरेकाभ्यामेव ज्ञानं प्रति त्वङ्म
नःसंयोगस्य कारणत्वे प्रमाणमित्याशयः। सुषुप्तिकाले ज्ञानसाम
ग्र्याभावादेव न ज्ञानमुत्पद्यते न त्वङ्मनःसंयोगभावादतः त्वङ्
मनः संयोगस्य जन्यज्ञानसामान्यं प्रति कारणत्वं नाभ्युपगन्तव्यमि
त्याशयेन शङ्कते ... नन्वित्यादिना। ज्ञानसमान्यं प्रति त्वङ्मनः
संयोगस्याकारणत्वे सुषुप्तिकालेऽनुभवात्मक ज्ञानस्यापत्तिर्दीयते वा स्म
रणात्मक ज्ञानस्यापत्तिर्दीयते वा नाद्य इत्याह। नाद्यः अनुभवसामग्र्य
भावादिति। तदेवोपपादयति ... तथाहीति। अनुभवश्चतुर्विधः प्र
त्यक्षानुमित्युपमिति शाब्दभेदात्, तत्र सुषुप्तिकाले प्रत्यक्षसामग्र्य
भावादेव नप्रत्यक्षस्यापत्तिः सम्भवतीत्युपपादयति — चक्षुरादिनेति
तथाच बहिरिंद्रियजन्यप्रत्यक्षं प्रती चक्षुरादि तत्तदिंद्रियैर्मनसः सं
योगस्य कारणत्वेन सुषुप्तिकाले मनसः पुरीतति प्रविष्टत्वेन तत्तदिं
द्रियैः साकं मनसः संयोगरूपकारणाभावादेव न बहिरिंद्रियजन्यप्र
त्यक्षस्यापत्तिः सम्भवतीत्याशयः।



सुषुप्तिकाले बहिरिन्द्रिय जन्यप्रत्यक्षस्यासंभवेऽपि मानसप्रत्यक्षमु
त्पद्यतामित्यत आह। ....ज्ञानादेरभावादेवेति। तथाच प्रत्यक्षे विष
यस्य कारणत्वेनात्मनिष्ठयोग्यविषगुणानां ज्ञानादीनां सुषुप्तिकालेऽभावा
न्न तेषां प्रत्यक्षं संभवतीत्याशयः। आत्मनिष्ठयोग्यविशेषगुणाप्रत्यक्ष
त्वेऽपि सुषुप्तिकालेऽऽत्मनः प्रत्यक्षत्वं दुर्वारमेवेत्यत आह। ...ज्ञा
नाद्यभावे चेति। तथाच न केवलमात्मनः प्रत्यक्षत्वं कदाऽपि संभ
वति; अपितु योग्यविशेषगुणवत्वेनैवात्मनः प्रत्यक्षत्वं एवञ्च सुषुप्ति
काले योग्यविशेषगुणानां ज्ञानादीनामभावे कथं प्रत्यक्षत्वमित्याशयः।
सुषुप्तिकाले प्रत्यक्षसामग्र्यभावेन प्रत्यक्षस्यासंभवेऽपि अनुमितिर्जाय
तामित्यत आह। ....व्याप्तिज्ञानाभावादेवेति। तथाच सुषुप्तिकाले
ऽनुमितिसामग्रीभूतव्याप्तिज्ञानाभावान्नानुमित्यपत्तिरित्यर्थः॥ सुषुप्ति
कालेऽनुमिति सामग्र्यभावेनानुमित्यसंभवेऽपि उपमितिरुत्पद्यतामित्य
त आह। ....सादृश्यज्ञानाभावादिति। तथाचोपमिति सामाग्रीभू
तसादृश्यज्ञानाभावान्नोपमित्यापत्तिः सुषुप्तिकाल इत्यर्थः॥ तदभा
वेपि सुषुप्तिकाले शाब्दबोधो जायतामित्यत आह॥ ....पद
ज्ञानाभावादिति। तथाच सुषुप्तिकाले पदज्ञानाभावान्न शाब्दबोधा
पत्तिरित्यर्थः॥ पर्यवसिताशयमुपपादयति॥ ....इत्यनुभवसामग्र्यभा
वादिति। सुषुप्तिकालेऽनुभवसामाग्र्यभावा दनुभवस्यासंभवेऽपि स्मृति
रुत्पद्यतामित्यत आह॥ —उद्बोधकाभावाच्चेति। तथाच उद्बुद्धसं
स्कारस्यैव स्मरणप्रयोजकतया सुषुप्तौ उद्बोधकाभावात् संस्कारस्या
नुद्बुद्धत्वेन न स्मृतेरपि संभव इत्याशयः। एवञ्च सुषुप्तौ त
त्तत्सामाग्र्यभावादेवानुभवस्मरणयो रभावोपपत्तौ जन्यज्ञानसामा
न्यं प्रति त्वङ्मनःसंयोगस्य कारणत्वाङ्गीकारो व्यर्थ इत्याशयः॥

[ मुक्तावली ]

मैवं । सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्संबन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात् तदतीन्द्रियत्वे मानाभावात् सुषुप्तिप्राक्काले निर्विकल्पकमेव नियमेन जायत इत्यत्रापि प्रमाणाभावात् ॥

(सुबोधिनी)

सुषुप्तिकाले अनुभवसामग्र्यभावान्नानुभवापत्तिः, स्मरणसामग्र्यभावान्नस्मरणापत्तिः अतः त्वङ्मनःसंयोगः न ज्ञानं प्रति कारणमिति यः पक्षो उपन्यस्तः तन्निरस्यति – मैवमित्यादिना । सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेरिति । इच्छायाः आदिकारणं, इच्छाकारणीभूता व्यक्तिरिति विग्रहः, सा च ज्ञानरूपा, सुषुप्तिप्राक्कालोत्पन्नासुषुप्त्यव्यवहितपूर्वक्षणोत्पन्ना इच्छाकारणीभूता ज्ञानरूपाव्यक्तिरित्यर्थः । तथाच यस्मिन्क्षणे ज्ञानादिकं जायते तदुत्तरक्षण एव तस्य प्रत्यक्षसंभवेन निरुक्तज्ञानस्य द्विक्षणावस्थायित्वेन प्रत्यक्षे कारणीभूतविषयस्य निरुक्तज्ञानस्य सत्वात् सुषुप्तिप्रथमक्षणे तादृशज्ञानस्य प्रत्यक्षत्वापत्तिः, एवं योग्यविशेषगुणसंबन्धस्यात्मप्रत्यक्षप्रयोजकतया निरुक्तज्ञानरूपयोग्यविशेषगुणसंबन्धस्यात्मनि सुषुप्तिप्रथमक्षणे सत्वात्तदानीमात्मनः प्रत्यक्षत्वापत्तिरतः त्वङ्मनःसंयोगस्य जन्यज्ञानसामान्यं प्रति कारणत्वमभ्युपगन्तव्यं एवं सति सुषुप्तिकाले मनसः त्वचं त्यक्त्वा पुरीतति प्रविष्टत्वेन ज्ञानं प्रति कारणस्य त्वङ्मनः संयोगस्य सुषुप्तिप्रथमक्षणेऽप्यसत्वात् न ज्ञानस्य, तत्संबन्धेन वा आत्मना वा प्रत्यक्षत्वापत्तिः । सुषुप्तिप्राक्कालोत्पन्नज्ञानस्यातीन्द्रियत्वमेवास्त्वामित्यत आह । ....तदतीन्द्रियत्व इति । सुषुप्तिप्राक्कालोत्पन्नज्ञानस्यातीन्द्रियत्व प्रमाणाभावादित्यर्थः । तथाच तादृशज्ञानस्येन्द्रियग्राह्यत्वेन तस्य प्रत्यक्षत्वापत्तिः त्वङ्मनः संयोगस्य ज्ञानं प्रति का-



रणत्वानङ्गीकारे सुस्थैवेत्यर्थः ।

ननु सुषुप्तिप्राक्कालोत्पन्नज्ञानं नियमेन निर्विकल्पकमेव जायते तथाच निर्विकल्पकस्याप्रत्यक्षत्वेन सुषुप्तिकाले न तस्य प्रत्यक्षत्वापत्तिः, तत्संबन्धेन वा आत्मनो न प्रत्यक्षत्वापत्तिः योग्यविशेष गुणसंबन्धस्यैव आत्मप्रत्यक्षप्रयोजकत्वात् अतः त्वङ्मनः संयोगस्य न ज्ञानं प्रति कारणत्वमभ्युपगन्तव्यमित्यत आह । —सुषुप्तिप्राक्काल इति । तथाच यदा नियमेन निर्विकल्पकमेव नो जायते, कदाचित् सविकल्पकस्यापि जायमानत्वेन तदानीमेव निरुक्तापत्तिवारणाय जन्यज्ञानसामान्यं प्रति त्वङ्मनःसंयोगस्य कारणत्वमवश्यमभ्युपगन्तव्य मित्याशयः ॥

[ मुक्तावली ]

अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदिकारणत्वं तदा रासनचाक्षुषादि प्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात् विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्वात् परस्परप्रतिबन्धादेकमपि वा न स्यादिति । अत्र केचित् पूर्वयुक्त्या त्वङ्मनःसंयोगस्य ज्ञानहेतुत्वे सिद्धे चक्षुरादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुरोधात्कल्प्यत इति ॥

(सुबोधिनी)

जन्यज्ञानसामान्यं प्रति त्वङ्मनः संयोगस्य कारणत्वं न संभवतीति । —शङ्कते । अथेति । ज्ञानोत्पत्तिमात्रे त्वङ्मनः संयोगस्य कारणतया अपेक्षितत्वे चाक्षुषादिज्ञानोत्पादक सामग्रीकालेऽपि तस्य सत्वेन त्वगिन्द्रियेण स्पर्शस्य संबन्धस्य विद्यमानतया स्पार्शनसामग्र्या अपि विद्यमानतया चक्षुरिन्द्रियेण घटादिप्रत्यक्षोत्पत्तिकाले त्वगिन्द्रियेण स्पर्शविषयकप्रत्यक्षापत्तिरित्याशयः ।

ननु त्वाचप्रत्यक्षं प्रति चाक्षुषादिसामाग्र्याः प्रतिबन्धकत्वमास्ता ।मित्यत आह ॥ ....परस्परप्रतिबान्धादिति ॥ विनिगमकाभावेन त्वागिन्द्रियजन्यप्रत्यक्षं प्रति चाक्षुषादिसामाग्र्याः प्रतिबन्धकत्वे चाक्षुषादिप्रत्यक्षं प्रत्यपि त्वाचसाक्षात्कारसामाग्र्याः प्रतिबन्धकत्वेन परस्परप्रतिबन्धाच्चाक्षुषादिकं त्वाचसाक्षात्कारश्च न स्यादित्याशयः समाधत्ते । -- अत्र केचिदिति । तथाच सुषुप्तिकाले तदव्यवहितपूर्वक्षणोत्पन्नज्ञानादिप्रत्यक्षवारणाय त्वङ्मनःसंयोगस्य जन्यज्ञानसामान्यं प्रति कारणत्वे सिद्धे निरुक्तयुक्त्या चाक्षुषादिकाले त्वाचसाक्षात्कारापत्तिवारणाय त्वाचसाक्षात्कारं प्रति चाक्षुषादिसमग्र्याः प्रतिबन्धकत्वमनुभवानुरोधेन कल्प्यते । एवं सति प्रतिबंधकाभावस्यापि कारणत्वेन चाक्षुषादिसामग्रीकाले त्वाचसाक्षात्कारहेतुभूतचाक्षुषादि सामग्रीरूपप्रतिबंधकाभावस्या भावादेव चाक्षुषादिकाले न त्वाचप्रत्यक्षापत्तिरित्याशयः ॥

[मुक्तावली]

अन्ये तु सुषुप्त्यनुरोधेन चर्ममनःसंयोगस्य ज्ञानहेतुत्वं कल्प्यते चाक्षुषादिप्रत्यक्षकाले त्वक्मनःसंयोगाभावान्न त्वाचप्रत्यक्षमिति ॥

(सुबोधिनी)

मिश्रमतमुपन्यस्याति । ....अन्येत्वित्यादिना । सुषुप्त्यनुरोधेनेति । सुषुप्तौ ज्ञानानुत्पादानुरोधेनेति तदर्थः । तथाच सुषुप्तिकाले मनसः पुरीतति प्रविष्टत्वेन तदानीं चर्ममनःसंयोगरूपकारणाभावान्न ज्ञानोत्पत्तिरिति भावः । त्वङ्मनःसंयोगस्य ज्ञानं प्रति कारणत्व मकल्प्य चर्ममनःसंयोगस्य ज्ञानं प्रति हेतुत्वकल्पने उपयोगं दर्शयाति । — चाक्षुषादिप्रत्यक्षकाल इति ।



तथाच त्वङ्मनःसंयोगस्य ज्ञानसामान्यं प्रति कारणत्वे चाक्षुषादिप्रत्यक्षकालेऽपि त्वङ्मनःसंयोगस्य सत्वेन चाक्षुषप्रत्यक्षकाले त्वाचप्रत्यक्षापत्तिः दुर्वारा; चर्ममनःसंयोगस्य कारणत्वे तु चाक्षुषप्रत्यक्षकाले त्वङ्मनःसंयोगस्यानपेक्षिततया तदभावात् न त्वाचप्रत्यक्षापत्तिरिति भावः । अत्रेदं चिन्तनीयं । सुषुप्त्यव्यवहितप्राक्क्षणे ज्ञानमेव न सम्भवति, तथाहि आदौ मनसि सुषुप्त्यनुकूलक्रिया १ । ततः आत्ममनसोर्विभागः २ । ततः आत्ममनःसंयोगनाशः ३ । (पूर्वदेशसंयोगनाशः ३ ।

ततः मनसः पुरीतातिना संयोगः ४ । तादृशसंयोग एव सुषुप्तिः तादृशसुषुप्त्यव्यवहितप्राक्क्षणे आत्ममनःसंयोगनाश एव वर्तते न तु ज्ञानं प्रति असमवायिकारणभूतात्म मनःसंयोगः इति कथं सुषुप्त्यव्यवहितप्राक्क्षणे ज्ञानमुत्पद्यते; तादृशज्ञानस्य सुषुप्तिकाले कथं प्रत्यक्षत्वापात्तिः; कथं तादृशप्रत्यक्षापत्तिवारणाय त्वङ्मनःसंयोगस्य, चर्ममनस्संयोगस्य वा जन्यज्ञानसामान्यं प्राते कारणत्वमुपपद्यत इति ॥

[मुक्तावली]

का ॥ **मनोग्राह्यं सुखं दुःख मिच्छाद्वेषो मतिःकृतिः ॥ ५७ ॥**

मु ॥ मनोग्राह्यमिति । मनोजन्यप्रत्यक्षविषयइत्यर्थः । मतिर्ज्ञानम् । कृतिर्यत्नः । एवं सुखत्वदुखत्वादिकमापि मनो ग्राह्यम् । एवमात्मापि मनोग्राह्यः । किंतु मनोमात्रस्य गोचर इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः ॥ ५७ ॥

(सुबोधिनी)

मनोग्राह्यमितीति । ज्ञायमानं सर्वमापि मनोग्राह्यमेवेति सुखादीनामेव मनोग्रह्यत्वाभिधानमसङ्गतामित्यत आह । — मनोजन्येति । यद्यपि ज्ञायमानं सर्वं मनोग्राह्यमेव तथापि सुखादीनामेव मनोमा

त्रजन्यप्रत्यक्षविषयत्वमिति तदाशयः । मतिशब्दार्थमुपपादयति । — मतिर्ज्ञानमिति । कृतिशब्दार्थमुपपादयति । — कृतिर्यत्न इति । येनेंद्रियेण या व्यक्तिर्गृह्यते तेनेंद्रियेण तन्निष्ठाजातिरपि गृह्यत इति न्यायेन सुखत्वादीनामपि मनोग्राह्यत्वात्तदकथनेन मूलस्य न्यूनत्वं स्यादत आह । — सुखत्वदुःखत्वादिकमिति । आदिना इच्छत्वादिकं ग्राह्यं । अत्रेदं बोध्यं; येनेंद्रियेण या व्यक्तिर्गृह्यते तेनेंद्रियेण तन्निष्ठाजातिः तदभावश्च गृह्यत इति न्यायेन सुखदुःखाद्यभावोऽपि मन इन्द्रियग्राह्य एवेति ॥ नन्वात्मापि मन इन्द्रियग्राह्य एवेति तत्कथमत्र नोक्तमित्यत आह । .... किन्त्विति । मनोमात्रस्य गोचर इत्यत्रात्मनो मनोमात्रजन्यप्रत्यक्षविषयत्वस्योक्तत्वेन पुनरुक्तिभिया नात्रोक्तमित्याशयः ॥ ५७ ॥

[मुक्तावली]

**का ॥ ज्ञानं यन्निर्विकल्पाख्यं तदतींद्रियमिष्यते ।**

मु ॥ चक्षुः संयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न संभवति । पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात् विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् । तथाच प्रथमतः घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते तदेव निर्विकल्पकं तच्च न प्रत्यक्षम् । तथाहि वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति । घटमहं जानामीति प्रत्ययात् । तत्रात्मनि ज्ञानं प्रकारीभूयभासते ज्ञाने घटः, तत्र घटत्वं, यः प्रकारः स एव विशेषणमित्युच्यते, विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते, विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम् । निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न सम्भवति घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं न सम्भ



वति जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात् ॥

(सुबोधिनी)

प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकं चेति । तत्र निर्विकल्पके प्रमाणं दर्शयति — चक्षुःसंयोगाद्यनन्तरमित्यादिना । पुरोवर्तिघटेन चक्षुः सन्निकर्षे सति प्रथमतः अयं घट इति घटत्वविशिष्टघटज्ञानं न सम्भवति, विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानस्य कारणत्वादतः घटत्वज्ञानं घटघटत्वयोर्वैशिष्ट्यानवगाहि जायते तदेव निर्विकल्पकं, तस्यापि सविकल्पकत्वे तत्रापि विशेषणज्ञानापेक्षा, तस्यापि सविकल्पकत्वे तत्रापि विशेषणज्ञानापेक्षेत्यनवस्थाप्रसक्तेः प्राथमिकस्यैव घटघटत्वयोर्वैशिष्ट्यानवगाहि घटत्वज्ञानस्यैव निर्विकल्पकत्वमिति भावः । तादृशनिर्विकल्पकविषयकप्रत्यक्षं न सम्भवतीत्याह । ...तच्च न प्रत्यक्षमिति । निर्विकल्पकं न प्रत्यक्षविषयो भवतीत्यर्थः । निर्विकल्पकप्रत्यक्षस्याप्रत्यक्षत्वं साधयति । ....तथाहीत्यादिना । यत्र प्रत्यक्षविषयत्वे सति ज्ञानत्वं तत्र वैशिष्ट्यावगाहित्वमिति व्याप्तेर्जागरूकतया निर्विकल्पकज्ञाने वैशिष्ट्यावगाहित्वाभावान्निर्विकल्पके, प्रत्यक्षविषयत्वं न सम्भवतीत्याशयः । निरुक्तव्याप्तिमेव दर्शयति ...घटमहमिति । तदेव विवृणोति — तत्रेति । घटमहं जानामीति प्रत्यक्षे इत्यर्थः । निर्विकल्पकज्ञानस्याप्रत्यक्षत्वप्रयोजकवैशिष्ट्यानवगाहित्वमेवोपपादयति —निर्विकल्पक इति ॥

[मुक्तावली]

**का ॥ महत्वं षड्विधे हेतु रिंद्रियं करणं मतम् ॥ ५८ ॥**

मु ॥ महत्वमिति । द्रव्यप्रत्यक्षे महत्वं समवायसम्बन्धेन कारणं द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसम्बन्धे

न, द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयस
मवेतसमवायसम्बन्धेन कारणमिति ॥

(सुबोधिनी)

...द्रव्यप्रत्यक्षइति । विषयतासम्बन्धेन जायमानद्रव्यप्रत्यक्षे
समवायसम्बन्धेन महत्वं कारणमित्यर्थः । ... द्रव्यसमवेतानामिति ।
अत्रापि कार्यतावच्छेदकसम्बन्धः विषयतासम्बन्ध एव बोध्यः । उत्तर
त्राप्येवमेव विषयतासम्बन्धएवानुसरणीयः । — स्वाश्रयसमवायसम्ब
न्धेनेति । स्वपदार्थो महत्वं । एवमुत्तरत्रापि स्वपदर्थो महत्वं बोध्यम् ॥

[मुक्तावली]

इन्द्रियामिति । अत्रापि षड्विध इत्यनुषज्यते । इन्द्रियत्वं नजातिः,
पृथिवीत्वादिना साङ्कर्यात् । किन्तु शब्देतरोद्भूतविशेषगुणानाश्र
यत्वे सति ज्ञानकारणमनः संयोगाश्रयत्वमिंद्रियत्वं । आत्मादिवारणा
य सत्यन्तम् । उद्भूतविशेषगुणस्य श्रोत्रे सत्वाच्छब्देतरेति । विशे
षगुणस्य रूपादेश्चक्षुरादावपि सत्वादुद्भूतेति । उद्भूतत्वं नजा
तिः, शुक्लत्वादिना सांकर्यात् । नच शुक्लत्वादिव्याप्यं नानैवोद्भूत
त्वमिति वाच्यम् । उद्भूतरूपत्वादिना चाक्षुषादौ जनकत्वानुपप
त्तेः । किन्तु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं तदभावकूटश्चोद्भूत
त्वं तच्च संयोगादावप्यस्ति, तथाच शब्देतरोद्भूतगुणः संयोगादि
श्चक्षुरादावप्यस्त्यतो विशेषेति । कालादिवारणाय विशेष्यदलं । इ
न्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रिया
वयववारणाय, नवीनमते कालादौ रूपाभावप्रत्यक्षे सन्निकर्षघटक
तया करणीभूतचक्षुःसंयोगाश्रयस्य कालादिर्वारणाय मनः पदम् ।
ज्ञानकारणमित्यपि तद्वारणायैव । ... कारणमिति । असाधारणं कार
णम् । कारणं असाधारणत्वं व्यापारवत्वं ॥ ५८ ॥



(सुबोधिनी)

...इन्द्रियत्वं नजातिरिति । तत्र हेतुमुपपादयति — पृथिवी
त्वादिनेति । तथाहि पृथिवीत्वाभाववति चक्षुरिंद्रिये इन्द्रियत्वस्य इ
न्द्रियत्वाभाववति घटेपृथिवीत्वस्य सत्वात् इन्द्रियत्वपृथिवीत्वे परस्परा
त्यन्ताभावसमानाधिकरणे, तयोः घ्राणेंद्रिये समावेशात्संकर इति इ
न्द्रियत्वं न जातिः । इन्द्रियस्य लक्षणमुपपादयति ....किंत्विति । श
ब्देतरे ये उद्भूतविशेषगुणाः उद्भूतरूपरसादयः तदनाश्रयत्वस्य ज्ञा
नकारणमनःसंयोगाश्रयत्वस्य चेंद्रियेषु सत्वाल्लक्षणसङ्गतिः, आत्मा
दिवारणायेत्याद्यारभ्य व्यापारवत्त्वमित्यन्तं स्पष्टोर्थः ॥ ५८ ॥

(मुक्तावली)

का ॥ विषयेंद्रियसम्बन्धो व्यापारःसोऽपिषड्विधः ।
द्रव्यग्रहस्तुसंयोगा त्संयुक्तसमवायतः ॥ ५९ ॥
द्रव्येषुसमेवतानां तथा तत्समवायतः ।
तत्रापि समवेतानां शब्दस्य समवायतः ।
तद्वृत्तीनांसमवेत समवायेन तु ग्रहः ।

मु ॥ विषयेंद्रियसम्बन्ध इति । व्यापारः सन्निकर्षः ॥ षड्विधं स
न्निकर्षमुदाहरणद्वारा प्रदर्शयति ....द्रव्यग्रह इति । द्रव्यप्रत्यक्ष
मिंद्रियसंयोगजन्यम् । द्रव्यसमवेतप्रत्यक्षमिंद्रियसंयुक्तसमवायजन्यं
एवमग्रेऽपि, वस्तुतस्तु द्रव्य चाक्षुषं प्रति चक्षुःसं
योगः कारणम् । द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसम
वायः कारणम् । द्रव्यासमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तस
मवेतसमवायः, एवमन्यत्रापि विशिष्यैव कार्यकारणभावः । परन्तु
पृथिवीपरमाणुनीले नीलत्वं पृथिवीपरमाणौ पृथिवीत्वं च चक्षुषा
कथं न गृह्यते ? तत्र परंपरयोद्भूतरूपसम्बंधस्य महत्वसम्बंधस्य च

सत्वात् ॥ तथाहि नीले नीलत्वजातिरेकैव घटनीले परमाणुनीले च वर्तते तथाच महत्वसम्बन्धो घटनीलमादाय वर्तते उद्भूतरूपसम्बन्धस्तूभयमादायैव वर्तते ॥ एवं पृथिवीत्वेऽपि घटादिकमादाय महत्वसम्बन्धो बोध्यः ॥ एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात्; तस्मादुद्भूतरूपावच्छिन्नमहत्वावच्छिन्नचक्षुः संयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषे, तादृशचक्षुः संयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे कारणत्वं वाच्यम् ॥ इत्थञ्च परमाणुनीलादौ न नीलत्वादिग्रहः परमाणौ चक्षुः संयोगस्य महत्वावच्छिन्नत्वाभावात् ॥

(सुबोधिनी)

.... विषयेन्द्रियसम्बन्ध इतीति । तज्जन्यत्वे सति तज्जन्यजनको व्यापार शब्दार्थइतिभ्रमनिरासाय व्यापारशब्दार्थमुपपादयति....व्यापारइति .... द्रव्यग्रहइतीति । द्रव्यप्रत्यक्षं प्रति संयोगस्य कारणत्वे त्वक् प्रभासंयोगात् चाक्षुषापत्तिः एवमन्धकारे घटचक्षुः संयोगात् स्पार्शनापत्तिश्चेत्यतआह — वस्तुतस्त्विति । विशिष्यैव कार्यकारणभाव इत्यन्तं स्पष्टोऽर्थः ॥

शङ्कते .... परन्त्विति । तत्र हेतुमुपपादयति .... तत्र परंपरयेति । परमाणुनीलवृत्तिनीलत्वे पृथिवीपरमाणुवृत्तिपृथिवीत्वे महत्वोद्भूतसम्बन्ध दर्शयति — तथाहीत्यादिना । दोषान्तरमपिदर्शयति .... एवं वायाविति । निरुक्तदोषान्परिहरति .... तस्मादित्यादिना ॥

[मुक्तावली]

एवं वाय्वादौ नसत्तादिचाक्षुषं तत्र चक्षुः संयोगस्य रूपावच्छिन्नत्वभावात् । एवं यत्र घटस्य पृष्ठावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्त्वग्रावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुः



संयोगे विशेषणंदेयम् । एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणम् । द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः । द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः । अत्रापि महत्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वञ्च पूर्ववदेव बोध्यम् ॥

(सुबोधिनी)

वाय्वादौ सत्ताप्रत्यक्षस्यापत्तिं वारयति । ....एवमिति । तत्र हेतुमुपपादयति । ....तत्रेति ) द्रव्यचाक्षुषकारणतावच्छेदककादौ विशेषणान्तरप्रक्षेपणपुरः सरं दोषान्तरं वारयति । एवं यत्रेत्यादिना ॥ एवञ्च किं कलितं, द्रव्यविषयकचाक्षुषप्रत्यक्षत्वावच्छिन्नं प्रति महत्वोद्भूतरूपालोकसंयोगावच्छिन्नचक्षुः संयोगस्य कारणत्वं; एवमन्यचाक्षुषत्वावच्छिन्नं प्रत्यपि चक्षुः संयुक्तसमवायादिषु महत्वोद्भूतरूपाद्यवच्छिन्नत्वं बोध्यमिति ॥ चाक्षुषप्रत्यक्षे चक्षुः संयोगादीनां कारणत्वं विशिष्योपपाद्य स्पार्शनप्रत्यक्षे त्वक्संयोगादीनां कारणत्वं विशिष्योपपादयति । ....एवं द्रव्यस्पार्शनप्रत्यक्ष इत्यादिना । ननु त्वगिन्द्रियजन्यप्रत्यक्षत्वावच्छिन्नं प्रति त्वक्संयोगस्य कारणत्वे त्वक्संयोगात्परमाणोरपि प्रत्यक्षत्वापत्तिरित्यत आह । ....अत्रापीति ।

[मुक्तावली]

एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवाय, गन्धसमवेतस्य घ्राणजप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः । रासनप्रत्यक्षे रसनासंयुक्तसमवायः रससमवेतरासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम् । शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः, शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम् । अत्र सर्वप्रत्यक्षं लौकिकं बोध्यम् । वक्ष्यमाणमलौकिकप्रत्यक्षमिन्द्रियसंयोगादिकं विनापि सम्भवति, एवमात्मप्रत्यक्षे मनः संयोगः, आत्मसमवेतमानसप्रत्यक्षे म

नः संयुक्तसमवायः, आत्मसमवेतसमवेतमानसप्रत्यक्षे मनस्संयुक्तसमवेतसमवायः कारणम् ॥

(सुबोधिनी)

एवं गन्धप्रत्यक्ष इत्यारम्य संयुक्तसमवेतसमवायः कारणमित्यन्तं स्पष्टोऽर्थः ॥ ५९ – ६० ॥

[मुक्तावली]

का ॥ **विशेषणतया तद्वदभावानां ग्रहोभवेत् ॥ ६१ ॥**

मु ॥ अभावप्रत्यक्षे समवायप्रत्यक्षे चेंद्रियसम्बद्धविशेषणता हेतुः वैशेषिकमतेतु समवायो नप्रत्यक्षः । अत्र यद्यपि विशेषणता नानाविधा, तथाहि भूतलादौ घटाद्यभावः संयुक्तविशेषणतया गृह्यते, संख्यादौ रूपाद्यभावः संयुक्तसमवेताविशेषणतया, संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेताविशेषणतया, शब्दाभावः केवलश्रोत्रावच्छिन्नाविशेषणतया, कादौ खत्वाभावः श्रोत्रावच्छिन्नसमवेताविशेषणतया, एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया, घटाभावादौ पटाभावः चक्षुः संयुक्तविशेपणविशेषणतया, एवमन्यत्राप्यूह्यम् । तथापि विशेषणतात्वेन एकैव सा गण्यते, अन्यथा षोढासन्निकर्ष इति प्राचां प्रवादो व्याहन्येतेति ॥

(सुबोधिनी)

मूले विशेषणतयेति ॥ विशेषणतासन्निकर्षेणेत्यर्थः ॥ तथाच तद्वदिति दृष्टांतेन यथा संयोगादिसन्निकर्षैः घटादीनां प्रत्यक्षं तथैव विशेषणतासान्निकर्षेणाभावानां प्रत्यक्षं जायत इत्याशयः ॥ मुक्तावल्यां अभावप्रत्यक्षे समवायप्रत्यक्षे चेति ॥ इदन्तु इन्द्रियसंबन्धविशेषणतायाः कारणत्वोपपादनम् गौतममताभिप्रायेण ॥ वैशेषिकमते यो विशेषस्तमुपपादयति ॥ —वैशेषिकमतेत्विति । अत्रेत्यादिस्पष्टोर्थः ॥ ६१ ॥



(मुक्तावली)

का ॥ यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते।
प्रत्यक्षं समवायस्य विशेषणतया भवेत्॥ ६२ ॥

मु ॥ अत्राभावप्रत्यक्षे योग्यानुपलब्धिः कारणम् । तथाहि भूतलादौ घटादिज्ञाने ज्ञाते घटाभवादिकं न ज्ञायते तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम् । तत्र योग्यताप्यपेक्षिता, साच प्रतियोगिसत्वप्रसञ्जनप्रसाञ्जतप्रतियोगिकत्वरूपा, तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसाञ्जितउपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः, तथाहि यत्रालोकसंयोगादिकं वर्तते तत्र यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते तत्र घटाभावादेः प्रत्यक्षं भवति, अन्धकारेतु नापादायितुं शक्यते, तेन घटाभावादे रन्धकारे न चाक्षुषप्रत्यक्षं, स्पार्शनप्रत्यक्षन्तु भवत्येव आलोकसंयोगं विना स्पार्शनप्रत्यक्षस्यापादायितुं शक्यत्वात् ।

गुरुत्वादिकं यदयोग्यं तदभावस्तु नयोग्यः, तत्र गुरुत्वादिप्रत्यक्षस्यापादयितु मशक्यत्वात्, वायावुद्भूतरूपाभावः, पाषणे सौरभाभावः, गुडे तिक्ताभावः, वह्नावनुष्णत्वाभावः, श्रोत्रे शब्दाभावः, आत्मनि सुखाद्यभावः, एवमादय स्तत्तादिन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्यापादायितुं शक्यत्वात् । संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता, अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यतापेक्षिता अतस्तम्भादौ पिशाचादिभेदेऽपि चक्षुषा गृह्यते॥ ६२ ॥

(सुबोधिनी)

ननु प्रतियोगिप्रत्यक्षस्य सत्वेऽभावप्रत्यक्षस्यानुत्पत्त्या प्रतिबं

गि प्र त्य क्षा भा वे ऽ भा व प्र त्य क्षो त्प त्त्या .. अ भा व प्र
त्यक्षं प्रति प्रतियोग्यनुपलब्धिरूपप्रमाणान्तरस्यैवान्वयव्यतिरेकाभ्यां
कारणत्वं न तु विशेषणतासन्निकर्षस्य, तस्यानभ्युपगमात् । नच सम
वायप्रत्यक्षान्यथानुपपत्त्या विशेषणतासन्निकर्षः सिद्धः तेनैवाभावप्रत्यक्ष
स्यैवोपपत्तावनुपलब्धेः प्रमाणान्तरत्वस्वीकारोऽसङ्गत इति वाच्यम् ।
समवायप्रत्यक्षस्यैवानभ्युपगमादिति । भाट्टानां मतं निरासितु मुपपाद
यति मूले ··· यादिस्यादिति । तथाच विशेषणतासन्निकर्षेण सम
वायस्य प्रत्यक्षसम्भवात् अभावप्रत्यक्षेपि विशेषणतासन्निकर्षस्यैव प्र
योजकत्वमास्तां अनुपलब्धेरपि त त्स ह का रि का र ण त्वं
न तु प्र मा णां त र त्वं अ न्य त्र क्लृ प्त
चक्षुरादिप्रमाणैरेव तदुपपत्तेरिति भावः । तदेव स्पुटयति मुक्ताव
ल्यां ....अत्रेति । योग्यानुपलब्धिः कारणं, चक्षुरादिप्रत्यक्षप्रमाणै
र्विशेषणतासन्निकर्षबलादभावप्रत्यक्षे जननीये योग्यानुपलब्धिः स
हकारिकारणं नतु योग्यानुपलब्धिः प्रमाणान्तरमित्याशयः । अभावप्र
त्यक्षं प्रति योग्यानुपलब्धेः कारणत्वमेवोपपादयति ––तथाहीत्या
दिना । अनुपलब्धेरेवाभावप्रत्यक्षं प्रति कारणत्वमास्तां किं तत्र यो
ग्यतानिवेशनेनेत्यत आह —तत्रेति । योग्यतां परिष्करोति ....
साचेति ॥ तदर्थमुपपादयति ....तदर्थश्चेति ॥ तदेवोपपादयति ....
तथाहीत्यादिना । अन्धकारे घटचाक्षुषस्याप्रत्यक्षस्या पादयितुमश
क्यत्वेन योग्यानुपलब्ध्यभावान्नान्धकारे घटाभावचाक्षुषानुत्पत्तिव
दन्धकारेऽभावस्पार्शनमपि न स्यादित्यत आह —स्पार्शनप्रत्यक्षं
त्विति ॥ यदयोग्यमिति ॥ अतींद्रियमित्यर्थः ॥ गुरुत्वाभावस्याप्रत्यक्ष
त्वे हेतुमुपपादयति ....तत्रेति ॥ वायावित्यादि शक्यत्वादित्यन्तं
स्पष्टोर्थः ॥ स्तम्भे पिशाचाभावप्रत्यक्षं जायतामित्यत आह ––संस



र्गाभावप्रत्यक्ष इति ॥ तथाच योग्यप्रतियोगिकसंसर्गाभाव एव प्रत्य
क्षविषयो भवतीति पिशाचस्यायोग्यत्वेन स्तम्भेन पिशाचाभावप्रत्य
क्षमिति भावः ॥ ननु तर्हि पिशाचस्यायोग्यत्वेन स्तम्भे पिशाचभेदप्र
त्यक्षं न स्यादित्यत आह ––अन्योन्याभावप्रत्यक्ष इति ॥ तथाचसं
सर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यत्वस्य प्रयोजकत्वेऽपि नान्यो
न्याभावप्रत्यक्षे प्रतियोगिनो योग्यत्वं प्रयोजकं किंतु अभावाधि
करणस्ययोग्यत्वं प्रयोजकं एवं सति प्रतियोगिनः पिशाचस्यायो
ग्यत्वेऽपि अधिकरणस्य स्तम्भादेर्योग्यत्वेन स्तम्भे न पिशाचभे
दप्रत्यक्षानुपपत्तिरिति भावः । तदेव स्पुटयति .... अतस्तम्भादावि
ति ॥ ६२ ॥

[मुक्तावली]

का ॥ **अलौकिकस्तु व्यापार स्त्रिविधःपरिकीर्तितः ।**
**सामान्यलक्षणो ज्ञान लक्षणो योगज स्तथा ॥ ६३ ॥**

मु ॥ एवं प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधं तत्र लौकिकप्र
त्यक्षे षोढासन्निकर्षा वर्णिताः अलौकिकसन्निकर्षास्त्विदानीमुच्यते
...अलौकिकास्त्विति ॥ व्यापारः सन्निकर्षः ॥ सामान्यलक्षण इ
ति ॥ समान्यं लक्षणं यस्येत्यर्थः ॥ तत्र लक्षणपदेन यदि स्वरूप
मुच्यते तदा सामान्यस्वरूपा प्रत्यसत्तिरित्यर्थो लभ्यते, तच्चेंद्रि
यसम्बद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम्, तथाहि यत्रेंद्रियसंयु
क्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं तत्र ज्ञाने धू
मत्वं प्रकारस्तत्र धूमत्वेन सन्निकर्षेण धूमा इत्येवं रूपं सकलधूम
विषयकं ज्ञानं जायते ॥ अत्र यदींद्रियसम्बद्धप्रकारीभूतमित्येवो
च्यते तदा धूली पटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं
न स्यात् तत्र धूमत्वेन सह इन्द्रियसम्बन्धाभावात् ॥ मन्मते

त्विंद्रियसम्बद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञाने तत्र प्र कारीभूतं धूमत्वं प्रत्यासत्तिः ॥ इन्द्रियसम्बन्धश्च लौकिकोग्राह्यः ॥ इदं च बहिरिंद्रियस्थले. मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्र त्यासत्तिः ॥ ६३ ॥

(सुबोधिनी)

अलैकिवप्रत्यक्षहेतुभूतालौकिकसन्निकर्षं विभज्यप्रदर्शनार्थं प्रथम तः प्रत्यक्षं द्वेधा विभज्य दर्शयति ....एवमिति। लौकिकप्रत्यक्षहे तुभूतलौकिकसन्निकर्षमुपक्रांतमुपसंहृत्यालौकिकसन्निकर्ष प्रदर्शना र्थं मूलमवतारयति अलौकिकस्त्विति। तज्जन्यत्वे सति तज्जन्यज नको व्यापार इति भ्रमनिरासाय व्यापारपदार्थं मुपपादयति .... व्यापारः सन्निकर्ष इति। मूलस्थस्य सामान्यलक्षण इत्यस्यार्थं व र्णयितुं मूलमवतारयति ....सामान्यलक्षण इतीति। सामान्यलक्षण मित्यस्य विग्रहमुपपादयति ....सामान्यमिति। लक्षणमित्यस्यार्थमुप पादयति —तत्र लक्षणपदेनेति। सामान्यस्वरूपाप्रत्यासत्तिरित्यस्य प्रकारीभूतो धर्मे विशेषः सम्बन्ध इत्यर्थो लभ्यते स चार्थो नादर णीयः वक्ष्यमाणादोषप्रसक्तेरतः सामान्यलक्षणा प्रत्यासत्तिरित्यस्यार्थं निष्कृष्टमुपपादयति ....तच्चेत्यादिना। तच्चेत्यादिना परिष्कृतां सा मान्यलक्षणाप्रत्यासत्तिं विशिष्य समन्वयं करोति ....तथाहीत्यादि ना। इन्द्रियसम्बद्धप्रकारीभूतमित्यस्यैव सम्यक्त्वे इन्द्रियसम्बद्धवि शेष्यकज्ञानप्रकारीभूतमित्यादिगुरुतरारंभो व्यर्थ इत्याद्याशङ्कां परि हरति ....अत्रेत्यादिना। शेषः सुगमः ॥६३॥

[मुक्तावली]

**परन्तु समानानां** भावः सामान्यं तच्च क्वचिन्नित्यं धूमत्वा दि क्वचिच्चानित्यं घटादि यत्रैको घटः संयोगेन भूतले समवायेन



कपाले वा ज्ञातस्तदनन्तरं सर्वेषामेव तद्घटादिमतां भूतलादीनां कपालादीनां वा ज्ञानं भवति। तत्रेदंबोध्यम् परन्तु सामान्यं ये न सम्बन्धेन ज्ञायते तेन सम्बन्धेनाधिकरणानां प्रत्यासत्तिः। किं तु यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्य लक्षणया सर्वेषां तद्घटवतां भानं न स्यात् सामान्यस्य तदानीम भावात्। किंचेन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं यत्र जातं त त्रपरादिने इन्द्रियसम्बन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्वात्। तादृशज्ञानं कुतो नजन्यते तस्मात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिः नतु सामान्यमित्याह। आसत्तिरिति।

**का॥ आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते।**
**तदिंद्रियजतद्धर्मबोधसामग्र्यपेक्षते ॥ ६४ ॥**

मु॥ आसत्तिः प्रत्यासत्तिरित्यर्थः। तथाच सामान्यलक्षणमित्यत्र ल क्षणशब्दस्य विषयोर्थः तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्य र्थो लभ्यते। ननु चक्षुः संयोगादिकं विनापि सामान्यज्ञानं यत्र व र्तते तत्र सकलघटादीनां चाक्षुषप्रत्यक्षं स्यादत आह.... तदिति। अस्यार्थः। यदा बहिरिंद्रियेण सामान्यलक्षणया ज्ञानं जननीयं त दा यत्किंचिद्धर्मिणि तत्सामान्यस्य तदिंद्रियजन्यज्ञानस्य सामग्र्यपे क्षिता, साच सामग्री चक्षुः संयोगालोकसंयोगादिकं तेनान्धकारा दौ चक्षुरादिना तादृशं ज्ञानं नजन्यते ॥ ६४ ॥

(सुबोधिनी)

आसत्तिरिंद्रियाणामित्यादिमूलमवतारयितुं भूमिका (अवतरणानु कूलयुक्तिं) मारचयति ....परन्त्वित्यादिना। नित्यायाः धूमत्वादिरूपप्र त्यासत्तेः निखिलधूमज्ञानार्थ मुपयुक्तत्वेऽपि अनित्यघटादिरूपसा मान्यप्रत्यासत्तेः कुत्रोपयोग इत्यत आह ....यत्रैको घट इति। संयो

गेन भूतले घटो ज्ञातः इत्यग्रेतनेनान्वयः । ....तत्रेदं बोध्यमिति । तथाच यत्र संयोगेन भूतले घटो ज्ञातः ज्ञायमानतद्घटरूपानित्यप्रत्यासत्त्या तद्घटवद्भूतलादिप्रत्यक्षोत्पत्त्या तादृशप्रत्यक्षोपपत्तेः ज्ञायमानानित्यप्रत्यासत्तेरपि स्वीकारो अत्यावश्यक इत्याशयः ।

ननु तत्रापि स्वाश्रयाश्रयत्वरूपपरंपरासम्बन्धेन भूतलकपालादिषु प्रत्यासन्न घटत्वरूप नित्यसामान्यप्रत्यासत्त्यैव तद्घटवद्भूतलादिविषयकालौकिकप्रत्यक्षस्यैवोपपत्तेः अनित्यसामान्यस्य प्रत्यासत्तित्वस्वीकारो व्यर्थ इत्यत आह ....परन्त्विति । तथाच भूतलो घटत्वस्य स्वाश्रयाश्रयत्व सम्बन्धेनाज्ञातत्वेन घटवद्भूतलादिविषयकालौकिकप्रत्यक्षं प्रति न घटत्वस्य प्रत्यासत्तित्वमपि तु भूतलादौ संयोगादिना घटस्यैव ज्ञातत्वेन ज्ञायमानघटस्यैव संयोगादिना तद्घटवद्भूतलादिविषयकालौकिकप्रत्यक्षं प्रति प्रयोजकसन्निकर्षत्वमभ्युपगन्तव्यमिति भावः । येन सम्बन्धन सामान्य ज्ञायते तेन सम्बन्धेनाधिकरणानां सामान्यं प्रत्यासत्तिरिति नियमानङ्गीकारे समवायेन कपालेषु ज्ञातस्य घटत्वरूपसामान्यस्य प्रत्यासत्तित्वेन तादृशप्रत्यासत्त्या कालादिविविषयकप्रत्यक्षं स्यादतस्तादृशनियम आवश्यकः एवं सति संयोगेन घटवद्भूतलादिप्रत्यक्षानुपपत्त्या अनित्यसामान्यस्यापि प्रत्यासत्तित्व मवश्यमभ्युपगन्तव्यमित्याशयः ॥

एवंस्थिते ज्ञायमानसामान्यस्य प्रत्यासत्तित्वे दोषमुपपादयति —किंत्विति । एवं सतीत्यर्थः । तथाच ज्ञायमानसामान्यस्य प्रत्यासत्तित्वे अनित्यघटादीनामपि तत्तद्घटवद्भूतलादीनां सम्बन्धतया यत्र विनष्टतादृशघटादिस्मरणं जातं तत्र तद्घटवद्भूतलादिप्रत्यक्षं नस्यात् ज्ञायमानसामान्यप्रत्यासत्तेः घटादेस्तदानीमसत्वात् । नचेष्टापत्तिः विनष्टतादृशानित्यघटादिस्मरणेनापि तद्घटवद्भूतलादिप्रत्यक्षस्यैवानुभू-



यमानत्वादित्याशयः । ज्ञायमानसमान्यस्य प्रत्यासत्तित्वे दोषांतरमपि दर्शयति — किञ्चेति । पूर्वेद्युः इन्द्रियसम्बन्धभूतलादिविशेष्यकं घटप्रकारकं भूतलं घटवदिति ज्ञानं जातं परेद्युः भूतलादाविंद्रियसम्बन्धं विनापि तद्घटवद्भूतलादिविषयकप्रत्यक्षोत्पत्तिः स्यात् पूर्वकालीनज्ञानविषयघटादिरूपसामान्यस्य परदिने तत्र सत्वादित्याशयः इदमप्यत्रावधेयम्, ज्ञायमानसामान्यस्य प्रत्यासत्तित्वे यदा चैत्रस्य इन्द्रियसम्बंधभूतलविशेष्यकघटप्रकारकं भूतलं घटवदिति ज्ञानं जातं तादृशज्ञानविषयघटादिप्रत्यासत्त्या तदानीमेव मैत्रस्य तद्घटवद्भूतलादिप्रत्यक्षस्योत्पत्तिः स्यात् तत्पुरुषीयप्रत्यक्षं प्रति तत्पुरुषीयेंद्रियसम्बंधविशेष्यकज्ञानप्रकारीभूतस्य प्रत्यासत्तित्वे अनंतकार्यकारणभावप्रसक्तिरिति । फलितमुपपादयति ... तस्मादिति । सामान्यलक्षणइत्यत्र लक्षणशब्दस्य स्वरूपार्थकत्वसम्भवे कीदृशार्थकत्वं स्वीकरणीयमित्यत आह ... लक्षणशब्दस्येति । तथाच पूर्ववदेव सामन्यं लक्षणं यस्येत्येव विग्रहः, किंतु लक्षणशब्दस्य विषयार्थकत्वेन सामान्यविषयकं ज्ञानमित्यर्थो लभ्यते एवञ्च सामान्यज्ञानमेव प्रत्यासत्तिरिति न पूर्वोक्तदोषाणामवकाश इति भावः ॥

ननु सामान्यज्ञानस्यालौकिकप्रत्यक्षं प्रति हेतुत्वे किमत्र कारणतावच्छेदकं ? किं वा कार्यतावच्छेदकं ? को वा कारणतावच्छेदकसम्बन्धः ? को वा कार्यतावच्छेदकसम्बन्धः ?, निर्विकल्पकसाधारणं स्मरणसाधारणं च सामान्य(घटत्वादि) ज्ञानत्वं कारणतावच्छेदकं, घटत्वप्रकारकप्रत्यक्षत्वं कार्यतावच्छेदकं, स्वप्रकारीभूतघटत्वाश्रयत्वं च कार्यतावच्छेदकसम्बन्धः, स्वविषयघटत्वाश्रयत्वं कारणतावच्छेदकसम्बन्ध इति निष्कर्षः । तदिंद्रियजेत्यादिमूलमवतारयितुं भूमिकामारचयति —नन्वित्यादिना । यदा बहिरिंद्रियेणेति । तथाच

व्याप्यधर्मावच्छिन्ने जननीये व्यापकधर्मावच्छिन्नोत्पादककारणसामग्री
अपेक्षितेति सामान्यलक्षणाजन्यघटत्वादिप्रकारकचाक्षुषत्वव्यापक
घटत्वप्रकारकलौकिकचाक्षुषत्वावाच्छिन्नोत्पादकलौकिकसन्निकर्षस्याभावे
नह्यलौकिकचाक्षुषत्वावच्छिन्नस्यापात्तिरिति भावः । का सा
व्यापकधर्मावच्छिन्नोत्पादकसामाग्री इत्यत आह ....साचेति । आ
लोकसंयोगादिक मित्यत्रादिना दोषाभावपरिग्रहः । निरुक्तसामग्र्या
मालोकसंयोगनिवेशस्य प्रयोजनमुपपादयति — तेनांधकारादावि
ति ॥ ६४ ॥

[ मुक्तावली)

**का ॥ विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।**

मु ॥ ननु ज्ञानलक्षणाप्रत्यासत्ति यदि ज्ञानरूपा सामान्यलक्षणापि
ज्ञानरूपा तदा तयो र्भेदो न स्यादत आह — विषयीति । सामान्य
लक्षणाप्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति, ज्ञानलक्षणाप्रत्यास
त्तिस्तु यद्विषयकं ज्ञानं तस्यैवप्रत्यासत्तिः ।अत्रायमर्थः । प्रत्यक्षे सान्नि
कर्षं विना भानं नसम्भवति । तथाच सामान्यलक्षणां विना धूमत्वेन
सकलधूमानां वाह्नत्वेन सकलवह्नीनां च भानं कथंभवेत् तदर्थं सा
मान्यलक्षणा स्वीक्रियते । नच सकलवह्निधूमभानाभावे का क्षतिरि
ति वाच्यम् । प्रत्यक्षधूमे वह्निसम्बंधस्य गृहीतत्वात् अन्यधूमस्य
चानुपस्थितत्वात् धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः । मन्मते
तु सामान्यलक्षणया सकलधूमोपस्थितौ कालांतरीयदेशांतरीयधूमे
वह्निव्याप्यत्वसंदेहः सम्भवति । नच सामान्यलक्षणास्वीकारे प्रमेयत्वे
न सकलप्रमेयज्ञाने जाते सार्वज्ञ्यापत्तिरिति वाच्यम् । प्रमेयत्वेन स
कलप्रमेयज्ञाने जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्या
भावात् । एवं ज्ञानलक्षणाया अस्वीकारे सुरभिचंदनमिति ज्ञाने



सौरभस्य भानं कथंस्यात् । यद्यपि समान्यलक्षणयापि सौरभस्य भा
नं सम्भवीत तथापि सौरभत्वस्य भानं ज्ञानलक्षणया । एवं यत्र धू
मत्वेन धूलीपटलं ज्ञातंतत्र धूलीपटलस्यानुव्यवसाये भानंज्ञानलक्षणया ॥

(सुबोधिनी )

विषयी यस्येति मूलमवतारयितु भूमिकां रचयति — नान्वि
त्यादिना । यदि ज्ञानरूपेत्यत्र यदि शब्दः सामान्यलक्षणापीत्युत्तरं
योज्यः, तथा च ज्ञानलक्षणा प्रत्यासत्तिः ज्ञानरूपा सामान्यलक्षणा
पि यदि ज्ञानरूपा तदा तयोर्भेदो न स्यादित्यन्वयः.... विषयीति ।
यस्य विषयी यद्विषयकं ज्ञानं भवति तादृशज्ञानलक्षणाप्रत्यसत्तिः, त
स्यैव, व्यापारः सम्बन्ध इत्यर्थः । तथाच सामान्यलक्षणाप्रत्यास
त्तिः धर्मिभानप्रयोजिका, ज्ञानलक्षणाप्रत्यसत्तिः धर्मभानप्रयोजिकेति
तयोः भेद इत्याशयः.... अत्रायमर्थ इति । अत्रायमाशय इत्यर्थः ।
सामान्यलक्षणाप्रत्यासत्ति स्वीकारे हेतुमुपपादयति — प्रत्यक्ष इति ।
भानं विषयता । तथाच प्रत्यक्षविषयतायाः सन्निकर्षाश्रयत्वव्याप्य
तया सामान्यलक्षणारूपप्रत्यसत्तिं विना धूमप्रत्यक्षे निखिलधूमविष
यतारूपभानं न सम्भवतीति प्रत्यक्षे निखिलधूमविषयतारूपभानार्थं
सामान्यलक्षणास्वीकार इति भावः । शङ्कते ....न चेति । वाच्यमि
ति परेणान्वयः । समाधत्ते — प्रत्यक्ष इत्यादिना । सामान्यलक्षणा
स्वीकारे दोषमुपन्यस्यति । ...न चेति । वाच्यमिति परेणान्वयः ।
तथाच सर्वविषयकज्ञानवत्वस्यैव सर्वज्ञत्वप्रयोजकतया प्रमेयत्वरूप
सामान्यलक्षणाप्रत्यासत्या निखिलपदार्थज्ञाने जीवस्यापि सर्वज्ञत्वा
पत्तिरित्याशयः । निरुक्ताशङ्कां परिहरति .... प्रमेयत्वेनेति । तथा
च सर्वज्ञत्वप्रयोजकं विशिष्य निखिलपदार्थ ज्ञानवत्वमेव न तु सा
मान्यतः प्रमेयत्वेन निखिलपदार्थज्ञानमतो आवश्यसामान्यतः प्रमे

यत्वेन सामान्यलक्षणाप्रत्यासत्त्या निखिलपदार्थ ज्ञानसम्भवेपि विशिष्य निखिलपदार्थज्ञानाभावान्न सर्वज्ञत्वापत्तिरिति भावः ॥ ज्ञानलक्षणास्वीकारे हेतुमुपपादयति —एवमिति। अत्रायमाशयः चंदनखण्डेन सह चक्षुः संयोगे सति सौरभस्मृत्या सुरभिचंदनमिति प्रत्यक्षं जायते, तत्प्रत्यक्षं चंदनखण्डांशे लौकिकं, सौरभांशे अलौकिकं, एवं सति ज्ञानलक्षणाप्रत्यासत्यनङ्गीकारे तादृशप्रत्यक्षे सौरभस्य भानं न स्यात् सौरभत्वप्रकारकलौकिकप्रत्यक्षसामाग्र्या अभावेन सामान्यलक्षणा प्रत्यासत्यापि तद्भानासंभवादतो ज्ञानलक्षणाप्रत्यासत्तिरङ्गीकर्तव्येति । .... यद्यपीति । यथा कथंचित् सौरभत्वप्रकारकमानससामग्रीसत्वे सामान्यलक्षणाप्रत्यासत्त्या सौरभस्य भानसंभवे ऽपि प्रमेयत्वरूपसामान्यप्रत्यासत्त्या सौरभत्वस्य भानोपपत्तावपि स्वरूपतः सौरभत्वस्य भानोपपत्यर्थं ज्ञानलक्षणाप्रत्यासत्तिरङ्गीकर्तव्येत्याशयः ।

ज्ञानलक्षणाप्रत्यासत्तिस्वीकारे युक्त्यंतरमपि दर्शयति ।.... एवमिति। धूमत्वज्ञानरूपसामान्यलक्षणायाः स्वविषयधूमत्वाश्रयत्वसंबन्धेन धूलीपटले असत्वात् धूलीपटलस्य सामान्यलक्षणाप्रत्यासत्त्या धूमत्वेन धूलीपटलमहं जानामीत्यनुव्यवसाये भानं न संभवति अतस्तादृशानुव्यवसाये धूलीपटलस्य भानाय ज्ञानलक्षणा अभ्युपगन्तव्येत्याशयः ॥

[मुक्तावली]

का ॥ योगजो द्विविधः प्रोक्तो युक्तयुंजानभेदतः ॥ ६५ ॥

मु ॥ योगज इति । योगाभ्यासजनितो धर्मविशेषः श्रुतिस्मृतिपुराणादिप्रतिपाद्य इत्यर्थः । युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापि द्वैविध्यमिति भावः ॥ ६५ ॥



(सुबोधिनी)

योगज इत्यस्यार्थ मुपपादयति — योगाभ्यासजनित इति । योगजस्य द्वैविध्ये हेतुमुपपादयति — युक्तेति ।

[मुक्तावली]

का ॥ युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः

मु ॥ युक्तस्येति । युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादे निखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति । द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति ॥

*–इति–*

श्री विश्वनाथपञ्चाननभट्टाचार्यविरचितायां

सिद्धान्तमुक्तावल्यां

प्रत्यक्षपरिच्छेदः

–xxxxx–

(सुबोधिनी)

.... युक्तस्येतीति । शेषः सुगमः ॥

इति

श्री गौतमकुलाम्बुधिपूर्णचन्द्रेण वेंकटेश्वरशास्त्रिणः पुत्रेण

न्यायवेदान्तविद्यापारीणेन बुलुसु अप्पन्न

(परेश्वर) शास्त्रिणा विरचितायां

सिद्धान्तमुक्तावलीव्याख्यायां

सुबोधिव्याख्यायां

प्रत्यक्षपरिच्छेदः

ॐ

श्रीमहागणाधिपतये नमः ।

## न्यायसिद्धान्तमुक्तावल्याम्

### (अनुमानपरिच्छेदः)

[ मुक्तावली ]

का ॥ व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥

मु ॥ अनुमितिं व्युत्पादयति । ...व्यापारस्त्विति । अनुमितौ व्याप्तिज्ञानं करणं । परामर्शो व्यापारः । तथाहि येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात्स एव पुरुषः क्वचित्पर्वतादावविच्छिन्नमूलां धूमलेखां पश्यति तदनन्तरं धूमो वन्हिव्याप्य इत्येवं रूपं व्याप्तिस्मरणं तस्य भवति पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते तदनन्तरं पर्वतो वह्निमानित्यनुमितिर्जायते ।

(सुबोधिनी)

विघ्नाद्रिभेददक्षं
श्रीमद्गौरीशहृदयकमलार्कम् ।
पूतं करींद्ररत्नं
हृदि कलये भृंगशोभि मुखपद्मम् ॥

उपजीव्योपजीवकभावसंगत्या प्रत्यक्षानंतरमनुमानं निरूपयतीत्याह । —अनुमितिं व्युत्पादयतीति । महानसे येन वह्निधूमयोः

ॐ

श्रीमहागणाधिपतये नमः ।

न्यायसिद्धान्तमुक्तावल्याम्

(अनुमानपरिच्छेदः)

[मुक्तावली]

का ॥ व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥

मु ॥ अनुमितिं व्युत्पादयति । ...व्यापारस्त्विति । अनुमितौ व्याप्तिज्ञानं करणं । परामर्शो व्यापारः । तथाहि येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात्स एव पुरुषः कचित्पर्वतादावविच्छिन्नमूलां धूमलेखां पश्यति तदनन्तरं धूमो वन्हिव्याप्य इत्येवं रूपं व्याप्तिस्मरणं तस्य भवति पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते तदनन्तरं पर्वतो वह्निमानित्यनुमितिर्जायते ।

(सुबोधिनी)

विघ्नाद्रिभेददक्षं
श्रीमद्गौरीशहृदयकमलार्कम् ।
पूतं करीन्द्ररत्नं
हृदि कलये भृंगशोभि मुखपद्मम् ॥

उपजीव्योपजीवकभावसंगत्या प्रत्यक्षानंतरमनुमानं निरूपयतीत्याह । —अनुमितिं व्युत्पादयतीति । महानसे येन वह्निधूमयोः

साहचर्ये भूयो यदा गृहीतं तदा धूमो वह्निव्याप्य इति ज्ञानं तस्य जायते ततः स एव पुरुषः पर्वतसमीपं गतः तत्र चक्षुषा धूमस्य सन्निकर्षे सति पर्वते धूमं पश्यति पर्वतो धूमवानिति एतदेव पक्षधर्मताज्ञानम् । वह्निनिरूपितव्याप्तेः स्वरूपसंबन्धेन धूमे वि द्यमानतया स्वरूपसंबन्धस्य व्याप्तिः धूमश्चेति द्वौ संबन्धिनौ तत्र एकसंबन्धिधूमज्ञानेऽपरसंबन्धिवह्निव्याप्तिस्मरणं जायते वह्निव्याप्यो धूमइति एतदेव व्याप्तिज्ञानमिति अनुमानमिति व्यवह्रियते शा स्त्रविद्भिः । ततो वह्निव्याप्यधूमवान्पर्वत इतिज्ञानं जायते एतदेव लिङ्गपरामर्श इत्युच्यते । एतादृशालिङ्गपरामर्शात्पर्वतो वह्निमानि त्यनुमितिर्जायते । पक्षधर्मताज्ञानं व्याप्तिज्ञान एव कारणं । व्या प्तिज्ञानन्तु परामर्शद्वारा अनुमितौ कारणम । परामर्शो व्यापारः । व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वं । तत्पदार्थः करणं त थाच व्याप्तिज्ञानरूपकरणजन्यत्वस्य कारणजन्यपर्वतो वन्हिमा नित्य नुमिति जनकत्वस्य च वन्हिव्याप्यधूमवान्पर्वत इति ज्ञाने विद्यमान तया वन्हिव्याप्यधूमवान्पर्वत इति परमर्शो व्यापारः । एतादृ शंपरामर्शजन्यं पर्वतो वह्निमानिति ज्ञानमनुमितिःफलम् ।

[मुक्तावली]

का॥ अनुमायां ज्ञायमानं लिङ्गन्तु करणं न हि ।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥

मु ॥ अत्र प्राचीनास्तु व्याप्यत्वेन ज्ञायमानं लिङ्गमनुमिति करणमिति वदन्ति तद्दूषयति । ज्ञायमानमिति ।

(सुबोधिनी)

ज्ञायमानं लिङ्गमनुमितिकारणमिति वदतां प्राचीनानां मतं निरसितुं तन्मतमुपन्यस्यति । .... अत्रेति । प्राचामयमाश



यः । न हि वह्निव्याप्य धूमवान्पर्वत इति ज्ञानस्यानुमितिं प्रति कारणत्वं किंतु तादृशपरामर्शविषयधूमस्यैव कारणत्वं ('विषयतासंबंधे न परामर्शविशिष्टधूमलिङ्गस्यैव कारणत्वं,) एतेन वह्निव्याप्यधूमवा न्पर्वत इति परामर्शशून्यकालेऽपि धूमस्य पर्वते सत्वेन तदानीं पर्वतो वह्निमानित्यनुमितिः स्यादिति परास्तम् परामर्शशून्यकाले विषयतासंबंधेन परामर्शविशिष्टधूमस्याभावादिति । तद्दूषणग्रंथं व्या ख्यातु मुपक्रमते । ...ज्ञायमानमितीति ॥

[मुक्तावली]

लिङ्गस्यानुमित्यकारणत्वे युक्तिमाह । अनागतादीति । यद्यनु मितौ लिङ्गं करणं स्यात्तदाऽनागतेन लिङ्गेन विनष्टेन चानुमि तिर्न स्यादनुमितिकारणस्य लिङ्गस्य तदानीमभावादिति ॥

(सुबोधिनी)

ज्ञायमानलिङ्गस्यानुमित्यकरणत्वे हेतुमुपपादयन्नाह । ....युक्ति माहेति । तदेवोपपादयति । .... अनागतादीतादि । उत्तरकाला वच्छेदेन पर्वतो धूमवानिति ज्ञाने सति वह्निव्याप्यो धूम इति व्याप्तिस्मरणं जायते ततः वह्निव्याप्यधूमवान्पर्वत इति धूम प्रागभावकालीन परामर्शात्पर्वतो वह्निमानित्यनुमितिर्दृष्टा, एवं पूर्वका लावच्छेदेन पर्वतो धूमवानिति ज्ञानेन वह्निव्याप्यो धूम इति स्मरणं ततो वह्निव्याप्यधूमवान् पर्वत इति धूमध्वंसकालीनपराम र्शः तेनाप्यनुमितिर्दृष्टा, तादृशानुमित्योरनुपपत्तिः स्याद्यद्यनुमितौ लिङ्गं करणं स्यादनुमितिकाले लिङ्गाभावादित्यर्थः ॥ अतो लि ङ्गपरामर्शस्यैवानुमितिं प्रति कारणत्वमभ्युपगन्तव्यं । तथाच तदा नीं लिङ्गाभावेऽपि लिङ्गपरामर्शसत्वान्नानुमित्यनुपपत्तिरिति भावः।

[मुक्तावली]

**का ॥ व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ॥**

मु ॥ व्याप्यस्य पक्षवृत्तित्वधीरिति । व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितिजनकम् ॥

(सुबोधिनी)

परामर्शलक्षणोपपादकग्रंथं व्याख्यातुमारभते । व्याप्यस्य पक्षवृत्तित्वधीरितीति । तदेव स्फुटयति । .... व्याप्तिविशिष्टस्येति । व्याप्तिविशिष्टस्य हेतोरित्यर्थः । पक्षेण सह वैशिष्ट्यावगाहिज्ञानं पक्षेण सह संबन्धावगाहिज्ञानं परामर्श इत्यर्थः ॥

[मुक्तावली]

**तच्च पक्षो व्याप्य इति ज्ञानं पक्षो व्याप्यवानिति ज्ञानं वा ॥**

(सुबोधिनी)

परामर्शस्वरूपमेव दर्शयति ।....तच्चेति । परामर्शो द्विविधः पक्षविशेष्यकपरामर्शः पक्षप्रकारकपरामर्शश्चेति । वह्निव्याप्यधूमवान्पर्वत इति पक्षविशेष्यकपरामर्शः तत्र पक्षस्य विशेष्यत्वात् । वह्निव्याप्यधूमः पर्वत इति पक्षप्रकारकपरामर्शः तत्र पक्षस्य प्रकारत्वात् । द्विविधपरामर्शसाधारणलक्षणन्तु साध्यनिष्ठविषयतानिरूपितव्याप्तिनिष्ठविषयतानिरूपितहेतुनिष्ठविषयतानिरूपितपक्षनिष्ठविषयतानिरूपकत्वे सति ज्ञानत्वं । अस्ति च वह्निव्याप्यधूमवान्पर्वत इति परामर्शे लक्षणमेतत्, तथाहि वह्निव्याप्यधूमवान्पर्वत इति ज्ञाने वह्निः व्याप्तिः धूमः पर्वतः विषयाः, तत्र वह्नेर्व्याप्तौ विशेषणतया वह्निनिष्ठप्रकारताख्यविषयतानिरूपिता व्याप्तिनिष्ठा विशेष्यताख्यविषयता, व्याप्तेर्धूमे विशेषणतया व्याप्तिनिष्ठप्रकारताख्यविषयतानिरूपिता धूमनिष्ठविशेष्यताख्यविषयता धूमस्य पर्वते



विशेषणतया धूमनिष्ठप्रकारताख्यविषयतानिरूपिता पर्वतनिष्ठा विशेष्यताख्यविषयता भवति तत्र व्याप्तौ वह्निनिष्ठप्रकारतानिरूपिताविशेष्यता धूमनिष्ठविशेष्यतानिरूपितप्रकारता च विद्येते । एवं धूमे व्याप्तिनिष्ठप्रकारतानिरूपिताविशेष्यता पर्वतनिष्ठविशेष्यतानिरूपितप्रकारता च विद्येते, तथाच एकत्र विद्यमानविषयतयोरैक्याङ्गीकारेण व्याप्तिनिष्ठविशेष्यत्वप्रकारत्वयोः धूमनिष्ठविशेष्यत्वप्रकारत्वयोश्चैक्यस्यासिद्धत्वेन साध्यस्वरूपवन्हिनिष्ठविषयता निरूपितव्याप्तिनिष्ठविषयतानिरूपितहेतुभूत धूमनिष्ठप्रकारताख्यविषयतानिरूपितपर्वतनिष्ठविशेष्यताख्यविषयतानिरूपकत्वस्य ज्ञानत्वस्य च वन्हिव्याप्यधूमवान्पर्वत इति ज्ञाने सत्वात्, वन्हिव्याप्यधूमः पर्वत इत्याकारपरामर्शेतुवान्हिनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितधूमनिष्ठविशेष्यताख्यविषयतानिरूपितपर्वतनिष्ठप्रकारताख्यविषयतानिरूपकत्वस्य ज्ञानत्वस्य च सत्वादुभयत्र लक्षणसङ्गतिः । परामर्शभेदेनानुमित्योर्वैलक्षण्यं दर्शयति । —अनुमितिस्त्विति । वन्हिव्याप्यधूमवान्पर्वत इति । पक्षविशेष्यकपरामर्शात्पक्षीभूतपर्वतो वान्हिमानित्येव पक्षविशेष्यकानुमितिः जायते । वान्हिव्याप्यधूमः पर्वत इति पक्षविशेषणकपरामर्शात्पक्षभूतपर्वतविशेषणिका पर्वते वन्हिरित्यनुमितिर्जायत इत्यर्थः ॥

[मुक्तावली]

**द्विविधादपि परामर्शात्पक्षः साध्यवानित्येवानुमितिरित्यन्ये ॥**

(सुबोधिनी)

परामर्शभेदेऽपि नानुमित्योर्वैलक्षण्यमिति केषांचिन्मतमुपन्यस्यति — द्विविधादपीति । वह्निव्याप्यधूमवान्पर्वत इति पक्षविशेष्यकपरामर्शात्, वह्निव्याप्यधूमः पर्वत इति पक्षविशेषणकपरामर्शादपि

पर्वतो वह्निमानिति पक्षविशेष्यकानुमितिरेव जायते न तु पक्षविशेषणकानुमितिरित्यर्थः ॥

[मुक्तावली]

ननु वह्निव्याप्य धूमवान्पर्वत इति ज्ञानं विनापि यत्र पर्वतो धूमवानिति प्रत्यक्षं ततो धूमो वह्निव्याप्य इति स्मरणं तत्र ज्ञानद्वयादेवानुमितिदर्शनात् व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं न सर्वत्र कारणं किन्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वस्यावश्यकत्वात्तत्र विशिष्टज्ञानकल्पने गौरवाच्चेति चेत ॥

(सुबोधिनी)

मीमांसकः शङ्कते ... नन्विति। धूमवान्पर्वत इति पक्षधर्मताज्ञानवह्निव्याप्यो धूम इति व्याप्तिस्मरणाभ्यामेवानुमितिसम्भवे न विशिष्टपरामर्शः कल्प्यो गौरवात् इतिभावः ॥

ननु व्याप्तिस्मृतिपक्षधर्मताज्ञानयोः कारणत्वकल्पने कारणतावच्छेदक व्याप्तिस्मृतित्वपक्षधर्मताज्ञानत्वभेदेन कार्यकारणभावद्वयकल्पने गौरवमिति मध्ये विशिष्टज्ञानं प्रकल्प्य तस्यैवानुमितिं प्रति कारणत्वं कल्पनीयं, तथाच विशिष्टपरामर्शत्वेन कारणत्वकल्पने लाघवमित्यत आह —किंचेति। व्याप्तिस्मृतिपक्षधर्मताज्ञानयोर्न हि व्याप्तिस्मृतित्वपक्षधर्मताज्ञानत्वाभ्यां कारणत्वमपि तु व्याप्यतावच्छेदकप्रकारक पक्षधर्मताज्ञानत्वे नैकरूपेणैव कारणत्वमिति न कार्यकारणभावद्वयकल्पनं परन्तु तत्रैव विशिष्टपरामर्शकल्पने गौरवमित्यर्थः ॥

[मुक्तावली]

न व्याप्यतावच्छेदकाज्ञानेऽपि वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्तेः

(सुबोधिनी)

मीमांसकमतं निराकरोति .... नेति। तत्र हेतुमाह .... व्याप्य



तावच्छेदकाज्ञानेऽपीति। व्याप्यतावच्छेदकं हेतुतावच्छेदकं, वन्हिव्याप्यधूमवान्पर्वत इति ज्ञानेन व्याप्यतावच्छेदकधूमत्वस्य ज्ञातत्वेऽपि वन्हिव्याप्यवान्पर्वत इत्यत्र व्याप्यतावच्छेदक धूमत्वस्यागृहीतत्वेन तादृशपरामर्शजन्यपर्वतोवन्हिमानित्यनुमिति र्नस्याद्यनुमितौ व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य कारणत्वं स्यादित्यर्थः ॥

[मुक्तावली]

लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम् ॥

(सुबोधिनी)

ननु यत्र व्याप्यतावच्छेदक धूमत्वज्ञानं न जातं तत्र व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन विशिष्टपरामर्शस्य हेतुत्वं यत्र तु धूमवान्पर्वत इति ज्ञानानन्तरं वन्हिव्याप्यो धूम इति ज्ञानं तत्र व्याप्यतावच्छेदकधूमत्वस्य ज्ञानसम्भवेन तत्र व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन हेतुत्वमास्तामित्यत आह .... लाघवाच्चेति। वन्हिव्याप्यवान्पर्वत इति ज्ञानस्य व्याप्तिप्रकारकज्ञानत्वेन वन्हिव्याप्यधूमवान्पर्वत इति ज्ञानस्य हेतुतावच्छेदकप्रकारकज्ञानत्वेन कारणत्वकल्पनेऽनुमितिं प्रति कार्यकारणभावद्वयकल्पनं स्यादतो वन्हिव्याप्यधूमवान्पर्वत इति वन्हिव्याप्यवान्पर्वतइति ज्ञानद्वयसाधारणव्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन लाघवादेकरूपेण कारणत्वमेव कल्पनीयं। तथाच वह्निव्याप्यवान्पर्वत इति ज्ञाने वह्निव्याप्यधूमवान्पर्वत इति ज्ञाने च व्याप्तेः पक्षधर्मतायाश्च विषयतया तादृशज्ञानद्वयस्य व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वमुपपद्यते ॥

[मुक्तावली]

किंच धूमवान्पर्वत इति ज्ञानादनुमित्यापत्ति व्याप्यतावच्छेद

-कीभूतधूमत्वप्रकारकपक्षधर्मताज्ञानस्य सत्वात् ॥

(सुबोधिनी)

मीमांसकमते दोषान्तरमभ्युद्घाटयति । —किंचेति । यद्यनुमितिं प्रति व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वं स्यात्तदा धूमवान्पर्वत इति ज्ञानस्य व्याप्यतावच्छेदतधूमत्वप्रकारकत्वेन पक्षधर्मताविषयकत्वेन च व्याप्तिज्ञानशून्यकाले धूमवान्पर्वत इति ज्ञानात्पर्वतो वह्निमानित्यनुमितिः स्यादित्यर्थः ॥

[मुक्तावली]

न च तदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यम् ॥

(सुबोधिनी)

मीमांसकः शङ्कते । ...न चेति । वाच्यमिति परेणान्वयः । न केवलमनुमितिं प्रति व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन व्याप्तिस्मृतिपक्षधर्मताज्ञानयोः कारणत्वं, अपितु गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्व । नातो केवलधूमवान्पर्वत इति ज्ञानादनुमित्यापत्तिः धूमत्वस्य व्याप्यतावच्छेदकत्वेनागृहीतत्वादिति भावः । न च पूर्वेद्युः वह्निव्याप्यो धूम इति ज्ञानं यस्य जायते तस्य परेद्युर्धूमवान्पर्वत इति ज्ञानादनुमित्यापत्तिःपूर्वेद्युर्धूमत्वस्य व्याप्यतावच्छेदकत्वेन गृहीतत्वादिति वाच्यम् । अनुमितिं प्रति तदानीं गृह्यमाणव्याप्यतावच्छेदक प्रकारकपक्षधर्मताज्ञानत्वेन व्याप्तिस्मृतिपक्षधर्मताज्ञानयोर्हेतुत्वात् , पूर्वेद्युर्वह्निव्याप्यो धूम इति व्याप्यतावच्छेदकधूमत्वस्य गृहीतत्वेऽपि धूमवान्पर्वत इति ज्ञानकाले व्याप्यतावच्छेदकत्वेन धूमत्वस्यागृहीतत्वेन न केवलं धूमवान्पर्वत इति ज्ञानकाले ऽनुमित्यापत्तिरिति ॥



(मुक्तावली)

चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः स्यादिति।

(सुबोधिनी)

मीमांसकमतं दूषयति। —चैत्रस्येति। यदा चैत्रस्य वह्निव्याप्यो धूम इति व्याप्तिज्ञानं तदानीमेव मैत्रस्य धूमवान्पर्वत इति पक्षधर्मताज्ञानं यदिभवति तदा मैत्रस्यानुमित्यापत्तिर्व्याप्यतावच्छेदकत्वेन धूमत्वस्य चैत्रेण गृहीतत्वात्तदानींगृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य सत्वादित्यर्थः ॥

[मुक्तावली]

यदितु तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकतत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्युच्यते ॥

(सुबोधिनी)

पुनर्मीमांसकमते उपपत्तिमाशङ्कते। —यदित्विति। तत्पुरुषीयानुमितिं प्रति तत्पुरुषेण गृह्यमाणंयद्व्याप्यतावच्छेदकं तत्प्रकारकतत्पुरुषीयपक्षधर्मताज्ञानं कारणमित्यर्थः। तथाच न चैत्रस्य व्याप्तिग्रहकाले मैत्रस्यपक्षधर्मताज्ञानादनुमित्यापत्तिः चैत्रग्रहविषयधूमस्य मैत्रेण व्याप्यतावच्छेदकत्वेनागृहीतत्वादिति भावः ॥

[मुक्तावली]

तदाऽनन्तकार्यकारणभावः ॥

(सुबोधिनी)

मीमांसकमतं निराकरोति ....तदेति। निरुक्तरीत्या कार्यकारणभावस्वीकारे तत्पुरुषीयानुमितिं प्रति तत्पुरुषीयतदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वं एतत्पुरुषीयानुमितिं प्रत्येतत्पुरुषीयतदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारक पक्ष

धर्मताज्ञानत्वेन कारणत्वमेवं पुरुषभेदेनानन्तकार्यकारणभावप्रसङ्गो दुर्वार इत्यर्थः। अतो विशिष्टवैशिष्ट्यावगाहि परामर्शोऽनुमितिं प्रति हेतुतया स्वीकार्यो लाघवादित्याशयः॥

[मुक्तावली]

मन्मते तु समवायसम्बन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसम्बन्धेनानुमितिं जनयतीति नानंतकार्यकारणभावः॥

(सुबोधिनी)

विशिष्टपरामर्शत्वेन कारणत्वं स्वीकर्तृणां मते लाघवं दर्शयति ... मन्मतेत्विति। विशिष्टपरामर्शस्यानुमितिं प्रति कारणत्वं स्वीकर्तृणां मते यदात्मनि समवायेन परामर्शस्य स्थितिः तदात्मन्येवानुमितिर्जायत इति समवायसम्बन्धेन जायमानानुमितिं प्रति समवायसम्बन्धेन परामर्शस्य हेतुत्वामिति नानन्तकार्यकारणभावप्रसङ्ग इत्यर्थः॥

[मुक्तावली]

यदितु व्याप्तिप्रकारकं ज्ञानं पक्षधमताज्ञानं च स्वतंत्रं कारणमित्युच्यते तदा कार्यकारणभावद्वयम्॥

(सुबोधिनी)

मीमांसकमतमनूद्य निराकरोति — यदित्विति। न हि व्याप्तिप्रकारकज्ञानस्य पक्षधर्मताज्ञानस्य तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वं यत स्तत्तत्पुरुषघटिततया गौरवात्। किन्तु व्याप्तिप्रकारकज्ञानत्वेन पक्षधर्मताज्ञानत्वेन च तयोः कारणत्वं तथाच पुरुषभेदेन नानन्तकार्यकारणभाव इति मीमांसकमतं। तन्निराकरोति .... तदेति। व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनानुमितिं प्रति हेतुत्वे एकएव कार्यकारणभावः, व्याप्तिज्ञानत्वेन पक्षधर्मताज्ञानत्वेन च कारणत्वकल्पने तु कार्यकारणभावद्वयकल्पनागौरवं सु



स्थमेवेत्यर्थः॥

[मुक्तावली)

वह्निव्याप्यो धूम आलोकवान्पर्वत इतिज्ञानादप्यनुमित्यापत्तिः स्यात्

(सुबोधिनी)

मीमांसकमते दोषांतरमपि दर्शयति। ....वह्निव्याप्य इति। यदा वह्निव्याप्यो धूम इति व्याप्तिज्ञानं आलोकवान्पर्वत इति पक्षधर्मताज्ञानं तदा त्वदाभिमतव्याप्तिप्रकारकज्ञानस्य पक्षधर्मताज्ञानस्य च सत्वेनानुमित्यापत्तिरित्यर्थः॥

[मुक्तावली]

इत्थंच यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयं फलमुखगौरवस्यादोषत्वात्॥

(सुबोधिनी)

स्वाभिप्रायमाह। —इत्थं चेति। ज्ञानद्वयस्य कारणत्वकल्पने गौरवस्य जागरूकत्वे सतीत्यर्थः —- यत्रेति। यदात्मनि वह्निव्याप्यो धूमः धूमवान्पर्वत इति ज्ञानद्वयं तदात्मनि वह्निव्याप्यधूमवान्पर्वत इति विशिष्टवैशिष्ट्यावगाहि परामर्शोत्पत्ति मङ्गीकृत्यैवानुमितिरुत्पद्यत इत्यङ्गीकर्तव्यमित्यर्थः। ननु विशिष्टज्ञानस्यातिरिक्तस्य कारणत्वकल्पने गौरवमित्यत आह। —फलमुखगौरवस्येति। कार्यकारणभावग्रहाधीनगौरवज्ञानं नहि कार्यकारणभावग्रहप्रतिबन्धकं। तथाहि गौरवं नाम प्रमाणान्तरासिद्धतत्तदनुमित्यव्यवहितस्वाश्रयकत्वं घटितबुद्धिं प्रति घटकज्ञानस्य कारणत्वेन प्रमाणान्तरासिद्धतत्तदनुमित्यव्यवहित पूर्वपूर्ववृत्तिस्वाश्रयकत्वरूपगौरवज्ञानं प्रति तद्घटकतत्तदनुमित्यव्यवहितपूर्ववृत्तिस्वाश्रयज्ञानं कारणमिति निरुक्तगौरवज्ञानं तत्तदनुमित्यव्यवहितपूर्ववृत्तिस्वाश्रयज्ञानरूपकार्यकारणभाव ग्रहाधीनमिति तादृशगौरवज्ञानं न परामर्शस्यानुमितिकारणत्वग्रहविघटकमि

त्यर्थः। अतो विशिष्टवैशिष्ट्यावगाहिपरामर्शत्वेनानुमितित्वेन कार्यकारणभावे निर्विवाद एवेति सिद्धम् ॥

इति परामर्शग्रन्थः

अथ व्याप्तिग्रन्थः

[मुक्तावली]

का ॥ व्याप्तिः साध्यवदन्यासंबन्ध उदाहृतः ॥ ६८ ॥

मु ॥ व्याप्यो नाम व्याप्त्याश्रयः तत्र का व्याप्तिरित्यत आह ।
... व्याप्तिरिति ।

(सुबोधिनी)

परामर्शनिरूपणानन्तरं व्याप्तिनिरूपणे उपोद्घात एव सङ्गतिरिति सूचयितुमाह । ...व्याप्य इति । उपोद्घातत्वं च ज्ञानजनकज्ञानविषयत्वं, परामर्शात्मकज्ञानजनकज्ञानं व्याप्तिज्ञानं तद्विषयत्वस्य व्याप्तौ विद्यमानत्वा त्परामर्शनिरूपणानन्तरं व्याप्तिनिरूपणे उपोद्घातएव सङ्गतिरिति भावः। व्याप्यो नाम व्याप्त्याश्रयः तादृशव्याप्त्याश्रयघटकव्याप्तिः जिज्ञासाविषयीभूतेत्यर्थः । —मूले व्याप्तिरिति । साध्यमस्यास्तीति साध्यवान् ,साध्यवतोऽन्यः साध्यवदन्यः तस्मिन्न संबन्ध इति विग्रहः । सप्तम्याः निरूपितत्वमर्थः असंबन्धोऽवृत्तित्वं निरूपितत्वस्यान्वयः तदेकदेशवृत्तित्वे तस्यचनञर्थाभावे तथाच साध्यवन्निष्ठप्रतियोगिताकान्योन्याभाववन्निरूपितवृत्तित्वाभावो व्याप्तिरित्यर्थः ॥

[मुक्तावली]

वह्निमान्धूमादित्यादौ साध्यो वह्निः साध्यवान्महानसादिः तदन्यो जलह्रदादिः तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः ॥

(सुबोधिनी)

वह्निमान्धूमादित्यत्र लक्षणसमन्वयमुपपादयति — वह्निमानि



ति । वह्निमान्धूमादित्यत्र साध्यं वह्निः साध्यवान्महानसादिः साध्यवन्निष्ठप्रतियोगिताको योऽन्योन्याभावः ह्रदो वह्निमान्ने त्याकारकप्रतीतिसिद्धोऽभावः तद्वान् ह्रदः तन्निरूपितवृत्तित्वं मीनशैवालादौ तादृशवृत्त्वाभावस्य धूमरूपहेतौ विद्यमानत्वाल्लक्षणसङ्गतिरित्यर्थः ॥

[मुक्तावली]

धूमवान्वह्नेरित्यादौ साध्यवदन्यस्मिन्तप्तायःपिण्डादौ वह्नेः सत्त्वात्नातिव्याप्तिः ॥

(सुबोधिनी)

धूमवान्वह्नेरित्यादावतिव्याप्तिंनिराकरोति .... धूमवानिति । धूमवान्वह्नेरित्यादौ साध्यं धूमः साध्यवान्पर्वतः साध्यवन्निष्ठप्रतियोगिताको योऽन्योन्याभावः अयोगोलकं धूमवन्नेत्याकारकप्रतीतिसिद्धोऽभावः तद्वदयोगोलकं तद्वृत्तित्वस्यैव वह्नौविद्यमानत्वान्नातिप्रसङ्गः ॥

[मुक्तावली]

अत्र येन सम्बन्धेन साध्यं तेनैव सम्बन्धेन साध्यवान्बोध्यः । अन्यथा समवायसम्बन्धेन वह्निमान्वह्नेरवयवः तदन्यो महानसादिस्तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् ॥

(सुबोधिनी)

वह्निमान्धूमादित्यत्राव्याप्तिमुपपाद्य निराकरोति .... अत्रेति । वह्निमान्धूमादित्यत्र साध्यं वह्निः साध्यवान्समवायेन वह्नेरवयवः साध्यवान्निष्ठप्रतियोगिताको यो भेदः पर्वतः समवायेन वह्निमान्नेति भेदः तद्वान्पर्वतः तद्वृत्तित्वस्यैव धूमेविद्यमानत्वादव्याप्तिः, अतस्तद्वारणाय साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वं बोध्यं । तथाच वह्निमान्धूमादित्यत्र साध्यतावच्छेदकसम्बन्धः संयोगः तेन साध्यवान्न वह्नेरवयवः किंतुपर्वतादिः तन्निष्ठप्रतियोगिताकभेदवान्न हि पर्वतः प

र्वतोसंयोगेन वह्नेः सत्वादीन तु ह्रदः तन्निरूपितवृत्तित्वाभावस्य धूमरूपहेतौ सत्वेन न तत्राव्याप्तिरित्यर्थः ॥

[मुक्तावली]

साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान्बोध्यः तेन यत्किञ्चिद्वह्निमतोमहानसादेर्भिन्ने पर्वतादौ धूमस्य सत्वेऽपि न क्षतिः ॥

(सुबोधिनी)

पुनरव्याप्ति मुपन्यस्य परिहरति .... साध्यवदन्यश्चेति । वह्निमान्धूमादित्यत्र साध्यं वह्निः साध्यवान्महानसादिः साध्यवन्निष्ठप्रतियोगिताको यो भेदः पर्वतः संयोगेन वह्निमन्महानसो नेति भेदः तद्वान्पर्वतः तद्वृत्तित्वस्यैव धूमे विद्यमानत्वादव्याप्तिः । अतस्तद्वारणाय साध्यवन्निष्ठप्रतियोगितायां साध्यवत्त्वावच्छिन्नत्वरूपविशेषणं निवेशनीयं । तन्निवेशे तु साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताको यो भेदः न हि पर्वतः वह्निमन्महानसो नेति भेदः परन्तु ह्रदः वह्निमान्नेत्याकारकप्रतीतिसिद्धो भेदः तद्वान्ह्रदः तदवृत्तित्वस्य धूमे विद्यमानत्वान्नाव्याप्तिः ॥

(मुक्तावली)

येन संबन्धेन हेतुता तेनैव संबन्धेन साध्यवदन्यावृत्तित्वं बोध्यम् । तेन साध्यवदन्यस्मिन्धूमावयवे धूमस्य समवायसंबन्धेन सत्वेऽपि न क्षतिः ॥

(सुबोधिनी)

पुनर्वह्निमान्धूमादित्यत्राव्याप्तिमाशङ्क्य परिहरति । ...येनेति । पर्वतो वह्निमान्धूमादित्यत्र साध्यं वह्निः साध्यवान्महानसादिः साध्यवत्वावच्छिन्नप्रतियोगिताको यो भेदः धूमावयवो वह्निमान्नेति भे



दः तद्वान्धूमावयवः तन्निरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्यैव धूमे विद्यमानत्वादव्याप्तिः, अतस्तद्वारणाय वृत्तितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वरूपविशेषणं देयं । तन्निवेशे च साध्यवद्भिन्नधूमावयवनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्य धूमे सत्वेऽपि तादृशधूमावयवनिरूपितहेतुतावच्छेदकसंबन्धीभूतसंयोगसंबन्धावच्छिन्नवृत्तित्वस्यासत्वान्नाव्याप्तिरित्यर्थः ॥ [मुक्तावली]

साध्यवदन्यावृत्तित्वं च साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः । तेन धूमवान्वह्नेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः ॥

(सुबोधिनी]

धूमवान्वह्नेरित्यत्रातिव्याप्तिमुपपाद्य निरस्यति ... साध्यवदन्यावृत्तित्वं चेति । धूमवान्वह्नेरित्यादौ साध्यं धूमः साध्यवान्पर्वतः साध्यवत्त्वावच्छिन्नप्रतियोगिताको यो भेदः ह्रदो धूमवान्नेति भेदः तद्वान्ह्रदः तन्निरूपितवृत्तित्वाभावस्य वह्नौ सत्वादतिव्याप्तिः, अतस्तद्वारणाय वृत्तित्वनिष्ठप्रतियोगितायां वृत्तित्वत्वावच्छिन्नत्वरूपविशेषणं निवेशनीयं । तथाच धूमवद्भिन्नह्रदनिरूपितवृत्तित्वाभावरूपविशेषाभावस्य वह्नौ सत्वेऽपि वह्नेर्धूमवद्भिन्नायोगोलकवृत्तित्वेन धूमवद्भिन्ननिरूपितवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावरूपसामान्याभावस्याभावान्नातिप्रसङ्ग इत्यर्थः ॥

[मुक्तावली]

अत्र यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात्साध्यवदन्यस्मिन्गुणादाववृत्तित्वं नास्ति तथापि हेतुतावच्छेदकरूपेणावृत्तित्वं वाच्यम् । हेतुतावच्छेदकं तादृशवृत्तितानवच्छेदकमिति फलितोर्थः ॥

(सुबोधिनी)

द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्राव्याप्तिमुपन्यस्य निराकरोति .... अत्रेति । स्वरूपसम्बंधेन गुणकर्मान्यत्वाधिकरणे समवायसम्बंधेन सत्तायाः सत्वेन स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बंधेन गुणकर्मान्यत्वविशिष्टसत्तायाः द्रव्य एव सत्वेन तत्र द्रव्यत्वस्य सत्वादयं सद्धेतुरेव विशेषणविशेष्योभयं यत्र तत्रैव विशिष्टाधिकरणत्वोपगमात् । अत्र साध्यं द्रव्यत्वं तद्वद् द्रव्यं साध्यवत्त्वावच्छिन्नप्रतियोगिताको यो भेदः गुणो द्रव्यं नेति भेदः तद्वान्गुणः तत्र विशिष्टसत्तायाः शुद्धसत्तानतिरिक्ततया सत्तात्वेन विद्यमानतया गुणानिरूपितवृत्तित्वस्यैव विशिष्टसत्तायां सत्वादव्याप्तिः अतस्तद्वारणाय हेतुतावच्छेदकरूपेण साध्यवद्भिन्नावृत्तित्वं विवक्षणीयं । तदर्थश्च साध्यवद्भिन्ननिरूपितवृत्तितानवच्छेदकं यद्धेतुतावच्छेदकं तद्वत्वं, तथा च विशिष्टसत्तायाः गुणे सत्तात्वेन विद्यमानतया साध्यवद्भिन्नगुणनिरूपितवृत्तितावच्छेदकं सत्तात्वं तादृशवृत्तितानवच्छेदकं हेतुतावच्छेदकविशिष्टसत्तात्वं तद्वत्वस्य विशिष्टसत्तायां सत्वान्नाव्याप्तिरित्यर्थः । एवं च किं फलितं साध्यतावच्छेदकसम्बंधेन साध्यवत्वावच्छिन्न प्रतियोगिताक भेदवन्निरूपितहेतुतावच्छेदकसम्बंधावच्छिन्न वृत्तितानवच्छेदक हेतुतावच्छेदकवत्वं व्याप्तिरिति पर्यवसितम् ॥

इति पूर्वपक्षव्याप्तिः

अथ सिद्धान्तव्याप्तिः

[मुक्तावली]

ननु केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याप्रासिद्धत्वादव्याप्तिः किञ्च सत्तावान्जातेरित्यादौ साध्यवदन्यस्मिन्सामान्यादौ हेतुतावच्छेदकसंबंधेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्ति



अत आह । अथवा हेतुमन्निष्ठेति ॥ (सुबोधिनी)

पूर्वपक्षव्याप्तौ दोषमुपपादयति । ....नन्विति । ज्ञेयत्वादौ साध्ये वाच्यत्वहेतौ साध्यवन्निखिलं जगत् तद्भेदाप्रासिद्ध्या अव्याप्तिः । एवं सत्तावान्जातेरित्यादौ साध्य सत्ता तद्वन्ति द्रव्यगुणकर्माणि तद्भिन्नं सामन्यादिकं तन्निरूपितहेतुतावच्छेदकसम्बंधीभूतसमवायसंबंधावच्छिन्न वृत्तित्वाप्रसिद्ध्याऽव्याप्तिरतस्तत्परित्यज्य लक्षणांतरानुसरणमिति मूलमवतारयति — अथ वा हेतुमन्निष्ठेतीति ॥

(मुक्तावली)

का ॥ अथवा हेतुमन्निष्ठ विरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥

मु ॥ हेतुमति निष्ठा वृत्तिर्यस्य सस्तथा विरहोऽभावस्तथा च हेत्वधिकरणवृत्तिर्योऽभावस्तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते ॥

(सुबोधिनी)

हेतुमतीति । सप्तम्याः निरूपितत्वमर्थः तस्य निष्ठाशब्दार्थवृत्तित्वेऽन्वयः वृत्तित्वस्य स्वरूपसम्बंधन विरहपदार्थेऽन्वय इति पर्यवसितम् । फलितमाह -- तथाचेति । हेत्वधिकरणवृत्यत्यंताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः । वह्निमान् धूमादित्यादौ हेतुर्धूमः हेत्वधिकरणं पर्वतः तद्वृत्तिर्योऽभावः नहि वह्न्यभावस्तत्र वह्नेः सत्वात् किंतु घटाभावस्तत्प्रतियोगित्वं घटे तदप्रतियोगि यत्साध्यं वह्न्यात्मकं साध्यं तत्सामानाधिकरण्यस्य धूमरूपहेतौ विद्यमानत्वाल्लक्षणसङ्गतिः । धूमवान् वह्नेरित्यादौ हेतुर्वह्निः हेत्वधिकरणमयोगोळकं तद्वृत्तेर्योऽभावः धूमाभावस्तत्प्रतियोगित्वस्यैव धूमे विद्यमानत्वात् नातिप्रसङ्गः ॥

[मुक्तावली]

अत्र यद्यपि वह्निमान्धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वं तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः ॥

(सुबोधिनी)

सद्धेतावव्याप्तिमुपपादयति । ....अत्रेति । वह्निमान्धूमादित्यादौ हेतुर्धूमः हेत्वधिकरणं पर्वतस्तद्वृत्तिर्योऽत्यन्ताभावः चालनीन्याये न तत्तद्वह्न्यभावस्तत्प्रतियोगिन एव वह्नय इत्यव्याप्तिरित्यर्थः ॥

[मुक्तावली]

न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति वाच्यम् ॥

(सुबोधिनी)

अव्याप्तिपरिहारमाशङ्कते । —न चेति । यादृशवह्निधूमयोः सामानाधिकरण्यं तादृशवह्निधूमयोरेव व्याप्तिरेवं च व्याप्तेर्नानात्वेन पर्वतीयधूमाधिकरणे पर्वते पर्वतीयवह्नेः सत्वेन पर्वते न पर्वतीयवह्न्यभावः किन्तु घटाभावस्तत्प्रतियोगित्वं घटे तदप्रतियोगित्वस्य पर्वतीयवह्नौ विद्यमानत्वान्नाव्याप्तिरिति भावः ॥

[मुक्तावली]

तत्तद्वह्न्यादेरप्युभयाभावसत्त्वादेकसत्त्वेऽप्युभयं नास्तीति प्रतीतेः ॥

(सुबोधिनी)

न चेत्याद्याशङ्कां निराकरोति । — तत्तद्वह्न्यादेरिति । भवन्मतानुसारेण समानाधिकरणयोरेव व्याप्तिस्वीकारेऽपि पर्वतीयधूमाधिकरणे पर्वते पर्वतीयवह्नेः सत्वेऽपि एकसत्वेऽपि द्वयं नास्तीति प्रतीत्या पर्वतीयवह्निघटोभयाभावः सम्भवति तत्प्रतियोगित्वस्यैव वह्नौ सत्वादव्याप्तिर्दुर्वारेत्यर्थः ॥ [मुक्तावली]

गुणवान्द्रव्यत्वादित्यादावव्याप्तिश्च ॥



(सुबोधिनी)

दोषांतरमप्युद्घाटयति । ....गुणवानिति । निखिलगुणसामानाधिकरण्यस्य द्रव्यत्वे सत्वेन निखिलगुणनिरूपितव्याप्तिर्द्रव्यत्वनिष्ठा एकैवेति गुणवान्द्रव्यत्वादित्यत्र हेतुभूतद्रव्यत्वाधिकरणे घटे वर्तमानो योऽभावस्तत्तद्गुणाभावस्तत्प्रतियोगित्वस्यैव निखिलगुणेषु सत्वादव्याप्तिरित्यर्थः ॥

[मुक्तावली]

तथापि प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं वाच्यम् ।

(सुबोधिनी)

अव्याप्तिद्वयमपाकरोति । —तथापीति । हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिस्तथाच वह्निमान्धूमादित्यादौ हेतुभूतधूमाधिकरणवृत्त्यत्यन्ताभावस्तत्तद्वह्न्यभावस्तत्प्रतियोगितावच्छेदकं तत्तद्व्यक्तित्वं तत्प्रतियोगितानवच्छेदकं वह्नित्वं तदवच्छिन्नसामानाधिकरण्यस्य धूमरूपहेतौ विद्यमानत्वान्नाव्याप्तिः, गुणवान्द्रव्यत्वादित्यादौ द्रव्यत्वाधिकरणघटादिनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं गुणत्वं तदवच्छिन्नगुणसामानाधिकरण्यस्य द्रव्यत्वरूपहेतौविद्यमानत्वान्नाव्याप्तिरित्याशयः ॥

[मुक्तावली]

ननु रूपत्वव्याप्यजातिमत्वान्पृथिवीत्वादित्यादौ साध्यतावच्छेदिकाः रूपत्वव्याप्यजातयः तासां च शुक्लत्वादिजातीनां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न ॥

(सुबोधिनी)

व्याप्तिलक्षणे पुनरव्याप्तिमुपपादयति — नन्विति । अत्र रूपत्वव्याप्यजातयः शुक्लत्वनीलत्वादिजातयस्तासां द्रव्यत्वाधिकरणनीलघटादिवृत्ति शुक्लरूपाद्यभावप्रतियोगितावच्छेदकत्वादव्याप्तिरित्यर्थः ॥

[मुक्तावली]

तत्र परंपरया रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वात् न हि तादृशधर्मावच्छिन्नाभावः क्वापि पृथिव्यामस्ति रूपत्वव्याप्यजातिमान्नास्तीति बुद्ध्यापत्तेः ॥

(सुबोधिनी)

उक्ताव्याप्तिं निराकरोति ... नेति । रूपत्वव्याप्यजातिमत्त्वात्पृथिवीत्वादित्यदौ स्वाश्रयाश्रयत्वपरंपरासम्बन्धेन रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वं । तथाच शुक्लाद्यभावप्रतियोगितावच्छेदकत्वं शुक्लत्वादिजातीनां, तादृशाभावप्रतियोगितानवच्छेदकत्वं रूपत्वव्याप्यजातित्वस्यैवेति नाव्याप्तिः न हि स्वाश्रयाश्रयत्वपरंपरासम्बन्धेन रूपत्वव्याप्यजातित्वविशिष्टो नास्तीत्यभावो हेत्वधिकरणपृथिव्यां सम्भवति, स्वपदेन रूपत्वव्याप्यजातित्वस्वीकारे स्वाश्रयाः शुक्लत्वादयः तदाश्रयाणि शुक्लनीलादिरूपाणि स्वाश्रयाश्रयत्वसम्बन्धेन निरुक्तजातित्वविशिष्टशुक्लरूपाद्यन्यतमरूपसत्वे न हि तेनसम्बन्धेन तद्विशिष्टाभावः पृथिव्यां सम्भवति, अन्यथापृथिव्यां रूपत्वव्याप्यजातिमान्नास्तीति प्रतीतिप्रसङ्गादित्याशयः ॥

[मुक्तावली]

साध्यादिभेदेन व्याप्तिभेदात्तादृशस्थले साध्यतावच्छेदकतावच्छेदकं प्रतियोगितावच्छेदकतानवच्छेदकमित्येव लक्षणघटकमित्यपि वदंति ॥



(सुबोधिनी)

उक्ताव्याप्तिं मतान्तरेण निराकरोति ... साध्यादिभेदेनेति । रूपत्वव्याप्यजातिमत्त्वात्पृथिवीत्वादित्यादौ रूपत्वव्याप्यशुक्लत्वादिजातिनामेव साध्यतावच्छेदकत्वं साध्यसाधनभेदेन व्याप्तेर्भिन्नतया सात्राच्छिन्नसाध्यतावच्छेदकतास्थलीयलक्षणं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतानवच्छेदक यत्साध्यतावच्छेदकतावच्छेदकं तद्विशिष्टावच्छिन्नसामानाधिकरण्यं व्याप्तिरितितथाच पृथिवीत्वाधिकरणे नीलाद्यभावानां सत्वेऽपि तादृशाभावप्रतियोगितावच्छेदकं नीलत्वादिकं प्रतियोगितावच्छेदकतावच्छेदकमप्रसिद्धमतो नीलत्ववान्नास्तीत्यभावः स्वीकरणीयः तादृशाभावप्रतियोगितावच्छेदकतावच्छेदकं नीलत्वत्वादिकं तादृशाभावप्रतियोगितावच्छेदकतानवच्छेदकं रूपत्वव्याप्यजातित्वं साध्यतावच्छेदकतावच्छेदकं भवति तद्विशिष्टाः रूपत्वव्याप्यजातयः तदवच्छिन्नसमानाधिकरण्यस्य पृथिवीत्वादिहेतौ सत्वेन नाव्याप्तिरित्याशयः । अस्मिन्मते अनुगतव्याप्त्यलाभ इति वदन्तीत्यनेनास्वरसः सूचितः ॥

[मुक्तावली]

हेत्वधिकरणं च हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यं । तेन द्रव्यं गुणकर्मान्यत्व विशिष्टसत्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः ॥

(सुबोधिनी)

द्रव्यं गुणकर्मान्यत्वविशिष्टसत्वादित्यत्राव्याप्तिमुपपाद्य परिहरति .... हेत्वधिकरणं चेति । विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेन विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्येन हेतुभूतविशिष्टसत्ताधिकरणं गुणस्तद्वृत्तियोऽभावो द्रव्यत्वाभावःतत्प्रतियोगित्वस्यैवद्रव्यत्वे सत्वादव्याप्तिरतो हेतुनिष्ठाधेयतायां हेतुतावच्छेदकावच्छिन्नत्वरूपविशेषणं देयं

तथाच गुणे विशिष्टसत्तायाः सत्तात्वेन सत्वेऽपि विशिष्टसत्तात्वेना विद्यमानतया विशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणता वद्द्रव्यमेव तद्वृत्त्यभावो न द्रव्यत्वाभावः किन्तु पटाद्यभावस्तदप्रति योगित्वस्य द्रव्यत्वे सत्वान्न व्याप्तिरित्यर्थः ॥

[मुक्तावली]

एवं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं बोध्यं। तेनसमवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः ॥

(सुबोधिनी)

हेतुनिष्ठाधेयतायां विशेषणान्तरप्रक्षेपपुरस्सरं वह्निमान्धूमादित्यत्राव्याप्तिमुपन्यस्य निराकरोति .... एवमिति । हेतुर्धूमः हेत्वधिकरणं समवायेन धूमावयवस्तद्वृत्तिर्योऽभावो वह्न्यभावस्तत्प्रतियोगितावच्छेदकमेव वह्नित्वमित्यव्याप्तिरतो हेतुनिष्ठाधेयतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वरूपविशेषणं निवेशनीयं तथाच समवायसम्बन्धावच्छिन्नधूमनिष्ठाधेयतानिरूपिताधिकरणत्वस्य धूमावयवे विद्यमानत्वेऽपि हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नधूमनिष्ठाधेयतानिरूपिताधिकरणत्वाभावान्न धूमावयवः किन्तु पर्वतः तद्वृत्त्यभावप्रतियोगितानवच्छेदकं वह्नित्वं भवतीति नाव्याप्तिरित्यर्थः ॥

एवञ्च किं फलितं हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्न हेतुनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितं ॥ [मुक्तावली]

अभावश्च प्रतियोगिव्यधिकरणो बोध्यः । तेन कपिसंयोग्येतद्वृक्षत्वादित्यादौ मूलावच्छेदेनैवैतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाव्याप्तिः ॥



(सुबोधिनी)

पुनर्विशेषणान्तरप्रक्षेपपुरस्सरमव्याप्तिमुपन्यस्य निरस्यति — अभावश्चेति । कपिसंयोगी एतद्वृक्षत्वादित्यादौ हेतुरेतद्वृक्षत्वं तद्वानेतद्वृक्षस्तद्वृत्तिर्योऽभावः कपिसंयोगस्याव्याप्यवृत्तित्वेनाग्रावच्छेदेन कपिसंयोगस्य सत्वेऽपि मूलावच्छेदेन कपिसंयोगो नास्तीति प्रतीतिसिद्धोऽभावस्तादृशाभावप्रतियोगितावच्छेदकं साध्यतावच्छेदकं कपिसंयोगत्वं भवतीत्यव्याप्तिरतस्तद्वारणाय हेत्वधिकरणवृत्त्यभावे प्रतियोगिवैयधिकरण्यं निवेशनीयं तथाच हेत्वधिकरणवृत्तिः प्रतियोगिव्यधिकरणः योऽभावः नहि कपिसंयोगाभावः तस्यवृक्ष एव प्रतियोगिसमानाधिकरणत्वादपि तु घटाभावस्तादृशाभावप्रतियोगितानवच्छेदकं कपिसंयोगत्वं भवतीति नाव्याप्तिरित्यर्थः ॥

[मुक्तावली]

न च प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यनधिकरणवृत्तित्वं तदा तथैवाव्याप्तिः प्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणादौ वर्तमानो योऽभावस्तस्यैव वृक्षे मूलावच्छेदेन सत्वात् । यदितु प्रतियोग्यधिकरणावृत्तित्वं तदा संयोगीसत्वादित्यादावतिव्याप्तिः सत्वाधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वादिति वाच्यम् ॥

(सुबोधिनी)

प्रतियोगिवैयधिकरण्यं द्विधा विकल्प्य दूषयति । ...न चेति । वाच्यमिति परेणान्वयः । किं तावदत्र प्रतियोगिवैयधिकरण्यं प्रतियोग्यनधिकरणवृत्तित्वं वा प्रतियोग्यधिकरणावृत्तित्वं वा । आद्ये कपिसंयोग्येतद्वृक्षत्वादित्यादौ तदवस्थैवाव्याप्तिः । तथाहि कपिसंयोगाभावप्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणादौ वर्तमान

स्य कपिसंयोगाभावस्यैव हेत्वधिकरणवृक्षादौ सत्वेन तादृशकपिसंयोगाभावप्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं कपिसंयोगत्वमिति। यद्यपि द्वितीये कपिसंयोगाभावस्य प्रतियोग्यधिकरणवृक्षवृत्तितया न कपिसंयोगाभावो लक्षणघटक इत्यव्याप्तिवारणं भवत्येव तथापि संयोगी सत्वादित्यत्रातिव्याप्तिस्तथाहि व्यभिचारिस्थले साध्याभावमादायैवातिव्याप्तिर्वारणीया अत्र संयोगाभावस्य प्रतियोग्यधिकरणद्रव्यवृत्तितया न संयोगाभावः प्रतियोगिव्यधिकरणः किन्तु घटाभाव एव तत्प्रतियोगितानवच्छेदकं संयोगत्वमित्यतिव्याप्तिरित्यर्थः ॥

[मुक्तावली]

हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य विवक्षितत्वात्। स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः ॥

(सुबोधिनी)

अतिव्याप्तिभिया प्रतियोग्यधिकरणावृत्तित्वरूपप्रातियोगिवैयधिकरण्यं परित्यज्य प्रतियोग्यनधिकरणवृत्तित्वरूपप्रातियोगिवैयधिकरण्यमवलम्ब्याव्याप्तिं परिहरति ... हेत्वधिकरणइति। प्रतियोग्यनधिकरणवृत्तित्वविशिष्टः सन् हेत्वधिकरणवृत्तिर्योऽभावस्तत्प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके विवक्षितमित्यर्थः। तथाच प्रतियोग्यनधिकरणगुणादिवृत्तित्वविशिष्टकपिसंयोगाभावस्य वृक्षेऽसत्वाद्घटाभाव एव तादृशस्तदनवच्छेदकं कपिसंयोगत्वमिति नाव्याप्तिरिति भावः। विशिष्टं शुद्धान्नातिरिच्यत इति प्रतियोग्यनधिकरणगुणवृत्तित्वविशिष्टकपिसंयोगाभावस्य शुद्धकपिसंयोगाभावस्य चैकत्वेन वृक्षे शुद्धकपिसंयोगाभावस्य सत्वे विशिष्टकपिसंयोगाभावोऽपि विद्यत एवेति पुनरव्याप्तिस्तदवस्थैवेत्यत आह ...प्रतियोग्यनधिकरणीभूतेति। स्वप्रतियोग्यनधिकरणं यद्धेत्वधिकरणं तद्वृत्यभाव



प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः। स्वपदं लक्षणघटकाभावपरं तथाच कपिसंयोगाभावप्रतियोगिकपिसंयोगाधिकरणमेव हेत्वधिकरणवृक्ष इति न कपिसंयोगाभावो लक्षणघटकः किन्तु घटाभाव एवेति तादृशाभावप्रतियोगितानवच्छेदकं कपिसंयोगत्वमतो नाव्याप्तिरिति भावः

[मुक्तावली]

प्रतियोग्यनधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वं वाच्यम्। तेन विशिष्टसत्तावज्जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्ताभावस्य प्रतियोगिसमानाधिकरणत्वेऽपि नक्षतिः ॥

(सुबोधिनी)

प्रतियोग्यनधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वविवक्षया विशिष्टसत्तावज्जातेरित्यादावतिव्याप्तिं परिहरति ... प्रतियोग्यनधिकरणत्वमिति। हेतुर्जातिस्तदधिकरणं गुणस्तद्वृत्तिर्योऽभावः यद्यपि विशिष्टसत्ताभावो भवितुमर्हति। तथापि तादृशाभावप्रतियोगिसत्ताधिकरणमेव हेत्वधिकरणगुणादिकमिति न तादृशाभावो लक्षणघटकोऽपि तु घटाभाव एव तादृशघटाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकविशिष्टसत्त्वमित्यतिव्याप्तिरतः स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेत्वधिकरणे विवक्षणीयं। तथाच विशिष्टसत्ताभावप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वावच्छिन्नानाधिकरणं हेत्वधिकरणगुणादिकं तद्वृत्यभावः विशिष्टसत्ताभावस्तत्प्रतियोगितावच्छेदकमेव विशिष्टसत्तात्वमतो नातिप्रसङ्ग इत्यर्थः ॥

[मुक्तावली]

अत्र साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बो

ध्यम्। तेन ज्ञानवान्सत्वादित्यदौ सत्वाधिकरणघटादौ विषयतया ज्ञानाधिकरणत्वेऽपि न क्षतिः ॥

(सुबोधिनी)

ज्ञानवान्सत्वादित्यत्रातिव्याप्तिमुपपाद्य परिहरति — अत्रेति। हेतुः सत्ता तदधिकरणं गुणादिकं तस्य ज्ञानाभावप्रतियोगिनो ज्ञानस्य विषयतासम्बन्धेनाधिकरणतया न ज्ञानाभावो लक्षणघटकः किंतु घटाभाव एव तादृशभावप्रतियोगितानवच्छेदकमेव ज्ञानत्वमित्यतिव्याप्तिरतस्तद्वारणाय साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वं हेत्वधिकरणे विवक्षणीयं। तथाच साध्यतावच्छेदकसम्बन्धेन समवायेन ज्ञानाभावप्रतियोगितावच्छेदकज्ञानत्वावच्छिन्नाधिकरणं हेत्वधिकरणं तद्वृत्त्यभावप्रतियोगितावच्छेदकमेव ज्ञानत्वमतो नातिव्याप्तिरित्यर्थः ॥

[मुक्तावली]

इत्थञ्च वह्निमान्धूमादित्यादौ धूमाधिकरणे समवायेन वह्निविरहसत्वेऽपि न क्षतिः ॥

(सुबोधिनी)

साध्यतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यविवक्षायां प्रयोजनांतरमपिदर्शयति .... इत्थं चेति। केचित्तु ज्ञानवान्सत्वादित्यादावतिव्याप्तिवारणाय प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यं विवक्ष्य समवायेन वह्न्यभावमादाय वह्निमान्धूमादित्यादावव्याप्तिवारणाय पुनरग्रे प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशयन्ति। तदपेक्षया प्रथमत एव साध्यतावच्छेदकसम्बन्धेनैव प्रतियोगिवैयधिकरण्यं निवेशनीयं नैवग्रे प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमपि लाघवात्, एवं सति वह्निमान्धूमादित्यत्र धूमाधिकरणपर्वते समवायेन वह्निविरहसत्वेऽपि हेत्वधिकरणपर्वतस्य तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नस्य वह्नेः साध्यतावच्छेदकसम्बन्धीभूतसंयोगसम्बन्धेनाधिकरणत्वान्न तादृशभावो लक्षणघटक अपि तु घटाभाव एवेति तादृशघटाभावप्रतियोगितानवच्छेदकं वह्नित्वं भवत्यतो नाव्याप्तिरित्यर्थः ॥



[मुक्तावली]

ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्य चित्प्रतियोगिनोऽनधिकरणत्वं तत्सामान्यस्य वा यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वा विवक्षितं। आद्ये कपिसंयोग्येतद्वृक्षत्वादित्यादौ तथैवाव्याप्तिः कपिसंयोगाभावप्रतियोगितावच्छेदकावच्छिन्नो वृक्षावृत्तिकपिसंयोगोपि भवति तदनाधिकरणं वृक्ष इति ॥

(सुबोधिनी)

प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं त्रेधा विकल्प्य दूषयति। .... नन्विति। प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यस्य प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्य चिदनधिकरणत्वं वा १। प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वं वा २ प्रतियोगितावच्छेदकं यत्किंचित्तदवच्छिन्नानधिकरणत्वं वा ३ विवक्षितमित्यर्थः। प्रथमपक्षे दोषमुपपादयति .... आद्य इति। हेत्वधिकरणवृक्षस्य कपिसंयोगाभावप्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्य चिद्वृक्षावृत्तिकपिसंयोगस्यानधिकरणत्वेन कपिसंयोगाभावो लक्षणघटक इति तत्प्रतियोगितावच्छेदकमेव कपिसंयोगत्वमित्यव्याप्तिस्तदवस्थैवेत्यर्थः ॥

[मुक्तावली]

द्वितीये तु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः। सर्वस्यैवाभा

वस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मक प्रतियोगिसमानाधिकरण त्वात् ॥

(सुबोधिनी)

द्वितीयपक्षे दोषमुपपादयति । .... द्वितीयेत्विति । प्रतियोगितावच्छेदकावच्छिन्नसामान्यानाधिकरणत्वपक्षे त्वित्यर्थः — प्रतियोगिव्याधिकरणाभावाप्रसिद्धिरिति । तादृशाप्रसिद्धिमेवोपपादयति । — सर्वस्यैवेति । वह्निमान्धूमादित्यादौ लक्षणघटकघटाद्यभावः विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेन पूर्वक्षणवृत्तित्वविशिष्टघटाभावरूपः सोऽपि पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाभावरूपस्तृतीयाभावस्य प्रथमाभावरूपत्वात् । तथाच घटाभावस्य प्रातियोगी पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावोऽपि तदधिकरणमेव हेत्वाधिकरण पर्वतादिकं इदानीं पर्वते पूर्वक्षणवृत्तित्वविशिष्टघटाभावो नास्तीति प्रतीतेरतो यादृशाभाव प्रतियोगितावच्छेदकावच्छिन्नसामान्यानाधिकरणं हेत्वाधिकरणं तादृशाभावाप्रसिध्या सर्वत्रासंभव इत्यर्थः ॥

[मुक्तावली]

न च वह्निमान्धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेस्तथाऽपि साध्यतावच्छेदकसंबन्धेन तत्प्रातियोग्यनाधिकरणत्वमस्त्यैवेति कथं प्रतियोगिव्याधिकरणाभावाप्रसिद्धिरिति वाच्यम् ॥

(सुबोधिनी)

उक्तासम्भवपरिहारं शङ्कते ... नचेति । वाच्यमितिपरेणान्वयः यद्यपि पर्वतः पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्य घटाभावप्रातियोगिनः स्वरूपसम्बन्धेनाधिकरणमेव तथापि साध्यतावच्छेदकसम्बन्धेन संयोगेन घटाभावप्रतियोगिनोऽनधिकरणमेव हेत्वाधिकरणमिति' घटाभावमादाय लक्षणसमन्वयसम्भवे कथमसम्भव इत्यर्थः ॥



[मुक्तावली]

घटाभावे यो वह्न्यभावस्तस्य घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणं च पर्वतादिरित्येव क्रमेण प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात् ॥

(सुबोधिनी)

असम्भवं स्थिरीकरोति ... घटाभावइति । अभावाधिकरणकाभावस्याधिकरणात्मकत्वेन घटाभावनिष्ठवह्न्यभावस्य घटाभावस्वरूपतया हेतुसमानाधिकरणघटाभावप्रतियोगी वह्निरपि तस्य साध्यतावच्छेदकसम्बन्धेन संयोगेनाधिकरणमेव हेत्वाधिकरणपर्वतादिरिति प्रतियोगिव्याधिकरणाभाव प्रसिद्ध्याऽसम्भवो दुर्वार एवेत्यर्थः

[मुक्तावली]

यदिच घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते तथापि धूमाभाववान्वह्न्यभावादित्यादावव्याप्तिः । तत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धस्तेन सम्बन्धेन सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रातियोग्यधिकरणत्वं हेत्वाधिकरणस्येति ॥

(सुबोधिनी)

अभावप्रतियोगिकाभावाधिकरणकाभावस्याधिकरणात्मकत्वेऽपि भावप्रतियोगिकाभावाधिकरणकाभावस्य नाधिकरणात्मकत्वमिति सिद्धांतिनां मते नप्रतियोगिव्याधिकरणाभावाप्रसिद्धिरित्याह — यदिचेति । घटाभावाधिकरणकवह्न्यभावस्य भावप्रतियोगिकतया नघटाभावस्वरूप इति नघटाभावस्य प्रतियोगी वह्निरीति नानिरुक्तरीत्याऽसम्भव इति भावः । असम्भवाभावेपि स्थलान्तरे ऽव्याप्तिं दर्शयति — तथापीति । तदेवोपपादयति .... तत्रेति । धूमाभाववान्वह्न्यभावादित्यत्र साध्यतावच्छेदकसम्बन्धः स्वरूपसम्बन्धस्तेन सम्बन्धेन पूर्व

क्षणवृत्तित्वविशिष्टघटाभावःभावरूपस्य घटाभावप्रतियोगिनोऽधिकरणं मेव हेत्वधिकरणमिति प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्ति रित्यर्थः ॥

[ मुक्तावली ]

तृतीये तु कपिसंयोगाभाववानात्मत्वादित्यादा वव्याप्तिस्तत्रात्म वृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य च गुणत्वात्प्रतियोगि तावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्व धिकरणस्यात्मन इति चेन्मैवम् ॥

( सुबोधिनी )

तृतीयपक्षे दोषमुपपादयति । ....तृतीयेत्विति । यद्यपि प्र तियोगितावच्छेदकं यत्किंचित्तदवच्छिन्नानधिकरणत्वमिति तृतीयपक्षे वह्निमान्धूमादित्यादौ हेतुसमानाधिकरणघटाभावप्रतियोगितावच्छेदकं य त्किंचिद्घटत्वं तदवच्छिन्नानधिकरणं पर्वतो भवतीति न प्रतियोगिव्य धिकरणाभावप्रसिद्धिः तथापि कपिसंयोगाभाववानात्मत्वादित्यादौ हेतु समानाधिकरणाभावः कपिसंयोगाभावाभावः कपिसंयोगस्वरूपः गुणा भावाभावो गुणस्वरूपः कपिसंयोगस्य गुणत्वेन द्वयोरैक्यमिति कपि संयोगाभावाभावप्रतियोगितावच्छेदकं यत्किंचिद्गुणाभावत्वमपि त दवच्छिन्नानधिकरणं हेत्वधिकरणमात्मा तद्वृत्यभावप्रतियोगितावच्छे दकं कपिसंयोगाभावत्वं साध्यतावच्छेदकं भवतीत्यव्याप्तिरित्यर्थः ॥

[ मुक्तावली ]

यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृश प्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात् ॥

( सुबोधिनी )

प्रागुक्तदोषनिरासार्थं व्याप्तिलक्षणं परिष्करोति । ....य दृशेति । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकर णं तादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामा नाधिकरण्यं व्याप्तिरित्यर्थः ॥ कपिसंयोग्येतद्वृक्षत्वादित्यादौ क पिसंयोगाभावीय कपिसंयोगनिष्ठप्रतियोगितावच्छेदक कपिसंयोग त्वावच्छिन्नाधिकरणमेव हेत्वधिकरणवृक्ष इति न कपिसंयोगाभावो लक्षणघटकः किंतु घटाभाव एवेति तादृशाभावप्रतियोगितानवच्छे दकं कपिसंयोगत्वं भवतीति नाव्याप्तिः । घटाभावीयघटनिष्ठप्रति योगितावच्छेदक घटत्वावच्छिन्नानधिकरणं हेत्वधिकरणपर्वतस्तादृशप्र तियोगितानवच्छेदकं वह्नित्वं भवतीति न वह्निमान्धूमादित्यादाव व्याप्तिः । कपिसंयोगाभाववानात्मत्वादित्यादौ कपिसंयोगाभावाभावी यगुणाभावनिष्ठप्रतियोगितावच्छेदकगुणाभावत्वावच्छिन्नाधिकरणं हेत्व त्वधिकरणात्मा तादृशप्रतियोगितानवच्छेदकं कपिसंयोगाभावत्वं भ वतीति नाव्याप्तिरिति भावः ॥



[ मुक्तावली ]

ननु काले घटवान् कालपरिमाणादित्य त्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः हेत्वधिकरणस्य महाकाल स्य जगदाधारतया सर्वेषामभावानां साध्यतावच्छेदकसम्बन्धेन का लिकविशेषणतया प्रतियोग्यधिकरणवृत्तित्वात् ॥

( सुबोधिनी )

निष्कृष्टकल्पेऽव्याप्तिमुपपादयति । नन्विति । अत्र हेत्वधिकर णमहाकालस्य जगदाधारतया घटाद्यभावप्रतियोगितावच्छेदकावच्छिन्ना नां सर्वेषां साध्यतावच्छेदकसम्बन्धेन कालिकविशेषणतयाऽधिकर णत्वेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिरित्यर्थः ॥

[मुक्तावली]

अत्र केचित् । महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणः । महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात् । महाकाल महाकालभेदाभावात् ॥

(सुबोधिनी)

सर्वाधारः काल इति न्यायस्य महाकालभेदातिरिक्ताधारः काल इत्यर्थं वदतां मतमनुसृत्याव्याप्तिं निराकरोति । अत्र केचिदिति । महाकालभेदवैशिष्ट्यं घटे स्वरूपसंयोगोभयघटितसामानाधिकरण्यसंबन्धेन, महाकालभेदविशिष्टघटाभावीयप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणमहाकालो भवति महाकाले स्वरूपसंबन्धेन महाकालभेदाभावात् । यत्र स्वरूपसंबन्धेन महाकालभेदः संयोगेन घटश्च वर्तते तत्रैव स्वरूपसंयोगोभयघटितसामानाधिकरण्यसंबन्धेन महाकालभेदविशिष्टघटाधिकरणत्वोपगमात्, तथा च तादृशप्रतियोगितावच्छेदकं महाकालभेदविशिष्टघटत्वं तदनवच्छेदकं शुद्धघटत्वं भवतीति नाव्याप्तिरित्यर्थः ॥

[मुक्तावली]

वस्तुतस्तु प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नत्वस्य तद्धेतुव्यापकत्वं वाच्यम् । इत्थंच कालो घटवान्कालपरिमाणादित्यादौ संयोगसंबन्धेन घटाभावप्रतियोगिनो घटस्यानाधिकरणे हेत्वधिकरणे महाकाले वर्तमानः स एव संयोगेन घटाभावस्तस्य प्रतियोगितायां कालिकसंबन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्वान्नाव्याप्तिः



(सुबोधिनी)

कालोऽयं महाकालान्यत्वविशिष्टघटवानिति प्रतीतेर्जागरूकतया महाकालोऽपि महाकालान्यत्वविशिष्टघटाधिकरणमेवेति न महाकालान्यत्वविशिष्टघटाभावमादायाव्याप्तिवारणं संभवतीति केचिन्मतेऽस्वरसं मनसि निधायाह । .... वस्तुतस्त्विति । प्रतियोगितावच्छेदकसंबन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावः तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः । अत्र यत्संबन्धपदं साध्यतावच्छेदकसंबन्धपरं, यद्धर्मपदं साध्यतावच्छेदकधर्मपरं, वह्निमान्धूमादित्यादौ संयोगेन घटाभावप्रतियोगितावच्छेदकावच्छिन्नस्य प्रतियोगितावच्छेदकसंयोगसंबन्धेनानधिकरणं हेत्वधिकरणपर्वतः तादृशघटाभावप्रतियोगितासामान्ये साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वस्य सत्वेऽपि (यद्धर्म)साध्यतावच्छेदकधर्मावच्छिन्नत्वाभावेनैकसत्वेऽपि द्वयं नास्तीति प्रतीत्या यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावः सम्भवति तेन साध्यतावच्छेदकसम्बन्धेन संयोगेन साध्यतावच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यस्य धूमरूपहेतौ विद्यमानत्वाल्लक्षणसङ्गतिः । धूमवान्वह्नेरित्यादौ प्रतियोगितावच्छेदकसम्बन्धीभूतसंयोगसम्बन्धेन धूमाभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नानधिकरणं हेत्वधिकरणायोगोळकं भवति तादृशधूमाभावप्रतियोगितासामान्ये साध्यतावच्छेदकसम्बन्धीभूतसंयोगसम्बन्धावच्छिन्नत्वस्य साध्यतावच्छेदकधूमत्वावच्छिन्नत्वस्य चोभयसत्वेनोभयाभावाभावेन नातिप्रसङ्गः ॥

तादृशप्रतियोगितासामान्य इत्यत्र सामान्यपदानिवेशे धूमवान्वह्नेरित्यत्र संयोगसम्बन्धेन घटाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नान

धिकरणं हेत्वाधिकरणायोगोलकं भवति तादृशघटाभावप्रतियोगिता
यां साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वस्य सत्वेऽपि धूमत्वावच्छि
न्नत्वाभावेन यत्सम्बन्धावछिन्नत्वयद्धर्मावाछिन्नत्वोभयाभावः सम्भव
तीत्यतिप्रसङ्गः । अतस्तद्वारणाय तादृशप्रातियोगितासामान्ये उभया
भावो निवेशितः । तन्निवेशे तादृशप्रतियोगितासामान्यांतर्गतायां
धूमाभावप्रतियोगितायां तादृशोभयाभावसत्वेन नातिप्रसङ्गः । तादृ
शप्रतियोगितासामान्ये उभयाभावमनिवेश्य केवलसम्बन्धावच्छिन्नत्वा
भावनिवेशे तादृशप्रतियोगितासाभान्यांतर्गतायां संयोगन घटाभावप्रति
योगितायां साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वसत्वेन तदभावास
त्वादसम्भवो दुर्वारः । अतः यद्धर्मावच्छिन्नत्वघटितोभयाभावनिवेशनं
तथाच तादृशघटाभावप्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वस्य स
त्वेऽपि साध्यतावच्छेदकवह्नित्वावच्छिन्नत्वाभावेनोभयाभावः सम्भव
तीति नासम्भवः । ननु तर्हि तादृशप्रतियोगितासामान्ये यद्धर्मा
वच्छिन्नत्वाभाव एव निवेश्यतामुभयाभावनिवेशे गौरवादिति चेन्न ॥
वह्निमान्धूमादित्यादौ समवायेन वह्न्यभावीयप्रतियोगितावच्छेदकसम्ब
न्धीभूतसमवायसम्बन्धेन तादृशवह्न्यभावप्रतियोगितावच्छेदक वह्नि
त्वावच्छिन्नानाधिकरणं हेत्वधिकरणपर्वतादिः तादृशसमवायसम्बन्धा
वच्छिन्न वह्न्यभावप्रतियोगितायां साध्यतावच्छेदकवह्नित्वावच्छिन्नत्वस्यै
व सत्वेन तदभावस्यैवासत्वादसम्भवः । अतो यत्सम्बन्धावच्छिन्नत्वघ
टितोभयाभावनिवेशः । तथाच तादृशवह्नित्वावच्छिन्नप्रतियोगितायां
साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वाभावादुभयाभावः सम्भवती
ति नासम्भवः । एतादृशपरिष्कारेण काले घटवान्कालपरिमाणादि
त्यादावव्याप्तिं वारयति । — इत्थञ्चति । संयोगसम्बन्धावच्छिन्नघ
टाभावप्रतियोगितावच्छेदकसंयोगसम्बन्धेन तादृशघटाभावप्रतियोगि



तावच्छेदकघटत्वावच्छिन्नानाधिकरणं हेत्वधिकरणकालस्तादृशघटाभाव
प्रतियोगितासामान्ये साध्यतावछेदकघटत्वावछिन्नत्वस्य सत्वेऽपि सा
ध्यतावछेदकसम्बन्धीभूतकालिकसम्बंधावछिन्नत्वाभावादुभयाभावोऽक्षत
इति नाव्याप्तिः ॥

[मुक्तावली]

ननु प्रमेयवह्निमान्धूमादित्यादा प्रमेयवह्नित्वावच्छिन्नत्वमप्र
सिद्धं गुरुधर्मस्यानवछेदकत्वादिति चेन्न । कम्बुग्रीवादिमान्नास्तीति
प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगितायां विषयीकरणेन
गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादितसंक्षेपः ॥

(सुबोधिनी)

गुरुरूपेण साध्यतायां प्रमेयवह्निमान्धूमादित्यादावव्याप्तिमाशङ्क
ते....नन्विति । सम्भवति लघौ धर्मे गुरौ तदभावादिति प्रतियोगिता
यां गुरुधर्मावच्छिन्नत्वाप्रासिद्ध्या यद्धर्मपदग्राह्यप्रमेयवह्नित्वावछिन्न
त्वाप्रासिद्ध्याऽव्याप्तिरित्यर्थः । यद्यपि प्रतियोगितावछेदकसम्बन्धेन
यादृशप्रतियोगितावछेदकावछिन्नानधिकरण हेत्वधिकरणं तादृशप्राति
योगितासामान्ये यद्धर्मान्यूनवृत्तिधर्मावछिन्नत्वयत्सम्बन्धावछिन्नत्वोभ
याभावस्तेन सम्बंधेन तद्धर्मावछिन्नसामानाधिकरण्यं व्याप्तिरित्यु
क्तौ नोक्ताव्याप्तिः, तथाहि प्रतियोगितावछेदकसम्बधेन संयोगेन घटा
भावप्रतियोगितावछेदकावछिन्नानधिकरणं हेत्वधिकरणं भवति तादृ
शप्रतियोगितासामान्ये यद्धर्मपदग्राह्यप्रमेयवह्नित्वान्यूनवृत्तिवह्नित्वाव
छिन्नत्वाभावेन तद्घटितोभयाभावः सम्भवतीति । तथापि सिद्धांते
गुरुधर्मस्य प्रतियोगितावछेदकत्वाङ्गीकारेणैतावान्प्रयासो व्यर्थ इति सि
द्धांतमत मवलम्ब्याव्याप्तिं निराकुरुते .... नेति ।
कंबुग्रीवादिमान् नास्तीति प्रतीतौ कंबुग्रीवादिमत्त्वरूपगुरुध

र्मावच्छिन्नप्रतियोगिताकाभाव एव विषय इति प्रतियोगितायां गुरुधर्मावच्छिन्नत्वं प्रसिद्धमिति न निरुक्तस्थलेऽव्याप्तिरित्यर्थ इत्यन्यत्र विस्तरः एवञ्च किं फलितं । प्रतियोगितावच्छेदकसम्बंधेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वाधिकरणं तादृशप्रतियोगितासामान्ये यत्सम्बंधावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बंधेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितं ॥

–××*इति सिद्धान्तव्याप्तिः*××–

अथ पक्षताग्रन्थः

**का ॥ सिषाधयिषया शून्या सिद्धि र्यत्र न विद्यते ।**
**स पक्षस्तत्र वृत्तित्व ज्ञानादनुमितिर्भवेत् ॥ ७० ॥**

मु ॥ पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह ...सिषाधयिषयेति । सिषाधयिषाविरहविशिष्टसिध्यभावः पक्षता तद्वान्पक्ष इत्यर्थः ॥

(सुबोधिनी)

परामर्शनिरूपणानंतरं पक्षतानिरूपणे प्रसङ्गसङ्गतिरित्याह । ....पक्षवृत्तित्वमित्यत्रेति । सिषाधयिषाविरहविशिष्टेति । सिद्धिर्नाम प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नवत्तानिश्चयः सिषाधयिषा नाम अनुमितीच्छा । समवायसम्बन्धावच्छिन्नसिषाधयिषानिष्ठप्रतियोगिताकाभावविशिष्टा या सिद्धिस्तादृशसिद्धिनिष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावः पक्षतेत्यर्थः ॥ पर्वतो वह्निमानित्यनुमितिर्जायतां, पर्वते अनुमितिर्जायतां वन्ह्यनुमिति र्जायत अनुमिति र्जायतां, शब्दसामग्र्यसत्वे प्रत्यक्षातिरिक्तं ज्ञानं जायतां इत्यादीच्छानां पर्वतो वह्निमानिति सिद्धिसत्वेऽपि पर्वतो वह्निमानित्यनुमितिं प्रत्युत्तेजकत्वम् ॥

---



(मुक्तावली)

सिषाधयिषामात्रं न पक्षता विनाऽपि सिषाधयिषां घनगर्जितेन मेघानुमानात् ॥

(सुबोधिनी)

सिषाधयिषामात्रं पक्षतेति केचिद्वदन्ति तन्मतं दूषयति —सिषाधयिषामात्रमिति । तेषामयमाशयः । अनुमितेः पूर्वं नियमेन सिषाधयिषा जायते तद्बलादेव सिद्धौ सत्यामसत्यामप्यनुमितिर्जायत इति सिषाधयिषामात्रं पक्षतेति — न पक्षतेति । सुप्तोत्थितस्यगृहमध्यस्थस्य पुरुषस्य घनगर्जितश्रवणेन मेघव्याप्यगर्जनवद्गगनमिति परामर्शात्सिषाधयिषां बिनाऽप्यनुमितिदर्शनेन सिषाधयिषा न पक्षतेत्यर्थः ॥

[मुक्तावली]

अत एव साध्यसन्देहोऽपि न पक्षता बिनाऽपि सन्देहं तदनुमानात् ।

(सुबोधिनी)

अन्ये तु सिद्धिकालेऽनुमितिवारणाय साध्यसन्देहस्य पक्षतारूपत्वमभ्युपगच्छन्ति तद्दूषयति । —अत एवेति । वक्ष्यमाणयुक्तेरित्यर्थः । तादृशयुक्तिमेवोपपादयति । ...विनाऽपीति । सुप्तोत्थितपुरुषस्य सन्देहाभावेऽपि घनगर्जितश्रवणेन मेघानुमितिदर्शनादित्यर्थः ॥

[मुक्तावली]

सिद्धौ सत्यामपि सिषाधयिषासत्वेऽनुमिति र्भवत्येव । अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम् ॥

(सुबोधिनी)

सिद्धौ सिषाधयिषाविरहविशिष्टत्वविशेषणस्य सार्थक्यमुपपादयति । ....सिद्धाविति । अनुमितिं प्रति सिध्यभावस्य कारण

त्वे पर्वतो वह्निमानिति सिद्धौ सत्यामपि पर्वते वह्न्यनुमितिर्जायतामिति सिषाधयिषासत्त्वे पर्वतो वह्निमानित्यनुमितिर्जायते तादृशानुमितिर्न स्यात्सिध्यभावरूपपक्षताया अभावादिति भावः।

—अत इति। निरुक्तानुमित्युत्पत्तेः सिद्धौ सिषाधयिषाविरहविशिष्टत्वरूपविशेषणं निवेशनीयं। तथाच सिषाधयिषाकाले सिषाधयिषाविरहाभावाद्विशेषणाभावप्रयुक्तविशिष्टाभावरूपः सिषाधयिषाविरहविशिष्टसिध्यभावः सम्भवतीति नानुमित्यनुपपत्तिरिति भावः॥

[मुक्तावली]

तथाच यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता।

(सुबोधिनी)

सिषाधयिषाविरहविशेषणनिवेशे विशेषमाह। ...तथा चेति। यादृशस्थले सिध्यभावस्तादृशस्थले सिषाधयिषा यदि स्यात्तत्र विशेषणीभूतसिषाधयिषाविरहस्य सिद्धिरूपविशेषयस्य चाभावादुभयाभावाद्विशिष्टाभाव इति सिषाधयिषाविरहविशिष्टसिध्यभावरूपपक्षता सम्भवति, यत्र सिध्यभावस्तत्र सिषाधयिषायामसत्यां विशेषयस्य सिद्धेरभावाद्विशेष्याभावाद्विशिष्टाभाव इति सिषाधयिषाविरहविशिष्टसिध्यभावरूपपक्षतासम्पत्तिरित्यर्थः॥

[मुक्तावली]

यत्र तु सिषाधयिषास्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता॥

(सुबोधिनी)

यत्र अनुमितिर्जायतामिति सिषाधयिषा तत्र सिद्धौ सत्यां सिषाधयिषाविरहरूपविशेषणताभावात्सिषाधयिषाविरहविशिष्टसिध्यभावरूपपक्षतासंभवति, सिद्धावसत्यान्तु सिषाधयिषाविरहरूपविशेषण



स्य सिद्धिरूपविशेष्यस्य चोभयस्याभावात्सिषाधयिषाविरहविशिष्टसिध्यभावरूपपक्षता संभवतीत्यर्थः॥

[मुक्तावली]

यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता सिषाधयिषाविरहविशिष्टसिद्धेः सत्वात्

(सुबोधिनी)

पर्वतो वह्निमान्धूमादित्यत्र यदा पर्वतो वह्निमानिति सिद्धिः तदा सिषाधयिषाया अभावे सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वेन तदभावरूपपक्षताया असत्त्वात् न पर्वतो वह्निमानित्यनुमितिरित्याशयः॥

[मुक्तावली]

ननु परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः। यत्र सिद्धिपरामर्शसिषाधयिषाः क्रमेण भवंति तत्र सिषाधयिषाकाले सिद्धेर्नाशात्प्रतिबन्धकाभावादेवानुमितिः। यत्र सिषाधयिषासिद्धिपरामर्शाः संति तत्र परामर्शकाले सिषाधयिषैव नास्ति। एवमन्यत्रापि सिद्धिकाले परामर्शकाले वा न सिषाधयिषा योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्, तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न॥

(सुबोधिनी)

सिषाधयिषाविरहविशिष्टत्वविशेषणस्य वैयर्थ्यमाशङ्कते ....नन्विति। सिषाधयिषासिद्धिपरामर्शानां यद्येकक्षणावच्छेदेन संभवस्तर्हि तदुत्तरमनुमिते रसम्भवः तादृशानुमित्युपपत्त्यर्थं सिद्धौ सिषाधयिषाविरहविशिष्टत्वविशेषणस्य सार्थक्यं सम्भवति एतदेव सिद्धं यदा १प्रथमक्षणे परामर्शः। २ द्वितीयक्षणे सिद्धिः। ३ तृतीयक्षणे सिषाधयिषा। तदा शब्दबुद्धिकर्मणां द्वित्र्यादिक्षणावस्थायित्वमिति नि

यमेन बुद्धेर्द्विक्षणावस्थायित्वात्तृतीयक्षणे सिषाधयिषाकालेऽनुमितिकारणीभूतपरामर्शाभावादेव नानुमितिरिति तदानीं सिद्धौ सिषाधयिषाविरहविशिष्टत्वविशेषणं व्यर्थं ॥ यदा १ प्रथमक्षणे सिद्धिः २ द्वितीयक्षणे परामर्शः । ३ तृतीयक्षणे सिषाधयिषा । तदा सिषाधयिषाकाले ऽनुमितिप्रतिबन्धकसिद्ध्यभावादनुमितिर्जायत एवेति सिद्धौ सिषाधयिषाविरहविशिष्टत्वविशेषणं व्यर्थम् ॥ यत्र १ प्रथमक्षणे सिषाधयिषा । २ द्वितीयक्षणे सिद्धिः । ३ तृतीयक्षणे परामर्शः । तत्र परामर्शकाले सिषाधयिषाया अभावेन नानुमितिरिति सिद्धौ सिषाधयिषाविरहविशिष्टत्वविशेषणं व्यर्थमित्यर्थः ॥

[मुक्तावली]

न । यत्र वन्हिव्याप्यधूमवान्पर्वतो वन्हिमानिति प्रत्यक्षं स्मरणं वा ततः सिषाधयिषा तत्र पक्षतासम्पत्तये तद्विशेषणस्यावश्यकत्वात् ॥

(सुबोधिनी)

सिषाधयिषाविरहविशिष्टत्वविशेषणस्य सार्थक्यमुपपादयति । — यत्रेति । वन्हिव्याप्यधूमवान्पर्वतो वन्हिमानिति प्रात्यक्षिकसिध्यात्मकपरामर्शः ततो द्वितीयक्षणे वन्ह्यनुमितिर्जायतामिति सिषाधयिषा तत्र सिषाधयिषाकाले परामर्शस्य सत्वेन सिद्धेः सत्वेऽपि अनुमितिर्जायते तादृशानुमितिर्न स्यादपि सिद्धेः प्रतिबन्धकत्वं तदभावस्यानुमितिं प्रति कारणत्वं स्यादतः सिषाधयिषाविरहविशिष्टत्वविशेषणं सिद्धौ निवेशनीयं । तन्निवेशे च निरुक्तस्थले सिषाधयिषाविरहरूपविशेषणाभावात्सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षता सम्भवतीति नानुमित्यनुपपत्तिः । विशिष्टानुभवं प्रति विशेषणज्ञानस्य कारणतया तद्दशप्रात्यक्षिकसिद्ध्यात्मकप



रामर्शं प्रति कारणीभूतविशेषणज्ञानाश्रयणे गौरवमिति लाघवादाह । .... स्मरणं वेति । यत्र वह्निव्याप्यधूमवान्पर्वतो वन्हिमानिति स्मरणं ततः सिषाधयिषा तत्र अनुमित्युत्पत्त्यर्थं सिद्धौ सिषाधयिषाविरहविशिष्टत्वरूपविशेषणं निवेशनीयमित्यर्थः । अत्रेदं बोध्यम् । निरुक्तसिद्ध्यात्मकपरामर्शोत्तरं सिषाधयिषोत्पत्त्यर्थं प्रत्यक्षं स्मरणं वेत्यत्र वह्निव्याप्यधूमवान्पर्वतो वह्निमान्पर्वते वह्न्यनुमितिर्मेऽदिष्टसाधनमिति प्रत्यक्षं, एतादृशस्मरणं वा स्वीकरणीयमन्यथा सिषाधयिषासामग्र्यभावेन सिषाधयिषैव न स्यात् ॥

[मुक्तावली]

अत्रेदं बोध्यम् । यादृशयादृशसिषाधयिषासत्वे सिद्धिसत्वे यल्लिङ्गकानुमितिः तादृशतादृशसिषाधयिषाविरहविशिष्टसिध्यभावस्तल्लिङ्गकानुमितौ पक्षता । तेन सिद्धिपरामर्शसत्वेऽपि यत्किंचिद्ज्ञानं जायतामितीच्छायामपि नानुमितिर्वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति प्रत्यक्षसत्वे प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छायान्तु भवत्येव ॥ एवं धूमपरामर्शसत्वे आलोकेन वह्निमनुमिनुयामितीच्छायामपि नानुमितिः ॥

(सुबोधिनी)

वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति सिध्यात्मकपरामर्शसत्वे आलोकेन वह्न्यनुमितिर्जायतामितीच्छासत्वेऽपि न पर्वते वह्न्यनुमितिरतस्तल्लिङ्गकानुमितित्वावच्छिन्नं प्रति तल्लिङ्गकानुमितीच्छाविरहविशिष्टसिध्यभावः पक्षतेति विवक्षणीयमेवमपि वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति सिध्यात्मकपरामर्शानन्तरं पर्वते धूमेन वन्ह्यानुमितिर्जायतामितीच्छायां वह्न्यनुमित्यापत्तिवारणाय तत्साध्यकतल्लिङ्गकानुमितित्वावच्छिन्नं प्रति तत्साध्यकतल्लिङ्गकानुमितीच्छाविरह

विशिष्टसिध्यभावः पक्षतेति विवेचनीयमेवमपि वह्निव्याप्यधूमवान्प
र्वतो वह्निमानिति सिध्यात्मकपरामर्शानन्तरं महानसे धूमेन वह्न्य
नुमितिर्जायतामितीच्छायां पर्वते वह्न्यनुमित्यापत्तिवारणाय तत्पक्षक
तत्साध्यकतल्लिङ्गकानुमितित्वावच्छिन्नं प्रति तत्पक्षकतत्साध्यकतल्लिङ्ग
कानुमितीच्छाविरहविशिष्टसिध्यभावः पक्षतेति परिष्करणीयमेवं स
ति सिध्यात्यकपरामर्शानन्तरं वह्न्यनुमितिर्जायतां पर्वते वह्न्यनु
मितिर्जायतां धूमेनानुमितिर्जायतां, अनुमितिर्जायतां, शाब्दसामग्र्यस
त्वे प्रत्यक्षातिरिक्तं ज्ञानं जायतां, इति तत्तदिच्छाकाले पर्वते धू
मलिङ्गकवह्न्यनुमितिर्न स्यात् तत्तदिच्छानां प्रकृतपक्षकप्रकृतसा
ध्यकप्रकृतलिङ्गकानुमितित्वाप्रकारकत्वादत आह। ....अत्रेदमिति।
यादृशयादृशेच्छासत्वे सिद्धौ सत्यां यत्पक्षकयत्साध्यकयल्लिङ्गकानु
मितिर्जायते तत्पक्षकतत्साध्यकतल्लिङ्गकानुमितित्वावच्छिन्नं प्रति ता
दृशतादृशेच्छाविरहविशिष्टसिध्यभावः पक्षता, एवञ्च वह्निव्याप्यधू
मवान्पर्वतो वह्निमानिति सिद्धिसत्वे महानसे वह्न्यनुमितिर्जा
यतां पर्वते द्रव्यानुमितिर्जायतां, आलोकेन पर्वते वह्न्यनुमिति
र्जायतां ज्ञानं जायतां इत्यादीच्छासत्वेऽपि नानुमितिरिति तत्तदि
च्छाविरहविशिष्टसिध्यभावो न पक्षता। वह्न्यनुमितिर्जायतां पर्वते
वह्न्यनुमितिर्जायतां, धूमेन पर्वते वह्न्यनुमितिर्जायतां शाब्द
सामग्र्यसत्वे प्रत्यक्षातिरिक्तं ज्ञानं जायतां इत्याद्यनुमितीच्छासत्वे
पर्वतो वन्हिमानित्याद्यनुमितिर्जायत एवेति तत्तदिच्छाविरहविशिष्ट
सिध्यभावः पक्षतेत्यर्थः ॥

[मुक्तावली]

सिषाधयिषाविरहकाले यादृशासिद्धिसत्वे नानुमितिस्तादृशसि
द्धिर्विशिष्यैव तत्तदनुमितौ प्रतिबन्धिका वक्तव्या तेन पर्वतस्ते



जस्वी पाषाणमयो वह्निमानिति ज्ञानसत्वेऽप्यनुमितेर्न विरोधः ॥

(सुबोधिनी)

पक्षनिष्ठविषयतानिरूपितसाध्यनिष्ठविषयताशालिनिश्चयस्य सिद्धि
रूपत्वे सिषाधयिषाशून्यकाले पर्वतस्तेजस्वी पाषाणमयो वह्निमानि
ति सिद्धिसत्वे वह्निव्याप्यधूमवान्पर्वत इति परामर्शात्पर्वतो वह्नि
मानित्यनुमितिर्न स्यादित्यत आह — सिषाधयिषाविरहका
ल इति। सिषाधयिषाविरहकाले वह्निव्याप्यधूमवान्पर्वत इति
परामर्शेन जायमानपर्वतो वह्निमानित्यनुमितिं प्रति पर्वतस्तेजस्वी
पाषाणमयो वह्निमानिति सिध्यो न हि प्रतिबन्धकत्वमपितु
यादृशासिद्धेः प्रतिबन्धकत्वं प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यता
निरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिपर्वतो वह्निमा
निति सिद्धेरेव प्रतिबन्धकत्वं, सिषाधयिषाविरहविशिष्टतादृशासिद्ध्य
भावः पक्षतेत्यर्थः। एतादृशपक्षतास्वीकारे प्रयोजनमाह।
....तेनेति। अनुमितेर्नविरोध इति। अनुमितिर्भवत्येवेत्यर्थः॥

[मुक्तावली]

परन्तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि त
दवच्छेदेनानुमितिदर्शनात्पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्ष
तावच्छेदकावच्छेदेन साध्यासिद्धिरेव प्रतिबन्धिका। पक्षताव
च्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि ॥

(सुबोधिनी)

अनुमितिर्द्विविधा पक्षतावच्छेदकावच्छेदेनानुमितिः, पक्षतावच्छे
दकसामानाधिकरण्येनानुमितिरिति। तत्र पक्षतावच्छेदकावच्छेदना
नुमितिर्नाम पर्वतो वह्निमानित्यत्र निखिलपर्वतेषु वह्निविधेय
कानुमितिस्तदाकारस्तु पर्वतो वह्निमानित्येव तत्र संबन्धस्य कि

चित्प्रतियोगिकाकिञ्चिदनुयोगिकत्वेन । आधारास्त्वनुयोगिनः आधेयाः प्रतियोगिन इति न्यायेन साध्यतावच्छेदकसंयोगसंबन्धः (आधार) पर्वतानुयोगिक (आधेय) वह्निप्रतियोगिकश्च भवति । एवञ्च पक्षतावच्छेदकावच्छेदेन पर्वतो वह्निमानित्यनुमितौ वह्निप्रतियोगिक संयोगे पक्षतावच्छेदकपर्वतत्वव्यापकत्वं भासते । तथासति पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नाविधेयतानिरूपितपर्वतत्वावच्छिन्नोद्देश्यताशाल्यनुमितित्वावच्छिन्नं प्रति यत्किंचित्पर्वतोवह्निमानिति पर्वतत्वसामानाधिकरण्येन वह्न्यवगाहिसिद्धेरप्रतिबन्धकतया 'तादृशावच्छेदकावच्छेदेनानुमितिं प्रति,' पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगसम्बन्धावछिन्नवह्नित्वावछिन्नाविधेयतानिरूपितपर्वतत्वावाछिन्नोद्देश्यताशाल्यनुमीतित्वावाछिन्नं प्रति पर्वतत्व्यापकवन्हिप्रीतयोगिकसंयोगसम्बन्धावछिन्नवन्हित्वावछिन्नप्रकारतानिरूपितपर्वतत्वावाछिन्नाविशेष्यताशालिपर्वतो वन्हिमानिति 'पर्वतत्वावछेदेन, साध्यासिद्धिः प्रतिबान्धिकेत्याह । ....परान्त्विति । सिषाधयिषाविरहविशिष्टतादृशसिद्ध्यभावः पक्षतावछेदकावछेदेनानुमितिं प्रति कारणमितिभावः । सामानाधिकरण्येनानुमितिर्नाम यत्किञ्चित्पर्वते वह्न्यनुमितिस्तदाकारस्तु पर्वतो वान्हिमानित्येव नहि पर्वतत्वव्यापकत्वं वन्हिप्रतियोगिकसंयोगे भासतेऽतो वन्हित्वावछिन्नप्रकारता शुद्धसंयोगसम्बन्धावछिन्नां तादृशानुमितिं प्रति 'यत्किंचित्पर्वतो, वन्हिमानिति निश्चयस्य, पर्वतत्वसामानाधिकरण्येनवन्हिमत्तानिश्चयस्य पर्वतत्वावछेदेन वन्हिमत्तानिश्चयस्य च प्रतिबन्धकत्वेन तादृशपक्षतावछेदक सामानाधिकरण्येनानुमितिं प्राति पक्षतावछेदकसामानाधिकरण्येन साध्यसिद्धिः पक्षतावछेदकावछेदेन साध्यसिद्धिश्च प्रतिबन्धकेत्याह .... पक्षतावछेदकसामानाधिकरण्येने-



ति । ... सिद्धिमात्रामाति । पक्षतावछेदकावछेदेन साध्यसिद्धिः तत्सामानाधिकरण्येन साध्यसिद्धिश्चेत्यर्थः । सामानाधिकरण्येनानुमितिं प्रति सिषाधयिषाविरहविशिष्टसिद्धिसामान्याभावः पक्षतेति भावः ॥

[मुक्तावली]

इदन्तु बोध्यम् । यत्रायं पुरुषो न वेति संशयोत्तरं पुरुषत्वव्याप्यकरादिमानयमिति ज्ञानं तत्रासत्यामनुमित्सायां पुरुषत्वस्य प्रत्यक्षं भवति न त्वनुमितिरतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री कामिनीजिज्ञासादिवत्स्वातन्त्रेण प्रतिबन्धिका । एवं परामर्शानन्तरं विना प्रत्यक्षेच्छां पक्षादेःप्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरहविशिष्टानुमीति सामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका ॥

इति पक्षताग्रन्थः

(सुबोधिनी)

समानविषयकानुमितिप्रत्यक्षसामग्र्योर्मध्ये प्रत्यक्षसामग्री प्रबला । भिन्नविषयानुमितिप्रत्यक्षसामग्र्योर्मध्येऽनुमितिसामग्री प्रबलेति समानविषयकप्रत्यक्षसामग्री सत्वे समानविषयकानुमितिसामग्रीभूतपक्षतादीनां सत्वेऽपि प्रत्यक्षमेवोदेति न त्वनुमितिरिति पक्षतायाः कथमनुमितिं प्रति कारणत्वमन्वयव्यभिचारादित्यत आह ... इदन्तु बोध्यमिति । यदा अयं पुरुषो नवेति संशयानन्तरं पुरुषत्वव्याप्यकरादिमानयमिति परामर्शः पुरोवर्तिना साकं चक्षुः सन्निकर्षस्तदानीमनुमितिमवधूय प्रत्यक्षमेवोदेति न त्वनुमितिः समानविषयकानुमितिप्रत्यक्षसामग्र्योर्मध्ये प्रत्यक्षसामग्र्या एव प्रबलत्वात् । अनुमितिर्जायतामिति सिषाधयिषासत्वे तु सर्वतः प्रबलेच्छाघटितसामग्रीति न्य-

येन प्रत्यक्षमवधूयायं पुरुष एवेति अनुमितिरेवोदेत्यतः समानविषयकानुमितिं प्रति सिषाधयिषाविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री प्रतिबन्धिका तदभावोपि समानविषयकानुमितिं प्रति कारणमत एव तादृशकारणाभावे पक्षतादिकारणसत्वे प्यनुमित्यनुत्पादेऽपि नान्वयव्यभिचारः स्वतरयावत्कारणसत्वे स्वसत्वे कार्यानुत्पादस्यैवान्वयव्यभिचारत्वात् । एवं घटचक्षुः संयोगस्य सत्वेऽपि भिन्नविषयकानुमिति सामग्री सत्वे भिन्नविषयकानुमितिप्रत्यक्षसामग्र्योर्मध्येऽनुमितिसामग्री प्रबलेति न्यायेन प्रत्यक्षधूमानुमितिरेव जायत इति भिन्नविषयकप्रत्यक्षं प्रत्यनुमितिसामग्री प्रतिबन्धिका । प्रत्यक्षं जायतामितीच्छासत्वे त्वनुमितिमवधूयप्रत्यक्षमेव जायते अतो भिन्नविषयकप्रत्यक्षं प्रति प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री प्रतिबन्धिका कामिनीज्ञानान्यज्ञानत्वावच्छिन्नं प्रति कामिनीजिज्ञासायाः प्रतिबन्धकत्ववदित्याह …एवमिति । ननु सिषाधयिषाकालेऽपि सिद्ध्यात्मकपरामर्शसत्वे सिषाधयिषाया गुणत्वेन सिद्धेरपि गुणतया गुणे गुणानङ्गीकारेण स्वरूपसम्बन्धेन सिषाधयिषाविरहविशिष्टसिद्धेः सत्वेनानुमितिः न स्यादिति चेन्न । सिषाधयिषाविरहवैशिष्टयस्य सिद्धौ स्वरूपसमवायोभय घटितसामानाधिकरण्यसंबंधेन विवक्षितत्वात् । नन्वेवमपि सिषाधयिषाया आत्मनि समवायेन सत्वेऽपि संयोगसम्बन्धावच्छिन्न सिषाधयिषानिष्टप्रतियोगिताकाभावस्य स्वरूपसम्बन्धेनात्मनि सत्वेन समवायेन सिद्ध्यात्मकपरामर्शसत्वेनिरुक्तसामानाधिकरण्यसम्बन्धेन सिषाधयिषाविरहविशिष्टासिद्धिसत्वेनानुमितिर्नस्यादिति चेन्न । सिषाधयिषानिष्टप्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वस्य निवेशनीयत्वात् । नच सिषाधयिषाया असत्वेऽपि सिद्धिपरामर्शसत्वेऽनुमित्यापत्तिस्तदानीं सिद्धेरात्मनि समवायेन सत्वेऽपि संयोगेन तदभावस्यात्मनि सत्वादिति वाच्यम् । समवायसम्बन्धावच्छिन्नतादृशसिद्धिनिष्टप्रतियोगिताकाभावस्य पक्षतारूपत्वात् ॥



एवञ्च किं फलितम् । समवायसम्बन्धावच्छिन्नसिषाधयिषानिष्ठप्रतियोगिताकाभावविशिष्टासिद्धिनिष्ठ समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावः पक्षता । सिषाधयिषाविरहवैशिष्ट्यं च स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन ॥

इति पक्षताग्रन्थः

## अथ हेत्वाभासनिरूपणम् ॥

[मुक्तावली]

हेतुप्रसंगाद्धेत्वाभासान्विभजते ॥

(सुबोधिनी)

सद्धेतुनिरूपणानन्तरं हेत्वाभासनिरूपणे का वा सङ्गतिरित्यत आह — हेतुप्रसङ्गादिति । प्रसङ्गसङ्गतिर्नाम स्मृतिप्रयोजकसम्बन्धः, सद्धेतौ स्वरूपसम्बन्धेन व्याप्तिपक्षधर्मते विद्येते, स्वाभाववत्वसम्बन्धेनासद्धेतावपि विद्येते, इति सद्धेत्वसद्धेत्वोर्व्याप्तिपक्षधर्मते सम्बन्धभूते । एवञ्च एकसम्बन्धिनि सद्धेतुज्ञाने अपरसम्बन्धिहेत्वाभासस्मरणं जायत इति तदृशहेत्वाभासस्मरणप्रयोजकसम्बन्धो व्याप्तिपक्षधर्मते स्वाभाववत्वसम्बन्धेन तादृशव्याप्तिपक्षधर्मतारूपसम्बन्धवत्वस्य दुष्टहेतौ विद्यमानत्वेन प्रसङ्गसङ्गत्या हेत्वाभसनिरूपणमिति भावः ॥

[मुक्तावली]

का ॥ अनैकान्तो विरुद्धश्चाप्यासिद्धः प्रतिपक्षितः ।
कालात्यायापदिष्टश्च हेत्वाभासास्तु पंचधा ॥ ७१ ॥

**आद्यस्साधारणस्तु स्यादसाधारणको परः ।**
**तथै वानुपसंहारी त्रिधा नैकान्तिको भवेत् ॥ ७२**

मु ॥ अनैकांत इति । तल्लक्षणन्तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वम्। तथाहि व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते दोषाः । यद्विषयकत्वञ्च यादृशविशिष्टविषयकत्वं तेन बाधभ्रमस्यानुमितिविरोधित्वेऽपि न क्षतिः । तत्र पर्वतो वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषः ॥

(सुबोधिनी)

—मूलेऽनैकांत इति । अनेकांतो व्यभिचारी । विरुद्धः । प्रतिपक्षितः । असिद्धः । बाधितः । इति पञ्चहेत्वाभासाः । हेतुवदाभासन्त इति हेत्वाभासाः वदित्यस्य सादृश्येनेत्यर्थः । आङ्पूर्वकभाधातोः भ्रमोऽर्थः । सादृश्यञ्च व्याप्तिपक्षधर्मतारूपेण तथाच सद्धेतुनिष्ठव्याप्तिपक्षधर्मताप्रकारकभ्रमविशेष्या असद्धेतव इत्यर्थो हेत्वाभासपदेन लभ्यते । हेत्वाभासा इत्यत्र हेतोराभासाः हेत्वाभासा इत्यपरो विग्रहस्तस्मिन्विग्रहे हेतुनिष्ठा दोषा इत्यर्थः । यद्यपि दुष्टनिरूपणस्यैव प्रतिज्ञातत्वेन तल्लक्षणमपि वक्तुमुचितं । तथाऽपि दोषलक्षणेऽभिहिते तद्घटितदुष्टलक्षणं सुकरमिति दोषलक्षणमाह । ...तल्लक्षणान्त्विति । यद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्त्वं हेत्वाभासत्वम् ॥ व्यभिचार विरोध सत्प्रतिपक्षासिद्धि बाधाः दोषाः । तेषु लक्षणसमन्वयं करोति ॥ —तथाहीति । पर्वतो धूमवान्वह्नेरित्यादौ धूमाभाववद्वृत्तिवह्निर्व्यभिचारः ॥ लक्षणवाक्यस्थयत्पदेन दोषस्यैवग्राह्यतया धूमाभाववद्वृत्तिवह्निविषयकत्वेन धूमाभाववद्वृत्तिर्वह्निरिति ज्ञानस्यानुमितिप्रतिबन्धकतया तत्वस्य धूमाभाववद्वृत्तिवह्नौ विद्यमानत्वाल्लक्षणसङ्गतिः यथा श्रुते वि



शिष्याग्रे प्रतिपादयिष्यामः । ननु पर्वतो वह्निमान्धूमादित्यादौ वह्न्यभावविषयकत्वेन पर्वतो वह्न्यभाववानिति निश्चयस्य पर्वतो वह्निमानित्यनुमितिप्रतिबन्धकतया तत्वस्य वह्न्यभावे सत्वेनातिव्याप्तिरत आह । ... यद्विषयकत्वं चेति । यद्रूपावच्छिन्नविषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वं तद्रूपवत्वं दोषसामान्यलक्षणं । यद्रूपपदं दोषतावच्छेदकपरं । तृतीयार्थोऽवच्छेदकत्वं । ज्ञानस्येत्यत्र षष्ठ्यर्थोऽनिष्ठत्वं । प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्य नैय्यायिकमतासिद्धतया ज्ञानवृत्तियद्विषयकत्वनिष्ठावच्छेदकतानिरूपकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्वं दोषसायान्यलक्षणं पर्यवसितम् । ज्ञानपदं निश्चयपरम् । यद्विषयकत्वेनेत्यत्र तृतीयार्थोऽवच्छेदकत्वं स्वव्यापकत्वकत्वरूपं । एवं सति यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तद्रूपवत्वं दोषसामान्यलक्षणम । ह्रदो वह्निमान्धूमादित्यत्र वह्न्यभाववद्ध्रदरूपबाधे लक्षणसमन्वयः ॥ तथाहि ॥

अथ बाधे लक्षणसमन्वयः

तद्वत्ताबुद्धित्वावच्छिन्नं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेन ह्रदो वह्निमानित्यनुमितिं प्रति ह्रदो वह्न्यभाववानिति निश्चयः प्रतिबन्धकः । तत्र ह्रदो वह्निमानित्यनुमितिः प्रतिबध्या । ह्रदो वह्निमानित्यनुमितिनिष्ठा प्रतिबध्यता । ह्रदो वह्न्यभाववानिति निश्चयनिष्ठा प्रतिबन्धकता । तादृशप्रतिबध्यत्वप्रतिबन्धकत्वयोर्निरूप्यनिरूपकभावः सम्बन्धः । एवञ्च ह्रदो वह्निमानित्यनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकता ह्रदो वह्न्यभाववानिति निश्चयनिष्ठा भवति । ह्रदो वह्न्यभाववानिति निश्चयः ह्रदो वह्निमानिति निश्चयं ह्रदो वह्निमान्न वेति संशयञ्च प्रतिबध्नातीति संशयनिश्चयसाधारणबु

द्धित्वं प्रतिबध्यतावच्छेदकं। ह्रदो वह्न्यभाववानितिनिश्चयसत्वेऽपि
ह्रदो वन्हिमानिति ज्ञानं जायतामितीच्छासत्वे ह्रदो वन्हिमानित्या
हार्यज्ञानस्य वन्ह्यभाववान्ह्रदो वन्हिमानिति नियताहार्यस्य चोत्पत्त्या
ऽनाहार्यबुद्धित्वं प्रतिबध्यतावच्छेदकं वक्तव्यम्। एवमपि भूतलं घ
टाभाववदिति निश्चयसत्वेऽपि घटचक्षुः संयोगे सति भूतलं घटव
दिति प्रत्यक्षोत्पत्त्या लौकिकसन्निकर्षाजन्यानाहार्यबुद्धित्वं प्रतिबध्य
तावच्छेदकं वाच्यम्। एवमपि शङ्खो न पीत इति निश्चयसत्वेऽपि
पित्तादिदोषेण पीतः शङ्ख इति ज्ञानोत्पत्त्या दोषविशेषाजन्यत्वमपि
प्रतिबध्यतावच्छेदककोटौ निवेशनीयम्। एवञ्चानाहार्य लौकिकस
न्निकर्षाजन्यदोषविशेषाजन्यबुद्धित्वं सर्वत्र प्रतिबध्यतावच्छेदकं॥
एवं ह्रदो वन्हिमानिति बुद्धिं प्रति वन्हिमान्ह्रदो वन्ह्यभाववानि
त्याहार्यज्ञानस्य, इदं ज्ञानमप्रमाणमित्याप्रामाण्यज्ञानकालीनह्रदो वन्ह्य
भाववानिति निश्चयस्य ह्रदो वन्ह्यभाववान्नवेति संशयस्य चाप्रति
बन्धकतया अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वं सर्वत्र प्र
तिबन्धकतावच्छेदकं॥ एवञ्च यद्रूपपदेन वन्ह्यभाववद्ध्रदत्वस्वीकारे
वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताशालिनिश्चयः ह्रदो वन्ह्यभाववा
न्निति निश्चयः तादृशनिश्चयत्वव्यापकं प्रकृतानुमितित्वव्यापकप्र
तिबध्यतानिरूपितप्रतिबन्धकत्वं भवति। तथाहि प्रकृतानुमितिर्ह्रदो
वन्हिमानित्यनुमितिस्तादृशानुमितित्वव्यापिका या प्रतिबध्यता संयोग
सम्बन्धावच्छिन्नवन्हित्वावच्छिन्नप्रकारतानिरूपित ह्रदत्वावच्छिन्नविशेष्य
ताशालि लौकिकसन्निकर्षाजन्यानाहार्य दोषविशेषाजन्यबुद्धित्वा
वच्छिन्नप्रतिबध्यता तादृशप्रतिबध्यतानिरूपिता या प्रतिबन्धकता
ह्रदो वन्ह्यभाववानिति निश्चयनिष्ठा स्वरूपसम्बन्धावच्छिन्नवन्ह्यभाव
त्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्न विशेष्यताशाल्यनाहार्याप्रा



माण्यज्ञानानास्कन्दितनिश्चयत्वावच्छिन्ना प्रतिबन्धकता तादृशप्र
तिबन्धकत्वं निरुक्तनिश्चयत्वव्यापकं भवतीति तद्रूपवत्वस्य वन्ह्य
भाववद्ध्रदे विद्यमानत्वाद्बाधे लक्षणसङ्गतिः॥

ननु ह्रदो वन्हिमानित्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिब
न्धकतायाः वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषयिताशालिवन्हिमान्ह्रदो व
न्ह्यभाववानित्याहार्यज्ञाने, इदं ज्ञानमप्रमाणमित्यप्रामाण्यज्ञानानास्क
न्दितह्रदो वन्ह्यभाववानिति ज्ञाने, ह्रदो वन्ह्यभाववान्नवेति संशये
चासत्वेनासम्भवो दुर्वार इति चेन्न। प्रकृतानुमितित्वव्यापकप्रतिब
ध्यतानिरूपितप्रतिबन्धकतायामनाहार्याप्रामाण्य ज्ञानानास्कंदित
यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वस्य विवक्षितत्वात्॥

अथ साधारण्यरूपदोषे लक्षणसमन्वयः॥

साध्याभाववद्वृत्तित्वविशिष्टहेतुः साधारण्यम्। पर्वतो धूमवा
न्वन्हेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवन्हिः साधारण्यम्। तादृश
साधारण्यादिज्ञानस्य पर्वतो धूमवानित्यनुमित्यप्रतिबन्धकत्वं तदभा
वाधनवगाहित्वादतोऽनुमितिपदमनुमितितत्करणज्ञानान्यतरपरं स्वीकर
णीयं। वस्तुतस्तु पक्षः साध्यवान्साध्यव्याप्यहेतुमानिति समूहा
लम्बनानुमितिपरमेव स्वीकरणीयम्। तथाच प्रकृतानुमितिः पर्व
तो धूमवान्धूमाभाववद्वृत्तिवन्हिमांश्चेत्यनुमितिः, तादृशानुमितित्व
व्यापकीभूता याप्रतिबध्यता धूमाभाववद्वृत्तित्वाभावत्वावच्छिन्न प्र
कारतानिरूपितवन्हित्वावच्छिन्न विशेष्यताशालिबुद्धित्वावच्छिन्ना प्र
तिबध्यता, तादृशप्रतिबध्यतानिरूपिता या प्रतिबन्धकता धूमाभा
ववद्वृत्तिर्वन्हिरित्याकारकनिश्चयनिष्ठा धूमाभाववद्वृत्तित्वावच्छिन्नप्र
कारतानिरूपितवन्हित्वावच्छिन्न विशेष्यताशालिनिश्चयत्वावच्छिन्ना
प्रतिबन्धकता तादृशप्रतिबन्धकत्वे यद्रूपपदग्राह्यधूमाभाववद्वृत्ति

वन्हित्वावच्छिन्नविषयताशालिधूमाभाववद्वृत्तिर्वन्हिरिति निश्चयत्व व्यापकं भवतीति तद्रूपवत्वस्य धूमाभाववद्वृत्तिवन्हौ सत्वाल्लक्षण सङ्गतिः ॥

अथासाधारण्य लक्षणसमन्वयः ॥

साध्यासामानाधिकरण्यविशिष्टहेतुरसाधारण्यरूपो दोषः । शब्दो नित्यः शब्दत्वादित्यत्र नित्यत्वासमानाधिकरणशब्दत्वमसाधारण्यम् । प्रकृतानुमितित्वव्यापिका या प्रतिबध्यता शब्दो नित्यः शब्दत्वव्यापकनित्यत्वसमानाधिकरण शब्दत्ववांश्चेत्याकारकानुमितिनिष्ठा नित्यत्वाधिकरणवृत्तित्वत्वावच्छिन्न प्रकारतानिरूपिताशब्दत्वत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता, तादृशप्रतिबध्यतानिरूपिता या प्रतिबन्धकता, नित्यत्वाधिकरणावृत्ति शब्दत्वमित्याकारकनिश्चयनिष्ठा नित्यत्वाधिकरणवृत्तित्वाभावत्वावच्छिन्न प्रकारतानिरूपितशब्दत्वत्वावच्छिन्न विशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता, तादृशप्रतिबन्धकता यद्रूपपदग्राह्यनित्यत्वासमानाधिकरणशब्दत्वत्वावच्छिन्नविषयताशालिनित्यत्वासमानाधिकरणम शब्दत्वमिति निश्चयत्वव्यापकं भवति तद्रूपवत्वस्य नित्यत्वासमानाधिकरणशब्दत्वे विद्यमानत्वाल्लक्षणसमन्वयः ॥

अथानुपसंहारित्वे लक्षणसमन्वयः ॥

अत्यन्ताभावाप्रतियोगिसाध्यमनुपसंहारित्वदोषः । घटोऽभिधेयः प्रमेयत्वादित्यत्रात्यन्ताभावाप्रतियोग्यभिधेयत्वमनुपसंहारित्वम् । तद्ज्ञानं व्यतिरेकव्याप्तिज्ञानप्रतिबंधकम् । व्यतिरेकव्याप्तिः साध्याभावव्यापकीभूताभावप्रतियोगित्वम् । घटोऽभिधेयः प्रमेयत्वादित्यत्र प्रकृतानुमितिः घटोऽभिधेयोऽभिधेयत्वाभावव्यापकीभूताभावप्रतियोगि प्रमेयत्ववांश्चेत्यनुमितिः, तादृशानुमितित्वव्यापकीभूता या प्रति



बध्यतां, साध्य, अभिधेयत्वनिष्ठप्रतियोगितात्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता, तादृशप्रतिबध्यतानिरूपिता या प्रतिबन्धकता, असमानाविशेष्यकानिश्चयस्यापि प्रतिबन्धकतया अत्यन्ताभावाप्रतियोग्यभिधेयत्वमिति निश्चयनिष्ठात्यन्ताभावप्रतियोगित्वभावत्वावच्छिन्न प्रकारतानिरूपिताभिधेयत्वत्वावच्छिन्न विशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबन्धकता, तादृशप्रतिबन्धकत्वं यद्रूपपदग्राह्यात्यन्ताभावाप्रतियोग्यभिधेयत्वत्वावच्छिन्नविषयताशाल्यत्यन्ताभाव प्रतियोग्यभिधेयत्वमिति निश्चयत्वव्यापकं भवति, तद्रूपवत्वस्यात्यन्ताप्रतियोग्याभिधेयत्वे सत्वल्लक्षणसङ्गतिः ॥

अथ विरोधे लक्षणसमन्वयः ॥

केचित् चिंतामणिकारमते साध्यसामानाधिकरण्यं विशिष्टहेतो विरोधरूपदोषत्वम् । साध्यव्यापकीभूताभावप्रतियोगिप्रकृतहेतुमत्पक्षस्यासाधारण्यरूपत्वम् ॥ तद्व्यत्ययेन शिरोमणिकारमते साध्यासामानाधिकरण्यविशिष्टहेतोरसाधारण्यरूपदोषत्वं, साध्यव्यापकीभूताभावप्रतियोगिप्रकृतहेतुमत्पक्षस्य विरोधरूपदोषत्वमिति वदंति । तत्र चिंतामणिकारमते साध्यासामानाधिकरण्य विशिष्टहेतुरूपविरोधे साध्यासामानाधिकरण्यरूपव्याप्तिग्रह विरोधितया लक्षणसङ्गतिरूपपादिता । अथ शिरोमणिकारमते केचिन्मतेन साध्यव्यापकीभूताभावप्रतियोगिप्रकृतहेतुमत्पक्षस्यैव विरोधत्वात् शब्दो नित्यः कार्यत्वादित्यत्र नित्यत्वव्यापकीभूताभावप्रतियोगिकार्यत्ववच्छब्दो विरोधः । तत्र प्रकृतानुमितिः, शब्दो नित्यः नित्यत्वव्याप्यकार्यत्ववांश्चेत्याकारकानुमितिः । तादृशानुमितित्वव्यापकीभूता या प्रतिबध्यता, नित्यत्वत्वावच्छिन्नप्रकारतानिरूपितशब्दत्वाव

वच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता । तादृशप्रतिबध्यतानिरूपिता या प्रतिबंधकता, तद्वत्ताबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिश्चयस्यापि प्रतिबंधकतया निरुक्तविरोधज्ञानस्य साध्याभावनिरूपितव्यतिरेकव्याप्तिविशिष्टप्रकृतहेतुमत्त्वानिश्चयत्वेनानुमितिप्रतिबंधकत्वान्नित्यत्वव्यापकीभूताभावप्रतियोगिकार्यत्ववान् शब्द इत्याकारकनिश्चयनिष्ठा कार्यत्वत्वावच्छिन्नप्रकारतानिरूपितशब्दत्वावच्छिन्नविशेष्यताशालिनिश्चयविशिष्टनित्यत्वव्यापकीभूताभावप्रतियोगित्वत्वावच्छिन्नप्रकारतानिरूपितकार्यत्वत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबंधकता, तादृशप्रतिबंधकत्वं यद्रूपपदग्राह्यनित्यत्वव्यापकीभूताभावप्रतियोगिकार्यत्ववच्छब्दत्वावच्छिन्नविशेष्यताशालिनित्यत्वव्यापकीभूताभावप्रतियोगिकार्यत्ववांश्छब्दइतिनिश्चयत्वव्यापकंभवति तद्रूपवत्त्वस्य नित्यत्वव्यापकीभूताभावप्रतियोगिकार्यत्ववच्छब्दे विद्यमानत्वाल्लक्षणसङ्गतिः ॥ वस्तुतः सिरोमणि कृन्मते साध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतोरेव विरोधरूपत्वेन पक्षधर्मताज्ञानाकालीनतादृशविरोधविषयकनिश्चयस्य प्रकृतानुमित्यप्रतिबंधकत्वेन निरुक्तविरोधेऽव्याप्तिरतो लक्षण मन्यथा परिष्करणीयं । तत्प्रकारश्च यद्रूपावच्छिन्नविषयताशालिनिश्चयत्वव्यापकः प्रकृतानुमित्यप्रतिबंधकत्वपक्षधर्मताज्ञानकालीनत्वोभयाभावस्तद्रूपवत्त्वम् । पक्षधर्मताज्ञानकालीननिरुक्तविरोधविषयकनिश्चये प्रकृतानुमित्यप्रतिबंधकत्वाभावात्तद्घटितोभयाभावोऽक्षत एव पक्षधर्मताज्ञानकालीननिरुक्तविरोधविषयकनिश्चये पक्षधर्मताज्ञानकालीनत्वाभावात्तद्घटितोभयाभावोऽक्षत इति लक्षणसङ्गतिः ॥

अथ सत्प्रतिपक्षे लक्षणसमन्वयः ॥

सत्प्रतिपक्षस्तु साध्याभावव्याप्यप्रतिहेतुमत्पक्षः । व्याप्ति



श्चात्र साध्यनिरूपितान्वयव्याप्तिः । ह्रदो वह्निमान् धूमादित्यत्र जलव्यापक वन्ह्यभावसमानाधिकरणजलवद्ध्रद सत्प्रतिपक्षः । तत्र प्रकृतानुमितिः, ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्चेत्याकारकानुमितिः । तादृशानुमितित्वव्यापकीभूता या प्रतिबध्यता, संयोगसंबधावच्छिन्नवह्नित्वावच्छिन्न प्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालि बुद्धित्वावच्छिन्ना प्रतिबध्यता तादृशप्रतिबध्यतानिरूपिता या प्रतिबंधकता, जलव्यापकत्वत्वावच्छिन्नप्रकारतानिरूपितवन्ह्यभावत्वावच्छिन्नविशेष्यताशालि निश्चयविशिष्टजलत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबंधकता तादृशप्रतिबंधकत्वं यद्रूपपदग्राह्यवन्ह्यभावव्याप्यजलवद्ध्रदत्वावच्छिन्नविषयताशालिजलव्यापकवन्ह्यभावसमानाधिकरणजलवान्ह्रदइत्याकारकनिश्चयत्वव्यापकं भवति तद्रूपवत्त्वस्य वन्ह्यभावव्याप्यजलवद्ध्रदे विद्यमानत्वाल्लक्षणसङ्गतिः ॥

अथाश्रयासिद्धौ लक्षणसमन्वयः ॥

आश्रयासिद्धिस्तु पक्षतावच्छेदकाभाववत्पक्षः । कांचनमयह्रदो वन्हिमान्धूमादित्यत्र पक्षतावच्छेदकं काञ्चनमयत्वं तच्च ह्रदे नास्त्यतः पक्षतावच्छेदकाभाववत्पक्ष आश्रयासिद्धिः । तद्ज्ञानत्वमनुमितिप्रतिबंधकं पक्षधर्मताज्ञानप्रतिबंधकञ्च भवति । तत्र प्रकृतानुमितिः. कांचनमयह्रदो वन्हिमान्वन्हिव्याप्यधूमवांश्चेत्यनुमितिः तादृशानुमितित्वव्यापकीभूता या प्रतिबध्यता, कांचनमयत्वत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्न विशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता, । तादृशप्रतिबध्यतानिरूपिता या प्रतिबंधकता कांचनमयत्वाभाववान्ह्रद इति निश्चयनिष्ठा कांचनमयत्वाभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्न विशेष्यताशालिनिश्चयत्वावच्छिन्ना प्र

तिबंधकता। तादृशप्रतिबंधकत्वं यद्रूपपदग्राह्यकांचनमयत्वाभाव
वद्ध्रदत्वावच्छिन्न विषयिताशालिकांचनमयत्वाभाववान्ह्रद इति नि
श्चयत्वव्यापकं भवति तद्रूपवत्त्वस्य कांचनमयत्वाभाववद्ध्रदे वि
द्यमानत्वाल्लक्षणसङ्गतिः॥ एवमेव गगनारविंदं सुरभ्यरविंदत्वादित्य
त्र लक्षणसङ्गतिरूह्या॥

अथ स्वरूपासिद्धौ लक्षणसमन्वयः॥

हेत्वभाववत्पक्षः स्वरूपासिद्धिः। ह्रदो वन्हिमान धूमादित्य
त्र धूमाभाववद्ध्रदः स्वरूपासिद्धिः॥ तद्ज्ञानं पक्षधर्मताज्ञान
प्रतिबंधकम्॥ तत्र प्रकृतानुमितिः, ह्रदोवह्निमान् वह्निव्याप्यधूम
वां श्चेत्याकारकानुमितिः, तादृशानुमितित्वव्यापकीभूता
या प्रतिबध्यता, धूमत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्न विशे
ष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता। तादृशप्रतिबध्यतानिरूपिता
या प्रतिबंधकता, धूमाभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छि
न्न विशेष्यताशालिनिश्चयत्वावच्छिन्ना प्रतिबंधकता, तादृशप्र
तिबंधकत्वं यद्रूपपदग्राह्यधूमाभाववद्ध्रदत्वावच्छिन्न विषयिताशालि
धूमाभाववान्ह्रद इत्याकारकनिश्चयत्वव्यापकं भवति तद्रूपवत्त्व
स्यधूमाभाववद्ध्रदे विद्यमानत्वाल्लक्षणसङ्गतिः॥

अथ व्याप्यत्वासिद्धौ लक्षणसमन्वयः॥

व्याप्यत्वासिद्धिर्नाम व्याप्त्यभाववद्धेतुः। सचोपाधिनिय
तः। उपाधित्वञ्च साध्यव्यापकत्वे सति साधनाव्यापकत्वम्॥
साध्यव्यापकत्वञ्च साध्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वम्। सा
धनाव्यापकत्वञ्च साधनाधिकरणवृत्त्यत्यंताभावप्रतियोगित्वम्।
पर्वतो धूमवान्वन्हेरित्यत्राऽऽर्द्रेंधनसंयोग उपाधिः। तथाहि सा
ध्यं धूमस्तदाधिकरणं पर्वतस्तद्वृत्तिर्योऽत्यंताभावः न ह्यार्द्रेंधनसंयो



गाभावः परन्तु घटाभाव स्तादृशाभावाप्रतियोगित्व मार्द्रेंधनसंयोगे। ए
वं साधनं वह्निस्तदाधिकरणमयोगोलकं तद्वृत्तिर्योत्यन्ताभावः आर्द्रेंध
नसंयोगाभावस्तत्प्रतियोगित्वमार्द्रेंधनसंयोगे विद्यत इत्यार्द्रेंधन संयोगः
उपाधिः स्वाभाववद्वृत्तित्वसम्बन्धेन तादृशोपाधिविशिष्टो हेतुः।
तथाहि स्वमुपाधिः स्वाभाव आर्द्रेंधनसंयोगाभावस्तद्वदयोगोलकं त
द्वृत्तित्वस्य वह्नौ सत्वान्निरुक्तसम्बन्धेनोपाधिभूताऽऽर्द्रेंधनसंयोगविशि
ष्टो वह्निरिति वह्निरूपहेतुः सोपाधिको व्याप्यत्वासिद्ध इत्युच्यते।
धूमनिरूपितव्याप्त्यभाववद्वह्निः व्याप्यत्वासिद्धिः। तद्ज्ञानं तदभाव
वत्तानिश्चयत्वेन व्याप्तिज्ञानप्रतिबन्धकम्। तथाच प्रकृतानुमितिः पर्व
तो धूमवान्धूमव्याप्यवह्निमांश्चेत्यनुमितिस्तादृशानुमितित्वव्यापकीभू
ता या प्रतिबध्यता धूमनिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितवह्निनि
ष्ठविशेष्यताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता। तादृशप्रतिबध्यता
निरूपिता या प्रतिबन्धकता, धूमनिरूपितव्याप्त्यभावत्वावच्छिन्न
प्रकारतानिरूपितवह्नित्वावच्छिन्न विशेष्यताशालिनिश्चयत्वावच्छिन्ना प्र
तिबन्धकता। तादृशप्रतिबन्धकत्वं यद्रूपपदग्राह्य धूमनिरूपित
व्याप्त्यभाववद्वह्नित्वावच्छिन्नविषयिताशालिधूमनिरूपितव्याप्त्यभाववान्व
ह्निरिति निश्चयत्वव्यापकं भवति, तद्रूपवत्त्वस्य धूमनिरूपितव्याप्त्यभावव
द्वह्नौ विद्यमानत्वाल्लक्षणसङ्गतिः। ननुधूमाभाववद्वृत्तित्वाभावस्य धूमनि
रूपितव्याप्तित्वेन तदभावस्य धूमाभाववद्वृत्तित्वरूपत्वेनव्यभिचाराभेद
इति चेन्न। व्यभिचारे धूमाभाववद्वृत्तित्वस्य धूमाभाववद्वृत्तित्वत्वेन
प्रवेशः, व्याप्यत्वासिद्धौतु धूमाभाववद्वृत्तित्वाभावाभावत्वेन प्रवेश इ
ति तयोर्भेदात्। यद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकेत्यादि
परिष्कारस्य फलमाह ....तेनेति। यद्विषयकत्वेनेत्यत्र यत्पदस्य यद्रूपा
वच्छिन्नपरत्वोपवर्णनेनेत्यर्थः। पूर्वं पर्वतोवह्न्यभाववानिति भ्रमविष

यवन्ह्यभावेऽतिव्याप्ति रुपपादिता तादृशातिव्याप्तिर्न सम्भवति । य
दृपपदेन वह्न्यभाववत्पर्वतत्वस्याप्रसिद्धत्वेन धर्तुमशक्यत्वात् , यदृप
पदेन वन्ह्यभावत्वस्वीकारे वन्ह्यभावत्वावच्छिन्नविषयिताशालिवन्ह्य
भाव इति निश्चये प्रकृतानुमितिप्रतिबन्धकत्वस्याभावान्नातिव्याप्तिरिति
भावः ॥ [मुक्तावली]

न च वन्ह्यभावव्याप्यपाषाणमयत्ववानिति परामर्शकाले वह्निव्या
प्यधूमस्याभासत्वं न स्यात्तत्र वन्ह्यभावव्याप्यवान्पक्ष इति विशिष्ट
स्याप्रसिद्धत्वादिति वाच्यम् ॥

(सुबोधिनी)

विरुद्धपरामर्शकालीनप्रकृतपरामर्शविषयप्रकृतहेतोर्दुष्टत्वमनुभवासि
द्धं तन्न स्याद्यदृपपदेन वन्ह्यभावव्याप्यवत्पर्वतत्वस्याप्रासिद्धत्वेन
धर्तुमशक्यत्वादिति शङ्कते । —न चेति । वाच्यमिति परेणान्वयः ॥

[मुक्तावली]

इष्टापत्तेः । अन्यथा बाधस्याप्यानित्यदोषत्वापात्तेः । तस्मात्तत्र व
न्ह्यभावव्याप्यपाषाणमयत्ववानिति परामर्शकाले वह्निव्याप्यधूमस्य
नाभासत्वं । भ्रमादनुमितिप्रतिबन्धमात्रं, हेतुस्तु न दुष्टः । इत्थञ्च
साध्याभाववद्वृत्तिहेत्वादिकं दोषः तद्वत्वञ्च हेतौ येन केनापि स
म्बन्धेनेति नव्याः ॥

(सुबोधिनी)

बाधादिवत् सत्प्रतिपक्षस्यापि नित्यदोषत्वमेव न त्वनित्यदोष
त्वमितीष्टापत्त्या परिहरति — इष्टापत्तेरिति । सत्प्रतिपक्षस्यानित्यदो
षत्वे प्रातिबान्दिमाह । —अन्यथेति । यदि सत्प्रातिपक्षस्यानित्यदो
षत्वं स्वीक्रियते तर्हि बाधभ्रमदशायां बाधस्याप्यङ्गीकारापत्तेः । न
हि विनिगमकं पश्यामः । न चेष्टापत्तिः बाधस्य नित्यदोषतायाः



सर्ववादिसिद्धत्वादित्याशयः । फलितमाह — तस्मादिति । यतो
बाधादिवत् सत्प्रातिपक्षस्यापि नित्यदोषत्वमतः पर्वतो वह्निमान्धूमा
दित्यादौ वन्ह्यभावव्याप्यपाषाणमयत्ववान्पर्वत इति विरुद्धपरामर्श
काले तदभावव्याप्यवत्तानिश्चयस्य तद्वत्ताबुद्धित्वावच्छिन्नं प्रति प्र
तिबन्धकतयाऽनुमितिस्तु न जायते धूमस्य तु न दुष्टत्वम् — इत्थञ्चे
ति । दोषलक्षणस्यैवं परिष्कृतत्वे सतीत्यर्थः — साध्याभाववद्वृत्ति
हेत्वादिकमिति । साध्याभाववद्वृत्तित्वस्य दोषत्वे यदृपपदेन धूमा
भाववद्वृत्तित्वपरिग्रहे धूमाभाववद्वृत्तित्वत्वावच्छिन्न विषयताशा
लिधूमाभाववद्वृत्तित्वमित्याकारकानिश्चये प्रकृतानुमितिप्रातिबन्धकत्वाभा
वादव्याप्तिः स्यादतः साध्याभाववद्वृत्तिहेत्वादिर्दोष इत्याशयः ॥ सा
ध्याभाववद्वृत्तिहेत्वादेर्दोषत्वे तस्य हेत्ववृत्तित्वेन कथं हेतो दुष्टत्वमि
त्यत आह । — तद्वत्वं चेति । येन केनापीति ॥ स्वज्ञानविषयप्रकृ
तहेतुतावच्छेदकवत्वसम्बन्धेन हेतोर्दोषवत्वं बोध्यमित्यर्थः ॥ स्वं प्र
कृतदोषः, स्वज्ञानं धूमाभाववद्वृत्तिर्वह्निरित्याकारकं ज्ञानं, तद्विषय
प्रकृतहेतुः वह्निः, प्रकृतहेतुतावच्छेदकं वन्हित्वं, तद्वत्वस्य वन्हौ
विद्यमानत्वाद्वन्हेर्दोषवत्वं सम्भवति । एवमेव बाधादिस्थलेऽपि ह्रदो
वन्ह्यभाववान्धूमश्चेति समूहालम्बनज्ञानमादायैव दोषवत्वं हेतोरुप
पादनीयम् ॥

[मुक्तावली]

परेतु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तद्वत्वं हेत्वाभासत्वं ।
सत्प्रातिपक्षे विरोधिव्याप्त्यादिकमेव तथा तद्वत्वञ्च हेतोर्ज्ञानरूपसम्ब
न्धेन ॥ (सुबोधिनी)

सत्प्रतिपक्षस्यानित्यदोषत्वमभ्युपगच्छतां मतमुपन्यस्यति — परे
त्विति । यद्विषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वं तद्वत्वं दुष्टानां

लक्षणम्। अस्मिन्मते न साध्याभाववद्वृत्तिहेत्वादिकं दोषः। किंतु साध्याभाववद्वृत्तित्वादिकमेव। यद्विषयकत्वेनेत्यत्र यत्पदं दोषपरं, तृतीयार्थोऽवच्छेदकत्वं, तच्च स्वरूपसम्बन्धरूपम्। ज्ञानस्येत्यत्र षष्ठ्याः निष्ठत्वमर्थः, तथाच ज्ञाननिष्ठयद्विषयकत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं तद्वत्त्वं दुष्टानां लक्षणं। धूमाभाववद्वृत्तिर्वन्हिरित्याकारकज्ञाननिष्ठधूमाभाववद्वृत्तित्वविषयकत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं भवति तद्वत्त्वस्य वन्हौ सत्वाल्लक्षणसङ्गतिः ॥

सत्प्रतिपक्षस्थले वन्ह्यभावव्याप्यजलवान्पर्वत इति ज्ञाननिष्ठवन्ह्यभावव्याप्तिविषयकत्वं पर्वतो वन्हिमानित्यनुमितिप्रतिबन्धकतावच्छेदकं भवति तद्वत्त्वस्य धूमरूपहेतौ सत्वाद्दशाविशेषे (कालविशेषे धूमस्य सत्प्रतिपक्षत्वम्। ननु तादृशाविरोधिव्याप्तिमत्वस्य धूमेऽसत्वात्कथं धूमस्य दुष्टत्वमिति चेन्न। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्वसम्बन्धेन दोषवत्त्वस्य विवक्षितत्वात्। तथाहि स्व दोषः, स्वज्ञानं वन्ह्यभावव्याप्यं जलं धूमश्चेति समूहालम्बनात्मकं ज्ञानं, तादृशज्ञानविषयप्रकृतहेतुतावच्छेदकं धूमत्वं, तद्वत्त्वस्य धूमे विद्यमानत्वान्निरुक्तसम्बन्धेन दोषवत्त्वं धूमस्य सम्भवति ॥

[मुक्तावली]

न चैवं वन्हिमान्धूमादित्यादौ पक्षे बाधभ्रमस्य साध्याभावविषयकत्वेनानुमितिविरोधित्वाद्ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्वात्सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यम्। तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात्। अत्र सत्प्रतिपक्ष इति व्यवहारेण तत्कल्पनात्। अत्र बाधित इति व्यवहाराभावादित्याहुः।



(सुबोधिनी)

अतिव्याप्तिमाशङ्क्य निराचष्टे – नचेति। वाच्यमिति परेणान्वयः, पर्वतो वह्निमान्धूमादित्यत्रपर्वतेवन्ह्यभाववानितिज्ञानस्य वन्ह्यभावविषयकत्वेन पर्वतोवन्हिमानित्यनुमितिप्रतिबंधकतयातादृशवन्ह्यभाववत्त्वस्यस्वज्ञानविषयप्रकृतहेतुतावच्छेदकसम्बन्धेन धूमे विद्यमानत्वाद्धूमस्य बाधितत्वं स्यादित्यर्थः। न चेत्याद्याशङ्कां निराकरोति — तत्रेति। पर्वतो वह्निमान्धूमादित्यत्र धूमो बाधित इति व्यवहाराभावेन स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्वस्य सम्बन्धत्वं नकल्प्यते तथाच धूमरूपहेतौ न दुष्टत्वापत्तिरिति भावः ॥ पर्वतोवह्निमान्धूमादित्यत्र विरुद्धपरामर्शे सत्वे तु अयमिदानीं सत्प्रतिपक्षित इति व्यवहारसत्वेन स्वज्ञानविषय प्रकृतहेतुतावच्छेदकवत्वस्य सम्बन्धत्वं कल्प्यत इत्याशयः। आहुरित्यनेनास्वरसः सूचितः। सच बाधभ्रमदशायां विरोधिपरामर्शदशायां चानुमित्यनुत्पादस्य समानत्वे विरोधिपरामर्शदशायामेव हेतौ दुष्टत्वं न बाधभ्रमदशायामित्यत्र विनिगमकाभाव एव ॥

[मुक्तावली]

अनुमितिविरोधित्वञ्चानुमितितत्करणान्यतरविरोधित्वं। तेनैकहेतौ व्यभिचारज्ञाने हेत्वन्तरेणानुमित्युत्पत्तेस्तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्यानुमित्यविरोधित्वेऽपि नक्षतिरिति संक्षेपः ॥

(सुबोधिनी)

यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वमिति यथाश्रुतदोषलक्षणेऽव्याप्तिमनुमितिपदस्यानुमितितत्करणान्यतरपरत्ववर्णनेन निराकरोति — अनुमितिविरोधित्वं चेति। अनुमितिपदमजहत्स्वार्थलक्षणयाऽनुमितितत्करणान्यतरपरं। तथा चानुमितितत्करणान्यतरान्यप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं यद्रूपावच्छिन्नविषयताशालिनिश्चय

त्वव्यापकं तद्रूपवत्वं दोषसामान्यलक्षणं पर्यवसन्नं । एतादृशार्थपरत्ववर्णने प्रयोजनमाह -- तेनेति। अनुमितिपदस्यानुमितिमात्रपरत्वे व्यभिचारस्थले धूमाभाववद्वृत्तिर्वह्निरिति व्यभिचारज्ञानेऽपि धूमाभाववदवृत्तितद्व्याप्तिमान्पर्वत इति परामर्शात्पर्वतो वह्निमानित्यनुमित्युदयेनव्यभिचारज्ञानस्य तदभावाद्यनवगाहित्वेन प्रकृतानुमित्यप्रतिबंधकत्वेन च व्यभिचारादिष्वव्याप्तिः। अनुमितिपदस्यानुमितितत्करणान्यतरपरत्वे तु व्यभिचारादिनिश्चयस्यनुमित्यप्रतिबन्धकत्वेऽपि तत्करणपरामर्शप्रतिवन्धकतया न तत्राव्याप्तिप्रसङ्गः । व्यभिचारादिनिश्चयस्य यथा परामर्शप्रतिबन्धकत्वं तथा सर्वदोषलक्षणसमन्वयानिरूपणग्रन्थे दर्शितम् ॥

[मुक्तावली]

यादृशसाध्यपक्षहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वं। पञ्चत्वकथनन्तु तत्सम्भवस्थलाभिप्रायेण। एवञ्च साधारणाद्यन्यतमत्वमनैकान्तिकत्वम् ॥

(सुबोधिनी)

ननु प्रकृतानुमितितत्करणान्यतरानिष्ठप्रतिबध्यतानिवेशे पर्वतो वह्निमान्धूमादित्यत्र पर्वतो वह्निमान्हृदश्च तथेति समूहालम्बनानुमितिनिष्ठसंयोग सम्बन्धावच्छिन्नवह्नित्वावच्छिप्रकारतानिरूपितहृदत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितहृदो वन्ह्यभाववानिति निश्चयनिष्ठस्वरूपसम्बन्धावच्छिन्नवन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितहृदत्वावच्छिन्नविशेष्यताशालि निश्चयत्वावच्छिन्नप्रतिबन्धकत्वस्य वन्ह्यभाववद्धृदत्वावच्छिन्नविषयताशालिनिश्चयत्वव्यापकतया तद्रूपवत्वस्य वन्ह्यभाववद्धृदे विद्यमानत्वात्पर्वतो वह्निमान्धूमादित्यत्र वन्ह्यभाववद्धृदेऽतिव्याप्तिः। एतद्दोषवारणाय प्रतिबध्यतायां प्र



कृतानुमितितत्करणान्यतरत्वावच्छिन्नत्वस्य निवेशे प्रतिबध्यतायाः सर्वत्र बुद्धित्वावच्छिन्नतया निरुक्तान्यतरत्वावच्छिन्नप्रतिबध्यत्वाप्रसिद्ध्याऽसम्भवो दुर्वारः । तादृशान्यतरत्वव्यापकत्वस्य प्रतिबध्यतायां विवक्षणे व्यभिचारनिश्चयप्रतिबध्यतायाः अनुमितौ बाधनिश्चयप्रतिबध्यतायाः परामर्शेऽसत्वादुभयत्राव्याप्तिर्दुर्वारा अनुमितिपदस्य पक्षः साध्यवान्साध्यव्याप्यहेतुमांश्चेति समूहालम्बनानुमितिपरमुपवर्ण्य तादृशानुमितित्वव्यापकत्वस्य प्रतिबध्यतायां निवेशेन पूर्वोक्तदोषवारणसम्भवेऽपि निर्वह्निः पर्वतो वह्निमानित्यादौ निर्वह्निः पर्वतो वह्निमान्वन्हिव्याप्यधूमवांश्चेति ज्ञानस्याहार्यत्वेनाहार्यनुमित्यप्रसिद्ध्याऽव्याप्तिरतो लक्षणांतरमाह .... यादृशसाध्यपक्षहेताविति । यत्पक्षकयत्साध्यकयद्धेतुकस्थले यावन्तोदोषाः सम्भवन्ति तद्भिन्नभिन्नत्वं । हृदो वन्हिमान्धूमादित्यत्र वन्ह्यभाववद्धृदः बाधः, धूमाभाववद्धृदः स्वरूपासिद्धः, वन्ह्यभावव्याप्यजलवद्धृदः सत्प्रतिपक्षः, तावद्दोषाभिन्नं घटादिकं तद्भिन्नत्वस्य निरुक्तदोषेषु विद्यमानत्वाल्लक्षणसङ्गतिः।

ननु तर्हि हेत्वाभासानां पञ्चत्वकथनमसङ्गतमित्यत आह ....पञ्चत्वकथनं त्विति। तत्सम्भवस्थलाभिप्रायेण तत्कथनात् । वायुर्गन्धवान्स्नेहादित्यत्र पञ्चानां हेत्वाभासानां सम्भवः । तथा हि गन्धाभाववद्वृत्तिस्नेहः व्यभिचारः, गन्धव्यापकीभूताभावप्रतियोगि स्नेहः विरोधः, गन्धाभावव्याप्यवद्वायुः सत्प्रतिपक्षः गन्धव्याप्त्यभाववत्स्नेहः व्याप्यत्वासिद्धिः गन्धाभाववद्वायुर्बाधः इति । एवमेव सव्यभिचारसामान्यलक्षणमपि परिष्करणीयमित्याह .... एवंचेति । साधारणासाधारणानुपसंहार्यन्यतमत्वं सव्यभिचारसामान्यलक्षणम् । अन्यतमत्वंचतद्भिन्नभिन्नत्वम् । एवंच साधारणासाधरणनुपसंहारिभिन्नं यत् घटादिकं तद्भिन्नत्वस्यैव साधारणादिषु सत्वाल्लक्षणसङ्गतिः ॥

[ मुक्तावली ]

सधारणः साध्यवदन्यवृत्तिः । तेन व्याप्तिज्ञानप्रतिबंधः क्रियते ॥

( सुबोधिनी )

तत्तद्दोषाणामनुमितितत्करणान्यतरविरोधित्वं दर्शयति .... साधारण इति । साधारणः साधारण्यं । सवदन्यवात्तिरिति । साध्यवदन्यवृत्तिप्रकृतहेतुः । तद्ज्ञानं साध्यवदन्यावृत्तिः प्रकृतहेतुरिति पूर्वपक्षव्याप्तिज्ञानं प्रतिबध्नाति । एवं साध्याभाववद्वृत्तिरपि साधारण्यं' तद्ज्ञानं साध्याभाववदवृत्तिर्हेतुरिति पूर्वपक्षव्याप्तिज्ञानप्रतिबंधकं । एवं हेत्वधिकरणवृत्त्यत्यंताभावप्रतियोगितावच्छेदकसाध्यतावच्छेदकमपि साधारण्यम्, तद्ज्ञानं हेत्वधिकरणवृत्त्यत्यंताभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति सिद्धांतव्याप्तिज्ञानप्रतिबंधकम् ॥

[ मुक्तावली ]

असाधारणः साध्यासमानाधिकरणे हेतुः । तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते ॥

( सुबोधिनी )

असाधारण इति । असाधारणोऽसाधारण्यमित्यर्थः । तेनेति । तद्ज्ञानेनेत्यर्थः । हेतुव्यपकसाध्यसामानाधिकरण्यरूपव्याप्तिघटकसाध्यसामानाधिकरण्यग्रहप्रतिबंधः क्रियत इत्यर्थः ॥

[ मुक्तावली ]

अन्ये तु सपक्षावृत्तिरसाधारणः । सपक्षश्च निश्चितसाध्यवान् । इत्थञ्च शब्दोऽनित्य. शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नासाधारण्यम् । तत्र हेतोर्निश्चयादिति वदंति ॥

( सुबोधिनी )

असाधारण्यस्यानित्यदोषत्वमभ्युपगच्छतां मतमुपन्यस्यति



अन्ये त्विति । सपक्षत्वं परिष्करोति....सपक्षश्चेति । एवञ्च साध्यप्रकारकनिश्चयविशेष्यावृत्तित्वविशिष्टहेतुरसाधारणमिति पर्यवसन्नम् । इत्थंचेति .. असाधारण्यस्य निश्चयघटितत्वे सतीत्यर्थः । शब्दोऽनित्यः शब्दत्वादित्यत्र शब्दे यदाऽनित्यत्वसन्देहः तदा साध्यप्रकारकनिश्चयविशेष्यघटाद्यवृत्तित्वं शब्दत्वस्य सम्भवतीति पक्षे साध्यसन्देहदशायां सद्धेतावप्यसाधारण्यं । यदा शब्देऽनित्यत्वनिश्चय स्तदानीं साध्यप्रकारकनिश्चयविशेष्यशब्दावृत्तित्वस्य शब्दत्वेऽवृत्तित्वेन शब्दत्वहेतुर्नासाधारण इति । वदन्तीत्यनेनास्वरस सूचितः । स च यथा साधारण्यादीनां नित्यदोषत्वमेवमसाधारण्यस्यापि नित्यदोषत्वमङ्गीकर्तव्यमन्यथा साधारण्यादीनामप्यनित्यदोषत्वं स्यादिति । एवं निश्चितसाध्यवदवृत्तित्वज्ञानस्य साध्यवद्व्यक्तिविशेषावृत्तित्वज्ञानरूपतया विशेषाभावनिश्चय इति न साध्यसामानाधिकरण्यरूपसामान्यव्याप्तिज्ञानप्रतिबन्धक इति न तद्विषयस्य दोषत्व मिति च बोध्यम् ॥

[ मुक्तावली ]

अनुपसंहारी चात्यन्ताभावाप्रतियोगिसाध्यकादिः । अनेन व्यतिरेकव्याप्तिज्ञानप्रतिबन्धः क्रियते ॥

( सुबोधिनी )

अनुपसंहारी चेति । अनुपसंहारित्व मित्यर्थः — अनेनेति । अनुपसंहारित्वज्ञानेनेत्यर्थः । अनुपसंहरित्वज्ञानम यथा व्यतिरेकव्याप्तिज्ञानप्रतिबन्धकं तथा दोषलक्षणसमन्वयप्रस्तावे दर्शितम् ॥

[ मुक्तावली ]

विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी । अयं साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः ॥

(सुबोधिनी)

विरुद्धस्त्विति । विरुद्ध विरोध इत्यर्थः । साध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टप्रकृतहेतुविरोधः । एतादृशविरोधज्ञानं (साध्याभावग्रहसामग्रीत्वेन) साध्याभावनिरूपितव्यतिरेकव्याप्तिविषयकत्वेन पक्षधर्मताज्ञानकालीनं साध्यानुमितिप्रतिबन्धकं भवतीत्यर्थः ।

[मुक्तावली]

सत्प्रतिपक्ष तु प्रतिहेतुः साध्याभावसाधकः, अत्रतु हेतुरेवेति विशेषः । साध्याभावसाधक एव साध्यसाधकत्वेनोपन्यस्त इत्यशक्तिविशेषप्रस्थापकत्वाच्च विशेषः ॥

(सुबोधिनी)

विरुद्धः साध्याभावव्याप्यः, सत्प्रतिपक्षोऽपि साध्याभावव्याप्य इति तयोर्भेदो न स्यादित्यतआह — सत्प्रतिपक्षेत्विति । सत्प्रतिपक्षे तु साध्याभावसाधकः प्रतिहेतुः । विरुद्धेतु साध्याभावसाधकः प्रकृतहेतुरित्यर्थः । अत एव शब्दोनित्यः कार्यत्वादिति साध्याभावसाधकत्वेन प्रसिद्धकार्यत्वरूपहेतुः साध्यसाधकत्वेनोपन्यस्त इति तादृशहेतुप्रयोक्तुरसामर्थ्य मपि सूचित मिति तया विशेषो वर्तत एवेत्यर्थः ॥

[मुक्तावली]

सत्प्रतिपक्षः साध्याभावव्याप्यवान्पक्षः ॥

(सुबोधिनी)

सत्प्रतिपक्ष इति । स्पष्टोऽर्थः ॥

[मुक्तावली]

अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वोपस्थितिकालीनागृहीताप्रामाण्यकतदभावव्याप्यवत्त्वोपस्थितिविषयस्तथेत्यन्ये । अत्रच परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमिति प्रतिबंधः फलम् ॥



(सुबोधिनी)

सत्प्रतिपक्षरूपदुष्टस्य लक्षण मुपपादयतां मत माह — अगृहीतेति । ह्रदोवह्निमान्धूमादित्यत्रागृहीताप्रामाण्यकसाध्यव्याप्यवत्वोपस्थितिः इदं ज्ञन मप्रमेत्याकारकाप्रामाण्यज्ञानानास्कंदितवह्निव्याप्यधूमवान्ह्रद इति परामर्शः, तत्कालीना या अगृहीताप्रामाण्यकसाध्याभावव्याप्यवत्त्वोपस्थितिः इदं ज्ञानमप्रमेत्याकारकाप्रामाण्यज्ञानानास्कान्दितवह्न्यभावव्याप्यजलवान्ह्रद इत्याकारकपरामर्शः अथोत्ततदभावव्याप्यवगाहिसमूहालम्बनपरामर्शः तादृशपरामर्शविषयत्वस्य धूमरूपहेतौ विद्यमानत्वाल्लक्षणसमन्वयः । एवं पर्वतो वह्निमान्धूमादित्यत्रापि अप्रामाण्यज्ञानानास्कन्दितवह्निव्याप्यधूमवान्पर्वतः वह्न्यभावव्याप्यजलवांश्चेति विरुद्धपरामर्शकालेऽनुमित्यनुदयेनानुमितिप्रतिबन्धकतादृशपरामर्शविषयत्वस्य धूमरूपहेतौ सत्वाद्धूमस्य दुष्टत्व मिति दशाविशेष एव धूमरूपहेतोः सत्प्रतिपक्षत्वं । अत एव सत्प्रतिपक्षस्यानित्यत्वदोषत्वं । अन्य इत्यनेनास्वरसः सूचितः । स चाय मिदानीं सत्प्रतिपक्ष इति व्यवहारवत् बाधभ्रमदशाया मप्ययमिदानीं बाधित इति व्यवहारापत्तिः । एतादृशविरुद्धपरामर्शयोः किं प्रयोजनामित्यत आह .... अत्र चेति । एतादृशविरुद्धपरामर्शयोः तत्तदभावव्याप्यवत्तानिश्चयत्वेन न पर्वतो वह्निमान्नो वह्न्यभाववानित्यनुमितिरिति वह्नितदभावानुमिति प्रतिबन्धः फलमित्यर्थः ॥

[मुक्तावली]

अत्र केचित् । यथा घटाभावव्याप्यवत्ताज्ञानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञान जायते । यथाच शङ्खे सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शङ्ख इति धीर्जायते, एवं कोटिद्वयव्याप्यदर्शनेऽपि कोटिद्वयस्य प्रत्यक्षरूपः संश

यो भवति तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव । यत्रैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः । फलबलेन चाधिकसमबलभावः कल्प्यत इति वदन्ति ॥

(सुबोधिनी)

रत्नकोशकारमतमुपन्यस्यति — अत्रकेचिदिति । तद्वत्ताबुद्धित्वावच्छिन्नं प्रति न तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वमतो विरुद्धपरामर्शद्वयसत्वे संशयाकारानुमितिर्जायत इति सदृष्टान्तमाह –– यथेति । घटाभावव्याप्यवत्ताज्ञानेऽपि घटचक्षुः संयोगसत्वे भूतलं घटवदिति बुद्ध्युत्पत्तेः । एवं पीतत्वाभावव्याप्यशङ्खत्ववान्शङ्ख इति ज्ञानस्य सत्वेऽपि पित्तादि दोषेण पीतः शङ्ख इति ज्ञानस्योत्पत्तेः तद्वत्ताबुद्धित्वावच्छिन्नं प्रति नतदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वमपितु तदभावव्याप्यवत्ताज्ञानं ज्ञानलक्षणाप्रत्यासत्यादिरूपालौकिकसन्निकर्षजन्यतद्वत्ताबुद्धित्वावच्छिन्नं शाब्दबुद्धित्वावच्छिन्नं प्रति च प्रतिबन्धकं । एवञ्च पुरुषत्वव्याप्यकरादिमानयं स्थाणुत्वव्याप्यकोटरादिमानयमिति विरुद्धपरामर्शयोः सत्वे पुरोवर्तिना चक्षुःसंयोगे सति यथा अयं स्थाणुर्वा पुरुषो वेति संशयरूपप्रत्यक्षोत्पत्तिस्तथैव वह्निव्याप्यधूमवान्पर्वतो वन्ह्यभावव्याप्यजलवांश्चेति विरुद्धपरामर्शसत्वे पर्वतो वह्निमान्नवेति संशयाकारानुमितिर्जायत इत्यर्थः ।

ननु सर्वत्र संशयाकारानुमितिरेव स्यादित्यत आह .... यत्र चेति । यत्रैककोटिव्याप्यवत्ताज्ञानं तत्राधिकबलतया द्वितीयकोटिभानं प्रति तदभावव्याप्यवत्ताज्ञानकालीनतद्व्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वान्नसंशय इत्यर्थः । ननूभयभानं प्रत्युभयभासकसामग्र्याः कारणत्वमङ्गीकृत्य संशयाकारानुमित्यङ्गीकारे पीतत्वशुक्लत्वभासकपीतत्वशुक्लत्वोपस्थितौ पित्तादि दोषवशात् शङ्खः पीत इत्येककोटिप्रत्यक्षं न स्यादित्यत आह



—— फलबलेनेति । तत्र पित्तादिदोषस्याधिकबलतया शुक्लत्वादिभाने तस्य प्रतिबन्धकत्वाच्छङ्खः पीत इत्येव प्रत्यक्षमुदेति । एवमेव स्थाणुत्वपुरुषत्वयोः स्मृतौ दूरस्थत्वदोषे सति तत्सामग्र्योः समबलतया अयं स्थाणुर्वा पुरुषो वेति संशय एव जायत इति फलबलादधिकसमबलभावः कल्पनीय इत्यर्थः ॥ इति रत्नकोशकारमतम् ॥

[मुक्तावली]

तन्न । तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयाल्लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता लाघवात् । न तूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता गौरवात् । तथाच प्रतिबन्धकसत्वात्कथमनुमितिः । नहि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिः प्रामाणिकी येनानुमितिभिन्नत्वेनापि विशेषणीयं । यत्र च कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात्संशयो नान्यथा । अगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति ॥

(सुबोधिनी)

रत्नकोशकारमतं दूषयति .... तन्नेति । लौकिकसन्निकर्षजन्यतद्वत्ताबुद्धेः दोषविशेषजन्यतद्वत्ताबुद्धेश्च तदभावव्याप्यवत्तानिश्चयाप्रतिबध्यत्वेऽपि; अलौकिकसन्निकर्षजन्यतद्वत्ताबुद्धेः शाब्दबोधादेश्च तदभावव्याप्यवत्तानिश्चयप्रतिबध्यतया अलौकिकसन्निकर्षजन्यतद्वत्ताबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिश्चयत्वेनैकप्रतिबन्धकत्वं; शाब्दबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिश्चयत्वेनापरप्रतिबन्धकत्वकल्पने प्रतिबध्यप्रतिबन्धकभावद्वयकल्पनेन गौरवमिति लाघवात् लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धित्वावच्छिन्नं प्रति तद्भाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वम

भ्युपगन्तव्यम् । तथा चानुमितेः लौकिकसन्निकर्षाजन्यत्वेन दोषविशेषाजन्यत्वेन च निरुक्तप्रतिबध्यतावच्छेदकाक्रान्ततया तत्तदभावव्याप्यवत्तापरामर्शकाले नसंशयाकारानुमितिरित्यर्थः ।

ननु लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यानुमितिभिन्नतद्वत्ताबुद्धित्वावच्छिन्नं प्रति तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्व मुच्यतामित्यत आह .... नहीति । तदभावव्याप्यवत्तानिश्चयसत्वेऽपि लौकिकसन्निकर्षबलादन्यथा प्रत्यक्षमनुभूयते तथा तदभावव्याप्यवत्तानिश्चयसत्वे नानुमितिः प्रामाणिकीत्यतोऽनुमितिभिन्नत्वं नप्रतिबध्यतावच्छेदककोटौ निवेशनीय मित्यर्थः । विरुद्धपरामर्शस्थले संशयोऽनुभूयते तत्कथमित्यत आह— यत्रचेति।यत्रसाध्यतदभावव्याप्यवत्ताज्ञानयो रप्रामाण्यज्ञानंतत्राप्रामाण्यज्ञानानास्कन्दिततदभावव्याप्यवत्तानिश्चयरूपप्रतिबन्धकाभावात्पक्षः साध्यवान्न वेति संशयो जायत इत्यर्थः ॥

[मुक्तावली]

असिद्धि स्त्वाश्रयासिद्ध्या द्यन्यतमत्वं ॥

(सुबोधिनी)

असिद्धिलक्षण माह .... असिद्धिस्त्विति । आश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्ध्यन्यतमत्वं । तथाहि । अन्यतमत्वञ्च तद्भिन्नभिन्नत्वं । आश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्धिभिन्नं यद्घटादिकं तद्भिन्नत्वस्याश्रयासिद्ध्यादिषु सत्वाल्लक्षणसमन्वयः ॥

[मुक्तावली]

आश्रयासिद्धिः पक्षे पक्षतावच्छेदकाभावः । यत्र च काञ्चनमयः पर्वतो वह्निमानिति साध्यते तत्र पर्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमयपर्वते परामर्शप्रातिबन्धः फलम् ॥



(सुबोधिनी)

आश्रयासिद्धिस्वरूप माह ••• आश्रयासिद्धिरिति । पक्षनिष्ठपक्षतावच्छेदकाभावः; पक्षतावच्छेदकाभाववत्पक्षः पक्षतावच्छेदकाभावव्याप्यवत्पक्षश्च । काञ्चनमयपर्वतो वह्निमान्धूमादित्यत्र पक्षतावच्छेदकं काञ्चनमयत्वं; तथा च पर्वतनिष्ठकाञ्चनमयत्वाभावः; काञ्चनमयत्वाभाववत्पर्वतः; काञ्चनमयत्वाभावव्याप्यवत्पर्वतश्चाश्रयासिद्धयः । एतादृशाश्रयासिद्धिज्ञानं वह्निव्याप्यधूमवान्कांचनमयपर्वत इति परामर्शप्रतिबन्धक मित्यर्थः । इद मुपलक्षणं । एतादृशाश्रयासिद्धिज्ञानं कांचनमयपर्वतो वह्निमानित्यनुमिते रपि प्रतिबन्धकमिति बोध्यम् ॥

[मुक्तावली]

स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः तत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम् ॥

(सुबोधिनी)

स्वरूपासिद्धिस्वरूप माह — स्वरूपासिद्धि स्त्विति । स्वरूपासिद्धि र्नाम पक्षनिष्ठहेत्वभावः; हेत्वभाववत्पक्षः; हेत्वभावव्याप्यवत्पक्षश्च । ह्रदो द्रव्यं धूमादित्यादौ ह्रदनिष्ठधूमाभावः; धूमाभाववद्ध्रदः; धूमाभावव्याप्यवद्ध्रदश्च; स्वरूपासिद्धयः । एतद् ज्ञानं द्रव्यत्वव्याप्यधूमवान्ह्रद इति परामर्शप्रतिबन्धक मित्यर्थः ॥

[मुक्तावली]

साध्याप्रसिद्ध्यादयस्तु व्याप्यत्वासिद्धिमध्येऽन्तर्भूताः । साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः । एतत् ज्ञाने जाते कांचनमयवह्निमानित्यादौ साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानस्य परामर्शस्य प्रतिबन्धः फलं ॥

(सुबोधिनी)

साध्याप्रसिद्ध्यादीनामतिरिक्तहेत्वाभासानां सत्वात्तदप्रतिपादनेन न्यूनत्वं स्यादत आह — साध्याप्रसिद्ध्यादय इति। व्याप्यत्वासिद्धेरुक्तत्वेन तत्रैव साध्याप्रसिध्यादीनामन्तर्भावान्न न्यूनतेति भावः। साध्याप्रसिद्धिस्वरूपमाह — साध्य इति। साध्यनिष्ठसाध्यतावच्छेदकाभावः साध्याप्रसिद्धिरित्यर्थः। इदमुपलक्षणं। साध्यतावच्छेदकाभाववत्साध्यस्य साध्यतावच्छेदकाभावव्याप्यवत्साध्यस्य च साध्याप्रसिद्धित्वं बोध्यमिति। एतादृशसाध्याप्रसिद्धिज्ञानस्य फलमाह — एतत् ज्ञान इति। एतादृशसाध्याप्रसिद्धिज्ञानं कांचनमयत्वविशिष्टवह्निव्याप्यधूमवान्पर्वत इति परामर्शप्रतिबन्धकमित्यर्थः ॥

[मुक्तावली]

एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः। यथा कांचनमयधूमादित्यादौ। अत्र हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात्तद्धेतुकव्याप्तिज्ञानादेरभावः फलम् ॥

(सुबोधिनी)

साधनाप्रसिद्धिस्वरूपमाह — एवमिति। हेतुनिष्ठहेतुतावच्छेदकाभावः साधनाप्रसिद्धिरित्यर्थः। इदमुपलक्षणं। हेतुतावच्छेदकाभाववद्धेतोः हेतुतावच्छेदकाभावव्याप्यवद्धेतोरपि साधनाप्रसिद्धिरूपदोषत्वं बोध्यमिति। साधनाप्रसिद्धिस्थलं दर्शयति — यथेति। पर्वतोवह्निमान्कांचनमयधूमादित्यादौ धूमनिष्ठ कांचनमयत्वाभावः; कांचनमयत्वाभाववद्धूमः; कांचनमयत्वाभावव्याप्यवद्धूमश्च साधनाप्रसिद्धयः। एतादृशदोषज्ञानस्य प्रयोजनमाह ... अत्रेति। कांचनमयत्वाभाववान्धूम इति ज्ञाने कांचनमयत्वविशिष्टधूमे व्याप्तिज्ञानप्रतिबन्धः फलमिति भावः ॥



[मुक्तावली]

वह्निमान्नीलधूमादित्यादौ गुरुतया नीलधूमत्वस्य हेतुतानवच्छेदकत्वमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति ॥

(सुबोधिनी)

गुरुधर्मस्य हेतुतावच्छेदकत्वे व्याप्यत्वासिद्धिः। एतत्तत्त्व "व्याप्यत्वासिद्ध रपरा नीलधूमादिके भवेत्", इत्यत्र प्रदर्शयिष्यामः ॥

[मुक्तावली]

बाधस्तु पक्षे साध्याभावादिः। एतस्यानुमितिप्रतिबन्धः फलम्। तद्धर्मिकतदभावनिश्चयो लौकिकसन्निकर्षाजन्यदोषाविशेषाजन्यतद्धर्मिकतद्ज्ञानमात्रे विरोधीति ॥

(सुबोधिनी)

बाधस्वरूपमाह .... बाधस्त्विति। पक्षनिष्ठसाध्याभाव इत्यर्थः। आदिरित्यादिना साध्याभाववत्पक्षस्य परिग्रहः। बाधस्य प्रयोजनं दर्शयति .... एतस्येति। बाधस्थले प्रतिबध्यतावच्छेदकप्रतिबन्धकतावच्छेदके दर्शयति — तद्धर्मिकेति। एतत्तत्त्वं प्रागेवाभिहितम् ॥

[मुक्तावली]

ननु यत्र संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणं तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तम्। अप्रसिद्धसाध्यकानुमित्यनापत्तेः। साध्यसंशयादिकं विनाऽप्यनुमित्युत्पत्तेश्च ॥

(सुबोधिनी)

केषांचिन्मतमुपन्यस्यति .... नन्विति। अनुमितिं प्रति साध्यसंशयः सिषाधयिषाविशिष्टसाध्यनिश्चयो वा कारणं तत्प्रतिबन्धकज्ञानविषयतया बाधसत्प्रतिपक्षयोर्हेत्वा

भासत्वमिति केषांचिदाशयः । तद्दूषयति .... अप्रसिद्धेति । पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यत्र साध्यसंशयं सिषाधयिषां सिद्धिं विनाऽपीतरत्वव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीति परामर्शात्पृथिवी इतरभिन्नेत्यनुमित्युदयेन न पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणमिति भावः । साध्यसंशयादिकं विनापि सुप्तोत्थितस्य गृहमध्यस्थस्य घनगर्जितश्रवणेन मेघानुमितिदर्शनात् न साध्यसंसृष्टत्वज्ञानमनुमितिकारणमिति चाशयः ॥

[मुक्तावली]

**एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकम् माना भावाद्गौरवाच्च ॥**

(सुबोधिनी)

अनुमितिं प्रति पक्षविशेष्यकसाध्याभावप्रकारकनिश्चयधर्मिकप्रमात्वनिश्चयः प्रतिबन्धकस्तादृशनिश्चयविषयपक्षधर्मिकसाध्याभावप्रकारकनिश्चयनिष्ठप्रमात्वस्यैव बाधरूपदोषत्वमिति प्राचीनमतम् । तन्मतमुपन्यस्यति । ...एवमिति । ह्रदो वह्निमान्धूमादित्यत्र ह्रदो वह्न्यभाववानिति बाधनिश्चयोत्तरमिदं ज्ञानं प्रमा वा न वेति प्रामाण्यसंदेहे ह्रदो वह्निमानित्यनुमितिदर्शनेन; इदं ज्ञानं प्रमेति प्रमात्वनिश्चयोत्तरमनुमित्यदर्शनेन च ह्रदो वह्निमानित्यनुमितिं प्रति ह्रदो वह्न्यभाववानिति निश्चयः प्रमेति निश्चयः प्रतिबन्धकोऽनुमितिप्रतिबन्धकज्ञानविषयस्यैव हेत्वाभासत्वमिति ह्रदो वह्न्यभाववानिति निश्चयनिष्ठप्रमात्वस्यैव बाधरूपदोषत्वं न तु वह्न्यभाववद्ध्रदस्येति प्राचीनानामाशयः । प्राचीनमतं दूषयति .... मानाभावदिति । तद्वत्ताबुद्धित्वावच्छिन्नं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकतयौपपत्तिके तादृशप्रमात्वनिश्चयस्य तदभावायनवगाहित्वेन नानुमितिप्रतिबन्धकत्वं । तदभावावनवगाहिनिश्चयस्य तद्वत्ताबुद्धिप्रतिबन्धकत्वे मानाभावात्प्राचीनमतं नादरणीयमिति भावः ।

ननु ह्रदो वह्न्यभाववानिति ज्ञानं प्रमेति निश्चयसत्वे नानुमितिः प्रमात्वनिश्चयाभावे त्वनुमितिरित्यन्वयव्यतिरेकाभ्यामेव तादृशप्रमात्वनिश्चयस्यानुमितिप्रतिबन्धकत्वमित्यत आह — गौरवाच्चेति । तद्वत्ताबुद्धित्वावच्छिन्नं प्रति संशयनिश्चयसाधारणाप्रामाण्यज्ञानानास्कंदिततदभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वं । तथाच ह्रदो वह्न्यभाववानिति निश्चयः प्रमेति निश्चयसत्वे प्रमेति निश्चयस्याप्रमाण्यज्ञानात्मकतया अप्रामाण्यज्ञानानास्कंदिततदभाववत्ता निश्चयस्यैव सत्वेन तस्यैव प्रतिबंधकत्वं न तु तादृशप्रमात्वनिश्चयस्य गौरवादित्याशयः ॥

[मुक्तावली]

**अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः ॥**

(सुबोधिनी)

बाधनिश्चयविशेष्यकप्रमात्वप्रकारकनिश्चयस्यानुमितिप्रतिबन्धकत्वमभ्युपगम्य तद्विषयबाधनिश्चयनिष्ठप्रमात्वस्य बाधत्वाङ्गीकारे प्रतिबन्दिमाह... अन्यथेति । बाधनिश्चयनिष्ठप्रमात्वस्य बाधरूपत्वे ह्रदो वह्निमान्धूमादित्यत्र वह्न्यभावव्याप्यजलवद्ध्रदविषयकनिश्चयधर्मिकप्रमात्वनिश्चयस्याप्यनुमितिप्रतिबन्धकत्वमवश्यमभ्युपगन्तव्यतया तद्विषयसत्प्रतिपक्षविषयकनिश्चयनिष्ठप्रमात्वस्यापि सत्प्रतिपक्षरूपदोषत्वापत्तिरित्याशयः ॥

[मुक्तावली]

**किंतु भ्रमत्वज्ञानानास्कंदितबाधबुद्धेः प्रतिबन्धकतया तत्र भ्रमत्वशंकाविघटनेन प्रमात्वज्ञानं क्वचिदुपयुज्यते ॥**

(सुबोधिनी)

ननु तर्हि प्रमात्वनिश्चयस्य किं प्रयोजन मत आह .... किंचिति। संशयनिश्चयसाधारणभ्रमत्वज्ञानानास्कन्दितबाधनिश्चयस्यैव प्रतिबन्धकतया प्रमात्वज्ञाने सति भ्रमत्वज्ञान मपगतं भवतीति तादृशभ्रमत्वशङ्काविघटकतया उपयोग इत्यर्थः ॥

[मुक्तावली]

नच बाधस्थले पक्षे हेतुसत्वे व्यभिचारः पक्षे हेत्वभावे स्वरूपासिद्धिरेव दोष इति वाच्यम ॥

(सुबोधिनी)

बाधरूपदोषाभ्युपगम एवासंगत इत्याशंकते ... न चेति। वाच्यमिति परेणान्वयः । ह्रदपक्षकवह्निसाध्यकस्थले धूमस्य हेतुत्वे तादृशहेतोः ह्रदेऽसत्वात्स्वरूपासिद्धिरेव । द्रव्यत्वस्य हेतुत्वे तु तस्य साध्याभाववद्वृत्तित्वेन व्यभिचार आवश्यक इति न बाधरूप दोषोऽभ्युपगन्तव्य इत्याशयः ॥

[मुक्तावली]

बाधज्ञानस्य व्यभिचारज्ञानादे र्भेदात् । किञ्च यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादे रकिंचित्करत्वाद्बाधस्यानुमिति प्रतिबन्धकत्वं वाच्यम् ॥

(सुबोधिनी)

न चेत्याद्याशङ्कां निराकरोति — बाधज्ञानस्येति । बाधज्ञानस्य व्यभिचारज्ञानापेक्षया विलक्षणत्वेनानुमितिप्रतिबन्धकज्ञानविषयस्य बाधस्यापि दोषत्व मवश्य मभ्युपगन्तव्य मित्याशयः । बाधस्य दोषत्वाभ्युपगमे हेत्वन्तरमपि दर्शयति — किंचेति । ह्रदो वह्निमान्द्रव्यत्वादित्यत्र वह्निव्याप्य द्रव्यत्ववान्ह्रद इति परामर्शानन्तरं ह्रदो वह्न्यभा



ववानिति बाधनिश्चयसत्वे नानुमितिः । तादृशानुमितिप्रतिबन्धको न व्यभिचारनिश्चयः । व्यभिचारनिश्चयस्य व्याप्तिज्ञानं प्रत्येव प्रतिबन्धकत्वा दपितु बाधनिश्चयस्यैव तादृशानुमितिप्रतिबन्धकत्व मभ्युपगन्तव्यमिति तादृशनिश्चयविषयबाधस्य दोषत्वमावश्यकमित्याशयः ॥

[मुक्तावली]

एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यम् । न च पक्षे घटे गन्धसत्वात्कथं बाध इति वाच्यम् । पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति ॥

(सुबोधिनी)

बाधस्य दोषत्वे हेत्वन्तरमप्याह.... एवमिति । उत्पत्तिकालावच्छिन्नघटो गन्धवान्पृथिवीत्वादित्यत्र गन्धाभाववदुत्पत्तिकालावच्छिन्नघटस्य दोषत्वमवश्यमभ्युपगन्तव्यं । न ह्यत्र पक्षे हेतुसत्वे व्यभिचारः पक्षे हेत्वभावे स्वरूपासिद्धिरिति शङ्क्यम । व्यभिचारस्य पक्षाघटितत्वेन पृथिवीत्वे पक्षवृत्तित्वस्य गन्धव्याप्यत्वाभञ्जकत्वात् । न स्वरूपासिद्धिः संभवति पक्षे हेतुसत्वादतो बाधनिश्चयस्यैवानुमितिप्रतिबन्धकत्वमावश्यकमिति बाधरूपदोष आवश्यकः । निरुक्तस्थले बाध एव न संभवतीत्याशङ्कते-- न चेति । वाच्यमिति परेणान्वयः । घटरूपपक्षे गन्धरूपसाध्यस्य सत्वात्कथं बाध इति पूर्वपक्षाभिप्रायः । परिहरति--पक्षतावच्छेदकदेशकालावच्छेदेनेति । पक्षतावच्छेदकदेशकालावच्छेदेनानुमिते रनुभवसिद्धतया प्रकृते उत्पत्तिकालीनघटो गन्धवानित्यनुमिति जननेन तादृशानुमितिप्रतिबन्धकप्रमाविषयस्य गन्धाभाववदुत्पत्तिकालीनघटस्य बाधत्वमावश्यकमित्यर्थः ॥

[मुक्तावली]

बाधतद्व्याप्यभिन्नाः ये हेत्वाभासाः तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्ति । अन्यथा हेत्वाभासाधिक्यप्रसङ्गात् । बाधव्याप्यसत्प्रतिपक्षो भिन्न एव । स्वतन्त्रेच्छेन मुनिना पृथगुपदेशात् । सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रघट्टकार्थः ॥

(सुबोधिनी)

व्यभिचारव्याप्यादीनामतिरिक्तदोषाणां सत्त्वात्तदप्रतिपादनेन मूलस्य न्यूनत्वं स्यादित्यत आह — बाधतद्व्याप्यभिन्ना इति । बाधतद्व्याप्यभिन्नाः बाधसत्प्रतिपक्षभिन्ना इत्यर्थः । ये हेत्वाभासाः व्यभिचारविरोधासिद्धयः तद्व्याप्या अपि व्यभिचारविरोधासिद्धिव्याप्या अपि तन्मध्य एव व्यभिचारविरोधासिद्धिमध्य एवान्तर्भवन्तीत्यर्थः । तथा हि व्यभिचारव्याप्यस्य साध्याभाववद्वृत्तित्वव्याप्यवद्धेतोर्व्यभिचारमध्य एवान्तर्भावः । साध्यव्यापकीभूताभावप्रतियोगित्वव्याप्यवत्प्रकृतहेतोर्विरोधमध्येऽन्तर्भावः । पक्षतावच्छेदकाभावव्याप्यवत्पक्षस्याश्रयासिद्धावन्तर्भावः । हेत्वभावव्याप्यवत्पक्षस्य स्वरूपासिद्धावन्तर्भावः । पर्वतो धूमवान्वह्नेरित्यत्र धूमाभाववद्वृत्तित्वव्याप्यवद्वह्निरपि व्यभिचारमध्येऽन्तर्भवति । ह्रदो वह्निमान्धूमादित्यत्र धूमाभावव्याप्यवद्ध्रदस्य स्वरूपासिद्धावन्तर्भावः । शब्दो नित्यः शब्दत्वादित्यत्र नित्यत्वव्यापकीभूताभावप्रतियोगित्वव्याप्यवच्छब्दत्वस्य विरोधेऽन्तर्भाव इत्येव निष्कर्षः । निरुक्तव्यभिचारविरोधासिद्धिव्याप्यानां व्यभिचारादिभिन्नत्वमेवास्तामित्यत आह -- अन्यथेति । तेषां व्यभिचारादिभिन्नत्वे हेत्वाभासाधिक्यप्रसङ्गः स्यादिति तेषां तत्स्वरूपत्वमेवेत्यर्थः ॥

ननु तर्हि बाधव्याप्यस्यापि बाधरूपत्वमेवास्तां किमतिरिक्तसत्प्रतिपक्षरूपत्वमित्यत आह — बाधव्याप्येति । स्वतन्त्रेच्छेन मुनि-



नाऽक्षपादेन बाधव्याप्यमात्रस्य सत्प्रतिपक्षरूपतया पृथगुपन्यासात् सत्प्रतिपक्षमात्रस्य पृथग्दोषत्वम् ॥

ननु सत्प्रतिपक्षव्याप्यस्य कुत्र वान्तर्भाव इत्यत आह .... सत्प्रतिपक्षव्याप्येति । सत्प्रतिपक्षव्याप्यवत्ताज्ञानं नानुमितिप्रतिबन्धकमिति न तस्य हेत्वाभासत्वमिति निश्चितोऽर्थः ॥

[मुक्तावली]

**का ॥ यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ॥**

**मु ॥ यः सपक्ष इति । सपक्षविपक्षवृत्तिः साधारण इत्यर्थः । सपक्षो निश्चितसाध्यावान् । विपक्षः साध्यवद्भिन्नः । विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम् । वस्तुतो विपक्षवृत्तित्वमेव वाच्यम् । विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्य भिन्नतया तस्य पार्थक्यात् ॥**

(सुबोधिनी)

यः सपक्ष इतीति । सपक्षवृत्तित्वे सति विपक्षवृत्तित्वं साधारणहेतोर्लक्षणम् । सपक्षस्वरूपमाह.... सपक्ष इति । साध्यप्रकारकनिश्चयविशेष्यः सपक्ष इत्यर्थः । विपक्षस्वरूपमाह— साध्यवद्भिन्न इति । तथा च निश्चितसाध्यवद्वृत्तित्वे सति साध्यवद्भिन्नवृत्तित्वं साधारणहेतोर्लक्षणं पर्यवसन्नम् । तथा हि पर्वतो धूमवान्वह्नेरित्यादौ सपक्षो महानसादिः तद्वृत्तित्वस्य विपक्षोऽयोगोलकादिः तद्वृत्तित्वस्य च वह्निरूपहेतौ विद्यमानतया लक्षणसमन्वयः । सपक्षवृत्तित्वस्य किं प्रयोजनमित्यत आह.... विरुद्धवारणायेति । केवलविपक्षवृत्तित्वस्य शब्दो नित्यः कार्यत्वादित्यत्र कार्यत्वरूपहेतौ सत्त्वादतिव्याप्तिरतः सपक्षवृत्तित्वमपि साधारणलक्षणे निवेशनीयं । तथा च कार्यत्वरूपहेतोः सपक्षीभूतगगनादावसत्त्वेन न विरुद्धेऽतिव्याप्तिरिति भावः । विरुद्धेऽप्यनेन रू-

पेण सव्यभिचार एवेति चिन्तामणिकारोक्तेः साधारणलक्षणस्य विरु
द्धासाधारणत्वेऽपि न क्षतिरित्याशयेनाह.... वस्तुत इति । ननु सा
धारणस्य विरोधस्य चैकत्र समावेशे साधारणविरुद्धयोरैक्यं स्यादि
त्यत आह.... विरुद्धस्येति । साधारणस्थलीयदूषकताबीजस्य विपक्ष
वृत्तित्वस्य विरुद्धस्थलीयदूषकताबीजस्य साध्यव्यापकीभूताभावप्रति
योगित्वस्य च भिन्नत्वेन तत्तद्रूपेण तयोः पार्थक्यात् ॥

[मुक्तावली]

का ॥ यस्तूभयस्माद्व्यावृत्तः सचासाधारणो मतः ॥

मु ॥ यस्तूभयस्मादिति । सपक्षविपक्षव्यावृत्त इत्यर्थः । सपक्षः साध्य
वत्तया निश्चितः । विपक्षः साध्यशून्यतया निश्चितः । शब्दोऽनित्यः
शब्दत्वादित्यादौ यदा शब्देऽनित्यत्व सन्देहस्तदा सपक्षत्वं घटादी
नामेव तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम् । यदातु श
ब्देऽनित्यत्वनिश्चयस्तदा नासाधारण्यम् । इदन्तु प्राचां मतम् । न
वीनमतं पूर्वमुक्तम् ॥

(सुबोधिनी)

असाधारण लक्षण माह — यस्तूभयस्मादितीति । स्पष्टोर्थः ॥

[मुक्तावली]

का ॥ तथैवानुपसंहारी केवलान्वयि पक्षकः ॥

मु ॥ तथैवेति । सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वा
त्सामानाधिकरण्यग्रहस्थलांतराभावा न्नानुमितिः । इदन्तु न सम्य
क् । पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात् । अस्तु वा सह
चारग्रह स्तावताप्यज्ञानरूपासिद्धिरेव न हेत्वाभासत्वं तस्य ।
तथाऽपि केवलान्वयि साध्यकत्वं तत्वमित्युक्तम् ॥



(सुबोधिनी)

तथैवेतीति । अनुपसंहारित्वज्ञानस्य प्रयोजन माह .... सर्वमि
ति । केवलान्वयि पक्षकत्व मनुपसंहारिणो लक्षणं । सर्वमभि
धेयं प्रमेयत्वादित्यत्र सर्वस्यापि पक्षतया केवलान्वयी पक्षः, ता
दृशकेवलान्वयी पक्षः यस्येति केवलान्वयि पक्षकः तस्य भाव स्तत्वम् ।
तस्य प्रमेयत्वरूपहेतौ विद्यमानतया लक्षणसङ्गतिः । अत्र सर्वस्या
पि पक्षतया पक्षे साध्यस्य संदिग्धतया व्याप्तिग्राहक व्यभिचार
विरहसहकृत सहचारज्ञानसम्भवेन न व्याप्तिग्रह इति व्याप्तिग्रहप्र
तिबन्धकमनुपसंहारित्व ज्ञानम् ॥ तथाच व्याप्तिग्रहाभावे नैवानुमि
तिरित्यर्थः । एतन्मतं दूषयति —इदन्तु न सम्यगिति । पक्षतावच्छे
दकसर्वत्वावच्छेदेन व्याप्तिग्रहासंभवेऽपि पक्षतावच्छेदकाश्रये क्वचिदेव
साहचर्यज्ञानसंभवेन व्याप्तिग्रहस्य क्षतेरभावान्न व्याप्तिग्रहप्रतिबन्धकं
निरुक्तानुपसंहारित्वज्ञानमित्याशयः । यत्पक्षकयत्साध्यकयद्धेतुकस्थ
ले सहचाराग्रहः तद्धेतोर्हेत्वाभासत्वमिति न नियमोऽतः सहचाराग्र
हेऽपि हेतो न दुष्टत्वमित्याह.... अस्तु वेति । सहचारग्रहो मा
स्तु तावता हेतोर्न हेत्वाभासत्वं किंतु अज्ञानासिद्धिरिति तत्प्रयोक्तु
र्निगृहीतत्वमेवेत्याशयः । ननु तर्हि किं वानुपसंहारिलक्षणमित्यत
आह — केवलान्वयि साध्यकमिति । केवलान्वयि साध्यकत्व मनु
पसंहारिणो लक्षणम् । घटोऽभिधेयः घटत्वादित्यत्र घटत्वरूपहेतोर
नुपसंहारित्वं । तस्य केवलान्वयिसाध्यकत्वेन लक्षणसङ्गतिः । वस्तुत
स्तु अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । सर्वं मनित्यं प्रमेयत्वा
दित्यत्र सर्वस्यापि पक्षत्वेनान्वयव्यतिरेकदृष्टान्तराहितया प्रमेयत्वहेतुरनु
पसंहारी । पूर्वोक्तहेतुस्तु सद्धेतुरेवेति निष्कर्षः ॥

[मुक्तावली]

का ॥ यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७४

मु ॥ यः साध्यवतीति । एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावो बोधितः । तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ॥

(सुबोधिनी)

यः साध्यवतीति । नैवास्तीत्यत्रैवकारार्थमाह .... एवकारेणेति । तथा चोद्देश्यतावच्छेदकव्यापकत्वस्य विधेये भासमानतया उद्देश्यतावच्छेदकसाध्यव्यापकत्वं विधेयेऽभावे भासत इति फलितमाह .... तथा चेति । साध्यव्यापकीभूताभावप्रतियोगित्वं विरुद्धस्य लक्षणम् । शब्दो नित्यः कार्यत्वादित्यत्र साध्यम नित्यत्वं; साध्यव्यापकीभूतो योऽभावः कार्यत्वाभावः; तत्प्रतियोगित्वस्य कार्यत्वरूपहेतौ विद्यमानत्वाल्लक्षणसङ्गतिः ॥ ७४

[मुक्तावली]

का ॥ आश्रयासिद्धि राद्यास्या त्स्वरूपासिद्धिरप्यथ ।
व्याप्यत्वासिद्धिरपरा स्या दसिद्धि रत स्त्रिधा ७५
पक्षासिद्ध यत्र पक्षो भवेन्मणिमयो गिरिः ।
ह्रदो द्रव्यं धूमवत्त्वा दत्रासिद्धिरथापरा ॥ ७६ ॥
व्याप्यत्वासिद्धि रपरा नीलधूमादिके भवेत् ।

मु ॥ असिद्धिं विभजते । आश्रयासिद्धिरिति । पक्षासिद्धिरित्यर्थः । अपरेति । स्वरूपासिद्धिरित्यर्थः । नीलधूमादिक इति । नीलधूमत्वादिकं गुरुतया न हेतुतावच्छेदकं स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात् । धूमप्रागभावत्वसंग्रहाय स्वसमानाधिकरणेति ॥



(सुबोधिनी)

असिद्धे स्त्रैविध्यप्रदर्शनेनासिद्धहेतो स्त्रैविध्यं सम्भवतीत्याशये नाह .... असिद्धि विभजत इति । आश्रयासिद्धिः स्वरूपासिद्धिर्व्याप्यत्वासिद्धिरित्यसिद्धिस्त्रिविधेति भावः । अपरेत्यस्यार्थमाह — अपरेतीति । व्याप्यत्वासिद्धेर्लक्ष्यं दर्शयतीत्याह — नीलधूमादिक इतीति । पर्वतो वह्निमान्नीलधूमादित्यत्र व्याप्यत्वासिद्धिदोष इति केचन वदन्ति । तेषामयमाशयः । स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव हेतुतावच्छेदकतया प्रकृतेस्वपदग्राह्यनीलधूमत्वसमानाधिकरणव्याप्यतावच्छेदकधूमत्वघटितत्वेन न नीलधूमत्वं हेतुतावच्छेदकमिति नीलधूमत्वावच्छेदेन व्याप्त्यभावाद्व्याप्यभावावच्छेदकनीलधूमत्ववान्नीलधूमो व्याप्यत्वासिद्धिरिति । स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव हेतुतावच्छेदकत्वमित्यत्र स्वसमानाधिकरणेति व्यर्थमित्यत आह... धूमप्रागभावत्वसंग्रहायेति । स्वसमानाधिकरणेति विशेषणानुपादाने व्याप्यतावच्छेदकधर्मान्तराघटितस्येत्युक्तौ व्याप्यतावच्छेदकधूमत्वरूपधर्मान्तराघटिततया धूमप्रागभावत्वस्य व्याप्यतावच्छेदकत्वं न स्यादतस्तन्निवेशः । तन्निवेशे तु धूमत्वस्य धूमप्रागभावत्वासमानाधिकरणतया न धूमत्वं धूमप्रागभावत्वस्य व्याप्यतावच्छेदकत्वे भञ्जकमिति भावः । एतन्मत मनादरणीयमिति सूचयतुं पूर्वत्र वदन्तीत्यनेनास्वरसः सूचितः । स च संभवति लघौ धर्मे गुरौ तदभावादिति न्यायेन नीलधूमत्वस्य गुरुतया तस्मिन्स्वरूपसम्बन्धरूपव्याप्यतावच्छेदकत्वस्याभावेऽपि व्याप्यतानातिरिक्तवृत्तित्वरूपव्याप्यतावच्छेदकत्वस्यानपायाद्व्याप्यतावच्छेदकमेव नीलधूमत्वमिति न व्याप्यतावच्छेदकत्वाभावान्नीलधूमत्वामिति नीलधूमत्वस्य हेतुतावच्छेदकत्वे न व्याप्यत्वासिद्धिरिति ॥

[मुक्तावली]

का ॥ विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥ ७७ ॥

मु ॥ विरुद्धयोरिति । कपिसंयोग तदभावव्याप्यवत्तापरामर्शेऽपि न सत्प्रतिपक्षत्वमत उक्तं विरुद्धयोरिति । तथा च स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीन साध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः ॥

(सुबोधिनी)

विरुद्धयोरितीति । कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगव्याप्यैतद्वृक्षत्ववान्वृक्षः; कपिसंयोगाभावव्याप्यवां श्चेति परामर्शसत्वेऽपि हेतोर्न सत्प्रतिपक्षतेति तादृशस्थलीयहेतावतिव्याप्तिवारकतया विरुद्धयोरित्यस्य सार्थक्यमुपपादयति .... कपिसंयोगेति । तथा च कपिसंयोगतदभावयोर्विरुद्धत्वाभावेन न तद्विषयकपरामर्शयोर्विरुद्धविषयकत्वमतो नातिप्रसङ्ग इति भावः । मूलपर्यवसितलक्षणमाह.... तथा चेति । स्वं प्रकृतहेतुपरं ह्रदो वह्निमान्धूमादित्यादौ स्वपदेन धूमपरिग्रहे स्वसाध्यं वह्निः स्वसाध्यविरुद्धो यः साध्याभावः वह्न्यभावः तादृशवह्न्यभावव्याप्यवत्तापरामर्शः वह्न्यभावव्याप्यजलवान्ह्रद इत्याकारकपरामर्शः; तादृशपरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शः वह्निव्याप्यधूमवान्पर्वत इति परामर्शः तादृशपरामर्शविषयत्वस्य धूमे विद्यमानत्वाल्लक्षणसङ्गतिः । एतत्तत्वं दोषसामान्यलक्षणसमन्वयप्रस्तावे प्रपञ्चितम् ॥

[मुक्तावली]

का ॥ साध्यशून्ये यत्र पक्षस्त्वसौ बाध उदाहृतः ।
उत्पत्तिकालीनघटे गन्धादि र्यत्र साध्यते ॥७८॥

मु ॥ साध्यशून्य इति । पक्षः पक्षतावच्छेदकविशिष्ट इत्यर्थः । 

तेन घटे गन्धसत्वेऽपि न क्षतिः । एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम् ॥७८॥

*-इति-*

श्री वि श्व ना थ प ञ्चा न न भ ट्टा चा र्य वि र चि ता यां

न्यायसिद्धान्तमुक्तावल्यां अनुमानपरिच्छेदः

(सुबोधिनी)

बाधस्य स्वरूपे प्रतिपादिते तादृशबाधवत्त्वरूपबाधितलक्षणं ज्ञातुं शक्यत इत्याशयेन बाधस्वरूपं वक्तीति मूलमवतारयति — साध्यशून्य इतीति । पक्ष इत्यस्यार्थ मुपपादयति .... पक्ष इति । एतादृशार्थपरत्वे प्रयोजन माह .... तेनेति । तथा चोत्पत्तिकालीनघटो गन्धवानित्यत्र (पक्षे) घटे गन्धस्य सत्वेऽपि पक्षतावच्छेदकविशिष्टोत्पत्तिकालीनघटे गन्धाभावान्न बाधस्या नुपपत्ति रिति भावः । स्थलान्तर मपि दर्शयति .... एव मिति ॥

इति

श्री गौतमकुलाम्बुधिपूर्णचन्द्रेण वेङ्कटेश्वरशास्त्रिणः पुत्रेण
न्यायवेदान्तविद्यापारीणेन बुळसु अप्पन्न
(पेरेश्वर) शास्त्रिणा विरचितायां
सिद्धान्तमुक्तावली व्याख्यायां
सु बो धि न्या ख्या यां
अनुमानपरिच्छेदः

## अथोपमानपरिच्छेदः

[मुक्तावली]

का ॥ ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
साहश्यधी गवादीनां या स्या त्सा करणं मतम् ॥७९॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानान्तु शक्तिधीः सहकारिणी ॥८०॥

मु ॥ उपमितिं व्युत्पादयति ग्रामीणस्येति । यत्रारण्यकेन केनचिद्ग्रामीणंप्रत्युक्तं गोसदृशो गवयपदवाच्य इति पश्चाद्ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यदर्शनं यज्जातं तदुपमितिकरणम् । तदनन्तरं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः । तदनन्तरं गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुपमितिः । न त्वयं गवयपदवाच्य इत्युपमितिः । गवयान्तरेशक्तिग्रहाभावप्रसङ्गात् ॥७९॥८०॥

इति श्री विश्वनाथपञ्चाननभट्टाचार्यविरचितायां
न्यायसिद्धान्तमुक्तावल्यां उपमानपरिच्छेदः

(सुबोधिनी)

अवसरसङ्गत्या अनुमाननिरूपणानन्तर मुपमानं निरूपयितु माह .... उपमितिं व्युत्पादयतीति । अवसरसङ्गतिर्नाम प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या अवश्यवक्तव्यत्वम् । तथाहि अनुमानोपमानयोः प्रत्यक्षोपजीविकत्वेऽप्यनुमानस्य बहुवादि सम्मतत्वेन निरसंनीयत्वाद्यादिप्रतिबन्धकतया शिष्यस्यानुमानविषयकजिज्ञासोदेत्यतस्तन्निरूपणेन तादृशजिज्ञासानिवृत्तेः प्रत्यक्षोपजीवकं पुनः किमिति जिज्ञासासम्भवे नावश्यवक्तव्यत्वमुपमानस्य सम्भवतीत्यवसरसङ्गत्या अनुमाननिरूपणानन्तर मुपमाननिरूपणम् । प्राचामयमाशयः । आ



रण्यकपुरुषोच्चरितं गोसदृशो गवय इति यद्वाक्यं तज्जन्यो यः शाब्दबोधः स एवोपमानं । पश्चाद्वनं गतस्य तस्य पुरुषस्य गोसदृशपिण्डदर्शनेन या गोसदृशो गवय इति वाक्यार्थस्मृतिः सैव व्यापारः । तदनु जायमानगोसादृश्यप्रकारकपुरोवर्तिगवयविशेष्यकप्रत्यक्षं सहकारिकारणम् । ततो जायमानं गवयो गवयपदवाच्य इति ज्ञान मुपमितिः फल मिति । तद्दूषयितु माह — यत्रारण्यकेनेति । नवीनानामयमाशयः गवयोगवयपदवाच्यइति ज्ञानमेवोपमितिः । तत्रातिदेशवाक्यार्थस्मृतिरेव व्यापारः । आरण्यकवाक्यश्रवणानन्तरं वनं गतस्य यत्प्रत्यक्षात्मकं गोसदृशो गवयपदवाच्य इति ज्ञानं तदेव करणमिति । न तु प्राथमिकं शाब्दबोधात्मकं करणम् । तस्य कारणत्वकल्पनापेक्षयाप्राचीनमते सहकारिकारणतयाक्लृप्तस्य गोसदृशो गवयपदवाच्य इति प्रत्यक्षस्यैव करणत्वकल्पने लाघवादिति भावः ॥

केचित्तु अयं गवयपदवाच्य इति ज्ञानमुपमितिरिति वदन्ति । तद्दूषयति । न त्वयमिति । अत्रायमाशयः । शक्तिपरिच्छित्तिरूपाह्युपमितिः तद्ज्ञानं यद्ययं गवयपदवाच्य इति तदा पुरोवर्तिव्यक्तिविशेष एव शक्तिर्गृहीता स्यात् न तु निखिलगवयेष्वतो गवयो गवयपदवाच्य इत्येवोपमितिरभ्युपगन्तव्या तथा च गवयत्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकज्ञानेन निखिलगवयेषु शक्तिर्गृहीता भवतीति न काप्यनुपपत्तिरिति भावः ॥

इति श्रीगौतमकुलाम्बुधिपूर्णचन्द्रेण वेङ्कटेश्वरशास्त्रिणः शेषमांबायाश्च
पुत्रेण न्यायवेदान्तविद्यापारीणेन बुलुसु अप्पन्न (पेरेश्वर)
शास्त्रिणा विरचितायां न्यायसिद्धान्तमुक्तावलीव्याख्यायां
सुबोधिन्याख्यायां उपमानपरिच्छेदः पूर्वभाग स्समाप्तः

---

## शुद्धाशुद्ध पत्रिका ।

| पृष्ठ | पंक्तौ | अशुद्धम् | सुद्धम् |
|---|---|---|---|
| २ | ५ | परेश्वराऽहं | परेश्वराख्यः |
| ४ | २ | वक्तव्वा | वक्तव्या |
| | ६ | शिशूषा | शुशूषा |
| ५ | ३ | पुरुषाचरितत्व | पुरुषकर्तृकत्व |
| ६ | ५ | मङ्गल | मङ्गलं |
| | २४ | वीनापीति | विनापीति |
| ७ | १२ | व्यवस्थायाति | व्यवस्थापयाति |
| | २० | फलत्वस | फलत्वस्य |
| | २१ | लवदनिष्ट | लवदनिष्टानुबन्धी |
| ८ | १३ | ययभिचारः | व्यभिचारः |
| | १७ | मंरलस्य | मङ्गलस्य |
| | २४ | वि । | विघ्नो |
| ९ | ९ | त्वा व्यभि | त्वाद्व्यभि |
| | ११ | जन्ध | जन्य |
| ११ | २१ | विन्धवं | विघ्नध्वं |
| | २२ | सधनं | साधनं |
| १३ | १८ | सिध्यन्यत | सिद्ध्यन्यतर |
| | २३ | जन्यत्वस्येव | जन्यत्वस्यैव |
| १४ | १८ | तिमि | मिति |
| | २२ | कर्तृजन्य | कर्त्रजन्य |

| पंक्तौ | पृष्ठे | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| | २४ | विद्रवस्य | विश्वस्य |
| १९ | ४ | वाच्यति | वाच्यमिति |
| १६ | २ | सप्त | सप्तानां |
| | १३ | तवत् | त्वात् |
| | २० | वान्त र्भा | वान्तर्भा |
| २० | १५ | सम्भतति | सम्भवति |
| २१ | १६ | तमम: | तमस: |
| २४ | ९ | द्रवत्वं | द्रवत्वं |
| २५ | १ | पृथक्कर्माविकतया | पृथक्कर्म, अविकतया |
| | २ | कृतो | कुतो |
| २७ | १८ | स्याव्धा | स्याद्या |
| | १९ | मल्पदे | मल्लदेश |
| | २० | चान्यास | चान्यासां |
| २८ | १० | पापयति | पादयति |
| | १६ | तया | तथा |
| ३२ | ३ | ध्यापति | धापत्ति |
| | ४ | त्वेपि ऽ स | त्वेऽपि स |
| ३३ | १४ | प्रथमन्यो | प्रथममन्यो |
| | २३ | भावत्व | भावत्वं |
| ३४ | २२ | देरवा | देवा |
| ३६ | १४ | भानामन्ता | भावाना मनन्ता |
| | १९ | कल्प | कल्पन |



| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ३८ | १ | पदार्यानां | पदार्थानां |
| ४९ | १२ | सम्भवति | न सम्भवति |
| | १९ | महत्व | महत्वे |
| ५४ | ५ | तत्र—कार्ये | ––तत्र कार्ये |
| ५९ | १६ | महा — | मह |
| | १७ | वत्व | त्वत्व |
| ६१ | १२ | ल्लिष्ठतीति | तिष्ठतीति |
| ७४ | १५ | त्यत्वादिना | त्यक्त्वादिना |
| ७५ | १२ | रतो | रत: |
| | २२ | द्रव | गुरु |
| ७८ | ७ | रस. गन्ध: | रस: |
| ८० | १९ | ज्ञानेमह | ज्ञानसह |
| ८१ | १२ | दृष्टं | दृष्टं |
| ८४ | २१ | अत्र श्लोकोत्तरार्धोऽपगत: | षड्विधस्तुरसस्तत्र गंधस्तु द्विविधो मत: । |
| ९४ | १८ | धकत्वत्रा | धकत्वा |
| ९५ | ३ | वाच्यम् ष्ट | वाच्यं । क्ले |
| | ९ | मात्रे क्व | मात्रं |
| १०० | २० | मात्राव्यम् | मात्राभिव्यम् |
| १०४ | २१ | साधरणा | साधारणा |
| ११३ | ९ | जेजस्त्वं | तेजस्त्वं |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११४ | १० | भवांत | भवात् |
| | १५ | जैजसो | तेजसो |
| ११८ | १२ | परापृत्ति | परावृत्ति |
| ११९ | १४ | पात्रस्य | पात्रस्थ |
| १२१ | ३ | स्वरूपसिद्धि | स्वरूपासिद्धि |
| १२५ | १६ | त्युमक्ता | त्युक्तमा |
| १२६ | १ | प्राणा | प्राणो |
| १३१ | ४ | श ब द | शब्दा |
| | ७ | अयावद्र | अयावद्द्र |
| | १३ | भेकः | भेकः |
| १३२ | १७ | परिरपन्दा | परिस्पन्दा |
| १३३ | १७ | प्रत्याधिका | प्रत्यधिक |
| १३७ | १३ | स्वरूपायो | स्वरूपयो |
| | १६ | ङ्गाकारऽपिन | ङ्गीकारेऽपि ने |
| १३८ | ९ | अत्र श्लोकद्वितीयपादोपगतः | करणंहि सकर्तृकम् |
| १३९ | ३ | ज्ञतिः | क्षतिः |
| १४४ | १४ | आत्मत्व | आत्मत्वे |
| १४६ | २ | साव | सवि |
| १४८ | २३ | भावेपि | भावोऽपि |
| १५४ | ८ | नादोषा | न दोषा |
| १५६ | १३ | प्रातपादयं स्तात, | प्रतिपादयं स्तौति |



| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| १९१ | ९ | कलितं | फलितं |
| १९३ | २४ | प्रति | प्रतियो |
| १९८ | ९ | भूतला | भूतलादौ |
| | १३ | सम्बधनसामान्य | सम्बधेन सामान्यं |

अनुमानखण्डे ॥

| पृष्ठे | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|
| ९ | १६ | धूमस्य | धूमत्वस्य |
| १३ | ७ | त्तित्वात् | त्वात् |
| २२ | १६ | तद्वृत्य | तद्वृत्य |
| २९ | १७ | भाव ५ | भावाप्र |
| ३८ | २३ | विशेषणता | विशेषणा |
| ४२ | १२ | त्सामाध्यक | त्साध्यक |
| ४६ | ८ | प्रत्यक्षधूमा | प्रत्यक्षमवधृया |
| ४९ | ६ | षष्ठयर्थोऽनि | षष्ठयर्थोनि |
| ५३ | ९ | त्यन्ताप्र | न्तन्ताभावाप्र |
| | १२ | साध्यसा | साध्यासा |
| ६३ | १७ | पंचानांनां | पंचानां |
| ६४ | ५ | सवदन्यव | साध्यवदन्यवृ |
| ७६ | १२ | स्वहेतुत्वे | स्यहेतुत्वे |
| ८४ | २३ | सान्यते | साध्यते |
| ८९ | २ | कमिसंयोगि | कपिसंयोगि |
| | १२ | गन्धाभान्न | गन्धाभावान्न |
| ८६ | ४ | स्मृतिव्यार | स्मृति र्व्यापार |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६० | १५ | यो चैतन्य | यश्चैतन्य |
| १६१ | १९ | स्याताल्किः | स्यातात्विकः । |
| | २० | शरं त्रयं | रंशत्रयं |
| १६३ | १२ | भ्यावव | भ्यामेव |
| | १५ | अनित्यत्व | अनित्य |
| | २३ | अनदि | अनादे |
| १६५ | २ | मागा | भोगा |
| १६७ | २४ | इन्द्यत्व | इंद्रियत्वाव |
| १६८ | २१ | मनुतिः | मनुमितिः |
| १७० | १६ | वत्यन्त | वृत्यन्त |
| | २४ | रासनंच | रासनंचा |
| १७२ | १८ | पृथकत्व | पृथक्त्व |
| | २५ | यागयत्र | योग्यवृ |
| १७३ | ३ | प्रत्सक्ष | प्रत्यक्षे |
| १७४ | १३ | मात्रपि | मात्रापि |
| १७८ | १८ | रप्रत्यक्षं | रप्रत्यक्षत्वं |
| | १८ | परिहृतत्वं | परिहृतं |
| १७९ | १४ | का ॥ त्वचो | का ॥ द्रव्याध्यक्षे, त्वचो |
| १८० | ७ | कारणामित्य | कारणत्व मित्य |
| १८१ | ३ | विष | विशेष |
| १८५ | १६ | मनोग्राद्यं | मनोग्राह्यं |
| १८८ | २२ | कालादिं | कालादे |
| १८९ | २१ | द्रव्यास | द्रव्यस |
| १९० | २२ | चक्षू | चक्षुः |

महाराजपोषकाः

श्रीमत्परमहंसपरिव्राजकाचर्येत्यादि बिरुदावलीविराजमानश्रीश्रीश्री श्रीमदादिशङ्कराचार्याधिष्टितश्रीकांचीकामकोटिपीठाधिष्टितश्रीमच्चन्द्रशेखरेन्द्रसरस्वताश्रीपादाः । कुम्भकोणम् ॥

महाराजश्री । नडिपल्लिसुब्बराजाः, कोडूरुपाडु ॥

,, वामन् रामचन्द्नायकाः, हैद्राबादु ॥

,, वेल्लूरि रङ्गधामानः हैदराबादु ॥

,, श्यामापन्तुल गोपालरायाः कीर्तिशेषाः हैद्राबादु ॥

,, राजासाहेबु श्यामारावुहैपतिरायाः हैद्राबादु ॥

,, नागारेड्डि देशायिनः यल्लारेड्डि ॥

,, बूरुगु महादेवश्रेष्ठिनः सिकिंद्राबादु ॥

,, तुरकादिन्ने लक्ष्मारायाः तुरकादिन्ने नैजां ॥

,, सीतय्यराघवय्यरामय्याख्याः सिरिसिनगल्लघट्टु ॥

,, रावुसाहेबु चिदुरादूर्वासश्रेष्ठिनः सिकिंद्राबादु ॥

,, स्थानं नरसिंहरायाः नटराजाः तेनालि ॥

,, श्रीमति अमरार्चितात्मकूरुमहाराज्ञः अमरार्चितात्मकूरु ॥

,, चावलि वेंकटनरसिंहशास्त्रिणः यं यस्, के, मिल्लु मेनेजरु ॥

राजपोषकाः ॥

श्रीमत्परमहंसपरिव्राजकेत्यादि बिरुदावलीविराजमान श्रीजगद्गुरु पुष्पगिरि पीठस्वामिनः ॥

महाराजश्री । श्रीलक्ष्मीनृसिंहस्वामि देवस्थानधर्माधिकारिणः भास्कररायुनि सीतय्याख्याः ॥ यादगिरिवट्टु ॥

,, ज्योतिर्विद्वच्छिरोमणि अनन्तुनि सीतारामसिद्धांतिनः सिंगपल्लि
,, सिद्धांति रामय्यसिद्धांतिनः कलकोंड ॥ [मक्तेदारु ॥
,, मंगिपूडि चिनगवरप्पाख्याः व्याघ्रेश्वरम् ॥
,, गुमिडेल्लि अनन्तपद्मनाभश्रेष्ठिनः मुम्बायि ॥
,, नेरवेट्ल नारसिंहारेड्डिलक्ष्मारेड्डिसोदरौ भैरापुरं ॥
,, श्रीमान् तिरुमल तिरुपति कोयल् कंदाडैअप्पन् बुच्चिवेंकटाचार्याः
,, डि, रामचन्द्रारेड्डिनः न्ययवादी तलकोंडपल्लि ॥
,, गूडा गोपय्याख्याः चुक्कापुरं ॥
,, पराजितं राघवशास्त्रिणः इन्द्रकल् ॥
,, बोड्डुपल्लि वेंकटरायाः देशमुखु आमनगल्लु ॥
,, परशु सीतारामय्य शेषगिरिरायौ सिङ्गरेणिकालरीयस् ॥
,, पलिवेल शेषगिरिरायाः कलकोट ॥
,, नरोत्तमदासु कु ॥ मधुसूदनदासाख्याः सिकिन्द्राबादु ॥
,, वङ्गपकीरय्याख्याः एगडवेट्ल ॥
,, कस्पा यादगिरिरामचन्द्ररायाः कोण्डारेड्डिपल्लि ॥
,, ओरुगंटि कृष्णय्याख्याः आलूरु ॥
,, पल्लुनूरि सत्यनारायणरायाः जागीरुदारु देशपांड्या देवत्पल्लि ॥
,, कीर्तिशेषाः सिरियाल वीरय्यश्रेष्ठिनः महबूबुनगरम ॥
,, माडगिरि नारायणरायाः हैकोर्टुन्यायवादिनः महबूबुनगरम् ॥
,, सत्तूरि रामन्नाख्याः महबूबुनगरं ॥
,, वेंकटरायाः टङ्कर ॥
,, बुर्रा सुब्रह्मण्यशास्त्रिणः सिकिंद्राबादु
,, पुराण सुब्रह्मण्याख्याः सिकिंद्राबादु ॥



,, श्यामापन्तुल वेंकटेश्वररायाः हैदराबादु ॥
,, निमिषकवि वेंकय्याख्याः मोडेकुरु ॥
,, शीलं वेंकटरेड्डिनः मदनापुरं ॥
,, सुरवरपु रङ्गारेड्डिनः क्यातूरु ॥
,, सन्निधानं सूर्यनारायणशास्त्रिणः महबूबु पाठशालोपाध्यायः सि
,, आर्, शङ्करशास्त्रिणः आयुर्वेदभिषग्वर्याः सिकिन्द्राबादु [सिकिंद्राबादु
,, पालपर्ति सीतारामरायाः खैरताबादु पटुवारि हैदराबादु ॥
,, बालकोटि गोविन्दरायाः बंदोबस्तु मदद्गारु काचगूड हैदराबादु
,, पण्डित अम्बदासुरायाः हैकोर्टुन्यायवादिनः हैदराबादु ॥
,, रायप्रोलु सुब्बरायाः उस्मानियाकालेजीप्रोफेसर् हैदराबादु ॥
,, दण्डु आगय्यश्रेष्ठिनः सिकिंद्राबादु ॥
,, कालेरु श्रीरामाः सिकिंदराबादु ॥
,, पोतनकु नारायणय्यरामाजी सोदरौ एदुलाबादु ॥
,, धात्रि नारायणाः मेडिचलम ॥
,, गोविन्दनायकवासुदेवनायकौ हैदराबादु ॥
,, शिरिप्रगड रामारायाः बाचेल्लपल्लि ॥
,, सरिपेल्ल विश्वनाथशास्त्रिणः हैदराबादु प्रोफेसर् उस्मानियाकालेजी ॥
,, श्रीमदुभयवेदांतप्रवर्तक कोयल् अप्पन् श्रीरङ्गाचार्याः हैदराबादु ॥

पोषकाः ।

महाराजश्री । कीर्तिशेषाः कोल्लूरि वेंकटरत्नश्रेष्ठिनः पल्लंकुरु ॥
,, वैदुयल वेंकटरामाः वेंकटपेट ॥
,, रामचन्द्ररायाः मक्तेदारु अचितवोलु ॥

,, घेमुल नरसिंहाख्याः सन्तवरं ॥
,, श्रीपाद नृसिंहाख्याः काकिनाड ॥
,, श्री श्री श्री गोस्वामि गोकुलनाधूजी महाराजा मुम्बायि ॥
,, चल्ला सुब्रह्मण्याभिधेयाः नरेंद्रपुरं ॥
,, आकेल्ल सूर्यनरायणमूर्तयः नरेंद्रपुरं॥
,, जयंतिरामय्यपंतुलु नमानः मुक्तेश्वरं रिटैर्ड् कलेक्टर् ॥
,, ताता कामेश्वरशर्माणः गङ्गलकुर्त्यग्रहारं ॥
,, चल्ला सुब्बरायाः भीमलपुरं ।
,, उप्पुलूरि देवन्न नामानः न्यायवादिनः केशनकुरु ॥
,, अनिविंडि वेंकटरायाः न्यायवादिनः अमलापुरं ॥
,, बुलुसु प्राकाशशास्त्रिणः न्यायवादिनः अमलापुरं
,, दुव्वूरि रामसोमयाजिनः न्यायवादिनः अमलापुरं ॥
,, गूडा सत्यहरिश्चन्द्रनामानः न्यायवादी अमलापुरं ॥
,, दुरिशेटि चिदम्बररायाः कीर्तिशेषाः सबूजड्जी अमलापुरं ॥
,, पप्पु मल्लिखार्जुनरायाः मेजर्स्ट्टु अमलापुरं ॥
,, रेकपल्लि वझुलु नामानः न्यायवादिनः अमलापुरं ॥
,, उप्पुलूरि भीमशङ्करशास्त्रिणः न्यायवादिनः काकिनाड ॥
,, बुद्धवरपु महादेवाः न्यायवादिनः रामचंद्रपुरं ॥
,, दुव्वूरि पेरय्यनामानः रामचंद्रपुरं ॥
,, शुक्कविल्लि वेंकटनारायणाः न्यायवादिनः रामचंद्रपुरं ॥
,, तोलेटि कनकराजाः डाक्टरु रामचंद्रपुरं ॥
,, दाशिक सूर्यनारायणाः बेजवाड ॥
,, जंध्याल बालसीतारामकृष्णशास्त्रिणः बेजवाड ॥
,, पालमर्ति रामब्रह्माणः बेजवाड ॥



,, राववहद्दूरु मोते गङ्गराजु श्रेष्ठिनः जमीन्दारु एल्लूरु ॥
,, यातवाकिल्ल बलरामय्यनामानः खम्मम्
,, चिर्राट्ट शेषय्यनामानः अग्रहारीकाः कोत्तगूडें ॥
,, एन्नूतल गोपालरायाः अरेकायलपहाडु ॥
,, वेलमूरि नागभूषणाः सिंगरेणि कालरीयस् ॥
,, पोलिशेट्टि स्वामिनायडुनामानः गूडाल ॥
,, श्रीमति बुर्रा लक्ष्माम्बाः डाक्टरु गद्वाल ।
,, कोवूरु लक्ष्मीकांतनामानः पेदकोत्तपल्लि ॥
,, रामरायाः मक्तेदारु नारायणपल्लि ॥
,, रामारेड्डिनामानः न्यायवादी कल्वकुर्ति ॥
,, के, वेंकय्याख्याः न्यायवादिनः कल्वकुर्ति ॥
,, तोटपल्लि वेंकय्यदीक्षिताः अग्रहारीकाः ॥
,, भीमसेनरायाः वेमुल ॥
,, टि, मल्लय्यनामानः नागरकर्नूलु ॥
,, इरुवेन्नु वेंकटरायाः अंदुगुल ॥
,, की ॥ शे ॥ दोंतु जानय्यश्रेष्ठिनः आमनगल्लु ॥
,, राघवेंद्ररायाः देशपांड्याः आल्लूरु ॥
,, नरसिंहारायाः देशपाण्ड्याः आल्लूरु ॥
,, माडुगुल लक्ष्मय्यनामानः नन्दिगाम ॥
,, तिप्पर्ति नारायणरेड्डिनः ताटिकोंड ॥
,, मंत्रि नारायणरायाः व । सीतारामरावु कलकोट ॥
,, जन्नु चन्द्रय्यानां कुरमय्यनामानः महबूबुनगरं ॥
,, नूकल चंद्रय्यश्रेष्ठिनः महबूबुनगरं ॥
,, वि, राघवशास्त्री ,,

,, पर्लैल कृष्णाः कीर्तिशेषाः
,, मैलपुरं रामय्यश्रेष्ठिनः अंडुसन्नु ॥ ,,
,, राचमल्ल गङ्गय्य, कलकोंडलक्ष्मय्यनामानौ ॥ ,,
,, गंधं नारायण, कलकोंड रामचन्द्रय्यनामानौ ,,
,, शङ्कर विठलरायाः ,,
,, ताडुदारि वीरप्प नामानः ,,
,, श्रीम दुभयवेदांतप्रवर्तक,, बलमूरि वरददीक्षिताः, बळमूरु
,, श्रीचिन्ननारायणाचार्याः, अय्यवारिपल्लि
,, पेंड्याल शेषय्यनामानः, सिकिंद्राबादु
,, वैदिकधर्मबोधिनी सभाकार्यदर्शिनः चिवुकुल अप्पय्यशास्त्रिणः
,, बलदेवदासु पञ्चनन्ददासाः सिकिंद्राबादु ॥
,, रामदेवु शर्माकिशोरमिश्राः ॥
,, नागं श्रीरामाः ॥ ,,
,, भास्करभोट्ल चल्लय्यनामानः ॥ ,,
,, लिङ्गा वीरन्नश्रेष्ठिनः ॥ ,,
,, श्रीमान् कांडूरि यामुनाचार्याः ॥ ,,
,, जोन्नाभोट्ल कोटय्यनामानः ॥ ,,
,, चिन्तपल्लि तिरुमलरायाः चिन्तपल्लि ॥
,, पसनूरि नारायणरायाः मक्तेदारु मल्लायिपल्लि ॥
,, राघवाचार्याः (आयुर्वेदविशारद) राचूरु ॥
,, मन्दुमुल सीतानम्न्दः देशमुख दोरसानि इरुवेन्नु ॥
,, चिंतपल्लि वेंकटेश्वररायाः चिंतपल्लि ॥
,, गुंटूरि सत्यनारायणरायाः सिकिंद्राबादु ॥
,, जकराजु वासुदेवय्यनामानः ,,



,, यिपिरिक नरसिंह गङ्गा राघवश्रेष्ठिनौ ॥ ,,
,, वै, एल, सत्यनारायणनामानः ॥ ,,
,, एस् रामकृष्णय्यनामानः ॥ ,,
,, तेलुकुंट बालकृष्णय्यश्रेष्ठिनः ॥ ,,
,, यंड्र लक्ष्मीपति कोट्टूरु शायन्ननामानः ॥ ,,
,, चिवुकुल वेंकटसुब्बय्यनामानः ॥ ,,
,, माशेट्टि वेंकन्न कु ॥ हनुमय्यश्रेष्ठिनः न्यायवादिनः ॥ ,,
,, लोकुल वेंकन्न लक्ष्मय्यनामानौ ॥ ,,
,, चेंद्रा माणिक्यं नामानः ,,
,, अम्मनबोलु वीरन्न विश्वनाथ नामानौ ॥ ,,
,, कोटि मल्लेसु शिवराजय्यनामानौ ॥ ,,
,, अम्मनबोलु वीरन्न रामलिंगं श्रेष्ठिनामानौ ॥ ,,
,, मंचिकंटि वेंकय्यनामानः ॥ ,,
,, रेवेल्ल मल्लय्यश्रेष्ठिनः ॥ ,,
,, नागेल्ल दुर्गय्यनामानः ॥ ,,
,, चतुर्वेदुल माणिक्यरायाः ॥ ,,
,, कंचर्ल जानकिरामय्यनामानः ॥ बोंबायि ॥
,, सर्वदेवभोट्ल वासुदेवरायाः एं बि बि एस् डाक्टर लातूरु ॥
,, मोतुकूरिवेंकय्यशास्त्रिणः येदुलाबादु ॥
,, अङ्गर सिङ्गराचार्याः भिषग्वर्याः चेयेरु ॥
,, श्रीमति अम्मागीअम्माळ कीर्तिशेषिणी हैद्राबादु चिदानन्दमठं
,, रङ्गस्वामय्यरुनामानः हैदराबादु दक्कन्
,, मुदिगोण्ड मल्लिखार्जुनशास्त्रि, नन्दयशास्त्रिणौ हयिदराबादु ॥
,, एम, डि, गाड्जेल् नामानः हैदराबादु ॥

पोषकाः

„ दत्तात्रेय पिषोल्करुनामानः हैदराबादु ॥

„ गोरुगन्तु अक्कुभोट्लु नामानः नरेंद्रपुरम् ॥

„ शतावधानि नेमल्लूरि वेंकटशास्त्रिणः वनपर्ति संस्थानं ॥

„ चिन्तपल्लि रामस्वामिशास्त्रिणः वड्डे ॥

„ मन्त्रवादि जोगयशास्त्रिणः अच्युवारिपाल्लि ॥

„ कृष्णारेड्डिनः मिडिजिल्ल ॥

सहायकर्तारः

कोडूरुपाडुग्रामवासिनः—— महाराजश्री पेरि नरसयाख्याः ॥ " कंचिनाथं सूर्य नारायणाः ॥ „ वङ्कसूर्यप्रकाशाः ॥ „ वङ्कराम मूर्तिशास्त्रिणः ॥ „ बंक वेंकटरायाः ॥ „ मङ्गिपूडि महालक्ष्म्यः ॥

तोंडवरग्रामनिवासिनः— „ वेंपराल चिनसुब्रह्मण्यशास्त्रिणः ॥ „ वें साम्बशिवशास्त्रिणः ॥ „ वें.... सत्यनारायणशास्त्रिणः ॥ वें सूर्यनारायणशास्त्रिणः ॥ „ वें... कोदण्डरामसिद्धान्तिनः ॥ „ वें... चिंतामणयः ॥ वें....नरसिंहाः ॥ कम्भम्पाटि नीलकण्ठाः ॥ वङ्क सुब्रह्मण्याः ॥ वं....विश्वनाथशास्त्रिणः ॥ देवरकोंड वेंकट्रामशास्त्रिणः॥ आकेल्ल अच्चन्नावधानिनः॥ आ....वेंकटशास्त्रिणः॥ आ..सुब्बावधानिनः॥ कोल्लूरु चलमयनामानः ॥ भिषग्वर्य गोल्लि शेषयनामानः ॥

अंबाजीपेट निवासिनः ॥ म ॥ रा ॥ श्री ॥ भमिडिपाटि तम्मप्पशास्त्रिणः ॥ „ भ नृसिंहशास्त्रिणः ॥ „ कविवरपु सूर्यनारायण „ बेहरा गोपालकृष्णाः ॥ „ मुष्टि जोगन्ननामानः ॥ „ वड्लमानि वेकट्रामशास्त्रिणः ॥ „ शेट् बन्सीलाल् श्रीनारायणाः ॥ „ वेदुळ्ळपल्लि सत्यनारायणाः ॥ „ गोकवरपु जगन्नाथनामानः ॥ „ मेडिदि रामन्ननामानः ॥

नन्दम्पूडि ग्रामवासिनः नूकल अम्मन्ननामानः ॥ „ वड्लमानि सूर्यनारायणाः ॥ मुंजारपु कोट्टु ॥ अप्पनकृष्णब्रह्मं कृष्णमूर्तिनामानौ ॥ अप्पन पद्मनाभाः॥ अप्पनबुच्चिराजाः । बेंडाड सुब्बरायाः ।

